तृतीय प्रति

॥ श्रीः ॥

आयुष्मान् विद्योपासको वेदानुसन्धाता श्री अहिबरन सिंहः कुशवाहः, "वैदिकी शिल्पदेवता विश्वकर्मा" इत्यारभ्यमिमं शोध प्रबन्धं मन्निर्देशे भूरि परिश्रमेण स्वयं लिखितवान् ।

कार्येणास्य सन्तुष्टः सन् "विद्यावारिधिः" इत्युपाधि सम्प्रदानं समर्पितं व्यवस्थार्थं संस्तौति - निर्देशकः -

श्रीकृष्णदेवः

1-11-63

अग्रे सारयति
श्रीगोपालचन्द्रमिश्रः
1.11.63

वेदविभागाध्यक्षः
वाराणसेय संस्कृत-विश्वविद्यालयस्य.

T.Q/58

वाद )

॥ श्रीः ॥

# वैदिकी शिल्पदेवता विश्वकर्मा

वाराणसेयसंस्कृतविश्वविद्यालयीय विद्यावारिधिः ( पी-एच॰ डी॰ )

इत्युपाध्युपलब्धये प्रस्तुतः शोध-प्रबन्धः

[ सम्वत् २०३० ]



निर्देशकः

श्री डॉ॰ श्रीकृष्णदेवो महाशयः

वेदाध्यापकः

वाराणसेय संस्कृतविश्वविद्यालयस्य

वाराणसी

अनुसन्धाता

श्री हवरनसिंह कुशवाहः

एम॰ ए॰

प्रवक्ता ( संस्कृत )

महात्मा गान्धी इण्टर कालेज

मढ़पुरा ( फर्रुखाबाद )

श्रीगणेशाय नमः ।।  श्री सरस्वत्यै नमः ।। श्रीसद्गुरुभ्यो नमः ।।

## समर्पणम्

विश्वद्रष्टा विश्वकर्मा वैदिकी शिल्पवेत्ता ।
समर्पयामि कृष्णाय, गुरवे (च) श्रमकारिणे ।।

- अछिबरनसिंह कुशवाह:

-----00-----

## प्रार्थना

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ।।

-(ऋ०७।२।९)

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ।।

-( ऋ० १०।८१।६)।

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ।।

-( ऋ०१०।८२।३ )।

----००----

## इष्टदेवतावन्दनम्

लम्बोदरौ यौ विद्याभ्यां विघ्नेभ्यश्च करिकर:।
श्रुतिभ्यां गजकर्णौ च:, शोधाय आखुवाहन:।। १।।
सिद्धिशीला स्मृतिर्यस्य, दर्शनं ज्ञानमुक्तिदम् ।
नमस्तस्मै गणेशाय, प्रबन्धसिद्धिहेतवे ।। २।।
ज्ञानाय गणेशोऽभूद्, रिपुभ्यश्च षडानन: ।
याभ्यां शिवरूपाभ्यां वन्दे तं तां सह हेतवे ।। ३।।
यं स्मरति शिवो नित्यं तारयति च भवान्नृम् ।
विश्वं हरति च आश्रित्य, तस्मै श्रीपतये नम: ।। ४ ।।
वेदवेदाङ्गतत्त्वज्ञम्, जनत्वेन प्रचारकम्।
कौसलेशं रमेशं च , वन्दे रणश्रमदेवताम् ।।। ५ ।।
विद्यारूपं हि ग्रन्थं या, वीणां सङ्गीतरूपिणीम् ।
ज्ञानरूपञ्च हंसं वै, धत्ते, वन्दे हं भारतीम् ।। ६ ।।
यो जनिता पिता धाता रूपकर्ता च धामवित् ।
गुरवे श्रमविद्यानां, नमो स्तु विश्वकर्मणे ।। ७।।
मदान्धं मोहसंश्लिष्टम् , ज्ञाननेत्रं हरिकृतम् ।
येनोन्मेषितं कृपया, तस्मै श्री गुरवे नम:।।८।।
येन सृष्टं जगत्सर्वं, भवति च येन पालितम् ।
यस्याभावे याति नाशं, नमस्यो वै हि तच्छ्रम: ।। ९।।

अनुगृहीतो गुरुणा भवार्णवे,
प्राप्तप्रसादश्च श्रमदेवताया: ।
प्रयाति पारं मतिमन्द: कृशो वै ,
शरणे तो यं कृतभक्तिसम्बल: ।। १० ।।

-----oo----

# शोधग्रन्थे विविक्त विषयानुक्रमणी

| अध्यायः | विषयः | पृ०सं० |
|---|---|---|
| प्रथमोऽध्यायः | वैदिकदेवतानां स्वरूपकर्मविमर्शः | २७-२३४ |

अत्र विविक्ताः विषयाः ---

आदौ वैदिकदेवानां स्वरूपकर्मविवेचनस्य आवश्यकता

वैदिक देवसमाजः

देवानां वर्गीकरणानि ---

(अ) नामसूक्तसंख्यानुसारम् (ब) वासभेददृष्ट्या वर्गीकरणम्

(स) अस्तित्वविविधभेदात् वर्गीकरणम् (द) गुणवाचकं वर्गीकरणम् (य) गुणकर्मानुसारं वर्गीकरणम्

द्युस्थानीयाः देवाः --

आदित्यगणः --

आदित्यपदस्य विशेषणत्वम्, आदित्यानां संख्या

आदित्यनामगुणाः, आदित्यकर्माणि

धाता---

अस्यस्तुतिः, आवासः सम्बन्धश्च, स्वरूपः कर्माणि, व्युत्पत्तिः

अर्यमा --- स्तुतिस्थितिः, रथवर्णनम् , पन्थाः, कर्मनिरूपणम्, नानामतानि, व्युत्पत्तिः,

मित्रावरुणौ---- एकत्रवर्णनस्य औचित्यम्, मन्त्रसूक्तसंख्या, पितरौ, आवासाः, एतयोः आतिशयपदार्थादीनां वर्णनम्, स्वभावः, सम्बन्धाः, रूपम्, मानवत्वारोपणम्, आयुधवर्णनम्, मित्रकर्माणि, वरुणकर्मवर्णनम्, मित्रावरुणकर्माणि, इन्द्रा-वरुणकर्माणि, वरुणस्य गुप्तचराः, अनयोःस्वरूपविचारः, वरुणादित्यत्वम् , मित्रस्यादित्यत्वम्, द्वयोरपि व्युत्पत्तिः,

इन्द्रः --- मंत्रसूक्तसंख्या, विद्युत्त्वमादित्यत्वञ्च, पितरौ, इन्द्रस्य प्रादुर्भावः, इच्छावपुः इन्द्रः, मानवत्वारोपणम्, रूपपुष्टिः देवैः, अर्चनसामर्थ्यः, अजरोऽमरश्च, उग्रोऽयं शान्तस्पः यशस्वी, आवासाः,गतिः, सेविकाः, सम्बन्धाः, सहायकाः,

अध्याय:    विषय:    पृ०सं०

अध्याय: विषय: पृष्ठां०

बृहस्पति: -- पूर्वसंख्या, रथास्समानवत्यादिवर्णनम्
गृहपिता, देवमर्त्यप्रकाशक:, मवर्णनम्, कर्मविवेचना, स्वरूपविचार:,
मृगुगण:-- उत्पत्तिविचार:, कार्याणि, व्युत्पत्ति: ।
ऋभुगण: -- ऋभूणां नामानि, सम्बन्धा:, उद्योगेन अमरत्वप्राप्ति:,
धनुर्धनुनादीनां लाभाय स्तुति:, कार्याणि, स्वरूपविमर्श:,
व्युत्पत्ति: ।
सोम: -- पूर्वसंख्या, सोमव्यञ्जकानि पदानि, अस्यगुणा:, सोमस्य-
त्रिविधिता, सोमवर्णा:, सोमविधि:, स्वत्यादिभेदै: नामानि,
प्राप्तिस्थानानि, नायं मद्यनाख्य: पेय:, कार्याणां ख्याति:,
स्वरूपविचार:, व्युत्पत्ति:।
पृथिवी --- श्रुतिस्थिति:, अस्या: महत्त्वम्, प्रमाणशीलानन्ता पृथिवी
धेनुरूपा पृथिवी, अग्निना सह सम्बन्ध:, देवचेतना स्था, द्यौ पति,
माता पृथिवी।
आप: -- अपां भेदा:, सामान्यवर्णनम् ।
पर्जन्य: -- वर्णनशक्ति: मित्रावरुणादीना, कर्मस्थानम्,
मूर्तिकरणम्, स्वरूपविचार:, व्युत्पत्ति: ।

द्वितीयोऽध्याय: विश्वकर्मण: स्वरूपविमर्श: २३५-२५२

त्वष्टृविश्वकर्मशब्दयो: विशेषणत्वम्, त्वष्टु: नानार्थेषु प्रयोग:
विश्वकर्मपदस्य नानार्थेषु प्रयोगो व्युत्पत्तिश्च, त्वष्टृविश्वकर्मणो:
एकार्थकत्वम्, विश्वकर्मण: सृष्टिकर्तृत्वम्, वेदपुराणोक्तविश्वकर्मणो:
एकत्वम्, न दार्शनिककल्पितवर्गव्यञ्जको विश्वकर्मा, परमेश्वरोविश्व-
कर्मा, सृष्टा विश्वकर्मा शिल्पिजाति:, सम्बन्धमीमांसा, पुनो विश्वरूप:,
सर्वधन्यांशात्मको विश्वकर्मा ।

------००------

## आमुखम्

धाता रातिः सवितेदं जुषन्तामिन्द्रस्त्वष्टा प्रति हर्यन्तु मे वचः ।
हुवे देवीमदितिं शूरपुत्रां सजातानां मध्यमेष्ठा यथासानि ।।

( अथर्व० ३।८।२)

असंशयं दुर्गमः कर्मवारिधिः । न तत्र केवलं पाश्चात्यक्रमेणैव शरीरं श्रमितं भवति अपितु जन्मजन्मान्तरार्जितैः निष्कामभावपूर्वकं निखिलशक्त्या कर्मसु यैर्विघ्नाः विरोपिताः क्रियन्ते, तेषामपसारणकर्मण्यपि इतरकर्मयोग्या शक्तिः व्ययी क्रियते, येन च व्ययेन मनसि देहे च कष्टं भवति। परं गुरुप्रसादाद्दृष्टिपातेन जन्मजन्मकृतायासाः कर्कराकर्पूरभावं भवन्ति । अस्मिन् अपारे संसारसागरे असंख्याताः जना आयासोदधिं तीर्त्वा गुरुप्रसादैः कृतकृत्याः बभूवुः, भवन्ति, भविष्यन्ति चाप्रलयान्तम् ।सर्वेषां गुरूणां स्वप्रकारस्य वैशिष्ट्यं विद्यते । अस्माकं गुरावपि स्वप्रकारस्य सुदुर्लभं वैशिष्ट्यं वर्तते। तच्चैवं भवति शब्दवाच्यं परमसम्भवा पूर्णाभिव्यक्तिः -----

श्री कृष्णो हि गुरुर्यस्य, देवश्च पश्चाच्छोभितः।
प्रकाशिता मतिः येन, शोभन्तां हृदये सदा ।। १।।
शास्त्रगुणसम्पन्नो यो, वेत्ता च वेदवारिधेः ।
साम्यसाहित्यमूर्तिश्च, तस्मै श्री गुरवे नमः ।। २।।
श्रमदेव श्रमसिद्धिः, तुष्टिश्च श्रमिणां भवेत् ।
गच्छन्तु तौ पुनर्मानं, प्रबन्धस्तेन प्रश्रयते ।। ३ ।।
प्रकृतीशौ गुरुस्तत्र, यत्रोऽहिरिसम्बन्धी ।
दयेरितस्तु कार्यान्तं, यास्यति सो न संशयम् ।। ४।।

सर्वविधगुणविभूषितस्य गुरोः अनुग्रहादहमपि श्रमदेवतार्यप्रतिष्ठाकर्मणि सिद्धो भविष्यामीति निश्चित्य श्रद्धासंवलान्वितो भूत्वा तत्कर्मपथप्रचलनपरो भवामि। दीयतां पथदर्शनाय पदकमलकोशरजाञ्जनं ज्ञानादिकाञ्जितुम् ।

तदत्र तावद् -----

### देवस्वरूपनिर्णयस्य आवश्यकता

अस्माकं देशे यवनाङ्ग्लशासनकालः संस्कृतसाहित्यदृष्ट्या अन्धकारयुगोऽसि

भस्मी कृताः विभाज्याः पुस्तकालयाश्च तैः। तेषामभावे यवनत्रासाच्च न जाताः साहित्यकाराः गण्यसंख्यायां तदानीम्। अन्यच्च दृश्यते यावत्संस्कृतसाहित्ये टीका-भाष्यसमालोचनाविधिः नैतिहासतत्प्रवृत्तिः। ज्ञानविज्ञानविषयाः ये कथावृत्ताः कृताः पौराणिकयुगे यद्वा वेदेषु मन्त्रैः दृष्टिगताः तेषां लोकहिताय ज्ञानाय वा स्पष्टविवेचना केनापि न कृता। यत्र सन्ति समुपलब्धानि भाष्यादीनि तेष्वपि धर्मदृष्टिरेव प्रमुखास्ति। विज्ञानप्रियस्य मानवस्य बुद्धिरथ तानि तेषु रूपेषु स्वीकर्तुं नोत्का दृश्यते। आंग्लशासनकालस्य उपरार्धे भागे यदा वैदिकसाहित्यः संगृहीतः सम्पादयित्वा च मुद्रितोऽभवत् मुद्रणालयेषु पाश्चात्यप्रचारैः केषांचिच्च पण्डितानांप्रयत्नैः। तदादौ मैक्समूलमैकडानलादिभिः पाश्चात्यैः विद्वरैः विशेषरूपेण वैदिकविषयेषु ग्रन्थरूपेषु नाना विचाराः व्यक्तीकृताः। नास्तीयं वैदिकीभाषा तेषां भाषा, न चाल्पदिवसेषु पारगम्यापि। अतस्तत्र तैः व्यक्तीकृताः विचाराः न सन्ति सर्वथा सत्यभूताः।

अपि च सन्ति पाश्चात्याः भौतिकवादिनः। अतस्तैः तया दृष्ट्यैव अध्यात्मविषयाः अपि दृष्टाः येन देवानां कर्मस्वरूपविषयेषु नाना भ्रमपूर्णाःविचाराः प्रचलिताः समाजेषु। तत्र भ्रान्तीनां निवारणमस्माकमेव उत्तरदायित्वपूर्णं कार्यमस्ति। अतो नूतनरूपेण देवस्वरूपनिर्णयस्य महती आवश्यकता दृश्यते। तत्र श्री वेङ्कटरमण महोदयस्य कार्यं विशेषरूपेण सराहनीयम् अस्ति। अन्येषु ग्रन्थेषु वैज्ञानिकदृष्ट्या श्रीभगवद्दत्तेन दीनानाथेन च कृतं कार्यमपि प्रशंसनीय-मस्ति। अन्यच्च महत्त्वप्रतिपादकानि कार्याणि स्वरूपमनुसरन्ति। एकस्य स्वरूप-वैशिष्ट्यप्रतिपादनाय अन्येषां तत्समाजस्य सामाजिकानां स्वरूपाणां विवेचनाकर्म भवति अपरिहार्यम्। अतो अनुभूता देवस्वरूप निर्णयस्य आवश्यकता।

स्वरूपनिर्णये कर्तव्या विज्ञानबुद्धिः --

विश्वसाहित्येषु प्राचीनतमाः सन्ति वेदाः। ते च वेदाः अस्माभिः ज्ञानविज्ञानराशयः उच्यन्ते। तत्र मात्र अग्निविज्ञानमिति मान्यता मान्यतां नार्हति यतोहि यदि तत्र मात्र अग्निविज्ञानमेव श्रूयते इति सत्यं मन्ये तर्हि अन्याः देवताः कां दशां गमिष्यन्ति। यदि एकैका देवता अग्न्याधिकेति मन्ये तदपि

असत्यमेवास्ति। यदि च देवानां सूक्तमन्त्रा: मात्र कथात्मका: सन्ति तज्जायते तेषु सूक्तमन्त्रेषु देवत्वाभाव: । यदि च नास्ति तत्र वेदेषु ज्ञानविज्ञानं तर्हि किं फलमध्ययनायासेन मुद्रणव्ययेन च लभ्यते । किन्त्वेव दृश्यमाना वेदविज्ञान-जिज्ञासैव स्वयं तेषां ज्ञानराशित्वं प्रकटयति। नात्र तदर्थकृता कापि विवेचना भविष्यति लाभविशेषाय ।

यानि देवकार्याणि रूपाणि च मन्त्रेषु दृश्यन्ते तेषां वैज्ञानिक-दृष्ट्या पुनर्मूल्याङ्कनकर्म कर्तव्यम् । सन्ति तेषु निहितानि विज्ञानानि ज्ञानानि च। तथा हि अश्विनौ जलवायुरूपौ, अहिर्बुध्न्यो यन्त्रोत्पादित शक्तिव्यञ्जक:, चित्रभानु: रवि: अग्निश्च, पृथिव्या: वर्तुलत्वं परिभ्रमणकर्म च । द्रष्टव्या एते विषया: स्व स्थानेषु ।

निश्चितरूपेण वेदेषु देवस्वरूपकर्ममाध्यमेन अद्यावधि: अलभ्यं भौतिकं विज्ञानं विद्यते यस्योद्घाटिते सति विश्वो विद्वल्लोकस्तस्मै स्व स्पृहो भविष्यति ।

स्वरूपनिर्धारणाय अनिवार्या: वैज्ञानिकप्रयोगा:

वेदेषु विचिकित्सा पदं न करोति क्वचिदपि । तेषां मन्त्रा: आप्तवाक्या: सन्ति। तेषां वचनानि आप्तवाक्या उच्यंते । सन्ति यद्यपि तत्र श्रुतानि सर्वाणि वचनानि ऋषिदृष्टिदृष्टानि तथापि यतो हि अस्माकं देशे अद्य वेदविज्ञानप्रयोगचिन्हानि न प्राप्यन्ते अत: शङ्कालवो मानवा: तेषु वचनेषु न विश्वसन्ति । अस्मिन्नेव वर्षे (१६७३) दक्षिणीकुशद्वीपे कृष्णमृत्(कोयला) खननकाले परमाणुधमनकौशलयुक्तयंत्रमुपलब्धं येन पुरातनी विज्ञानप्रगति: सूचिता भवति । अत: विज्ञानं श्रुतं वेदेषु असत्यमिति वक्तुं न शक्यते ।

देवस्वरूपनिश्चयार्थं विविधभौतिकशक्तीनां सूक्ष्म विश्लेषणं प्रयोग-शालासु कर्तव्यम् । तत्रादित्य प्रभावविश्लेषण, शक्तिवर्णवैविध्यपरीक्षणं (विद्युदिन्धनानाम्) प्रयोगशालासु प्रयत्नेन कर्तव्यम् ।

कथिता: वर्णा: स्वरूपभेदनिर्णयेषु सहायका: भविष्यन्ति --

देवानां मानवीकरणप्रसङ्गेषु तेषां शरीराणां, रथानाम् अश्वानां वा वर्णा: श्रूयन्ते । एते वर्णा: समशक्तिदेवेषु भिन्नता प्रतिपादनकर्मणि-

साहाय्या: भविष्यन्ति । कर्मानुसारं स्वरूपभेदो न सम्भवति । कर्मसु दृश्यते बहुधा पुनरुक्ति: साम्यश्च अत: कर्मभि: स्वरूपनिर्धारणकर्मणि विशेषयोगस्य आशा न कर्तव्या । यत्र सजातीयदेवानां वर्णनप्रसङ्गेषु तेषां वर्णा: न भूयन्ते तत्र स्वरूपनिर्धारणे विश्वासाभावो जायते । तथा हि मातरिश्वा, वायुवातौ, मरुद्गणश्च स्वरूपदृष्ट्या परस्परं सम्बद्धा: सन्ति । तत्र समानकर्माणि स्वरूपजटिलतां प्रतिपादयन्ति।परं यत्र शक्तिदेवानां वर्णा: श्रूयन्ते तत्र वैज्ञानिका: प्रयोगशालासु स्वरूपनिर्धारणकर्मसु अवश्यमेव सफला: भविष्यन्तीति ।

कार्याणां स्वरूपनिर्णये योग:

येषां देवानां विषये प्रयोगशालासु प्रयोगा:सम्भवा: न सन्ति, तेषां स्वरूपनिर्धारणे कुत कर्माणि एव सहयोगिनो भविष्यन्ति । तथा हि वायुरूपा: मरुदादयो देवा प्रयोगविषया: भवितुं नार्हन्ति। तेषां स्वरूपनिर्धारणे भौगोलिकं ज्ञानं प्रभविष्यति । न कुत: वेदेषु तेषां गतयो यद्यपि तथापि कल्पना योगेन चित्रितं स्वरूपचित्रम् अन्यविधाभावे मान्यतां गमिष्यति स्वतयोग्यत्वात् । एवमेव अन्येषां पार्थिवान्तरिक्षीयानां देवानां स्वरूपनिर्धारणेऽपि तेषां कृतकार्याण्येव सहायका: भविष्यन्ति । तेषां विषये प्रयोगशाला अशक्तास्ति निर्णयकर्मणि। अश्विनौ सोमश्चापि एतादृशा एव देवा: सन्ति । प्रयोगयोग्यदेवानां स्वरूपनिर्धारणकर्मसु तेषां कार्याणि, प्रयोगेषु योगै: , योगयोग्यानि सन्ति ।

देवस्वरूपविस्मारिका पाश्चात्यदृष्टि: ?

अथ केचिज्जना: कथयन्ति यत् पाश्चात्यविद्वद्भि: स्वेच्छया ज्ञात्वापि अस्माकं संस्कृतसाहित्यस्य विषया: मिथ्यारूपेषु, भ्रमोत्पादनाय, भारतीयेषु आत्मविस्मृतिजननाय च , प्रतिपादिता:। केषाञ्चिद् विषयानां दृष्ट्या अस्मिन् कथने सत्यांशो दृश्यते --- विशेषत: कालनिर्धारक विषयेषु, स्वाभिमानोद्बोधकघटनापरिवर्तनविषयेषु च ।परं नैवं सर्वत्र तेषां दुष्टदृष्टि:।

तेषां वैदिकानुसन्धानकर्माणि वीक्ष्य स्वमनुभूयते यत्तेषां त्रुटयो ज्ञात्वा कृता: न सन्ति अपि तु अपूर्णज्ञानजनिता: सन्ति । परमाणाधिक

वार्ता कर्तुं कोऽपि विज्ञो न प्रभवति। अथ स्वभाषाधिकारत्वात्तापि नितान्तमेव कठिनास्ति । वैदिकभाषाधिकारस्य वार्ता तु तैः कदापि कृता न दृश्यते । स्वज्ञानपिपासया विवशीकृतैस्तैः अधीता वेदभाषा । स्वमत्यनुसारञ्च भारतीयैः अस्पृष्टवैदिकविषयेषु लेखनी लेखनकर्मणु नियोजिता। अतोऽविदं सर्वथाभिनवं कर्म अतः त्रुट्यः स्वभावतया समापतितास्तत्र ।

अध्यात्मविषयः सर्वथा गूढविषयोऽस्ति। न च सर्वत्र विज्ञानबुद्धिगम्योऽयं भवति। बहुषु स्थलेषु मात्र योगबुद्धिगम्य एवास्ति । एते पाश्चात्यास्तु भूतवादिनः सन्ति । अतस्ते वेदविषयस्नातकोचरतां नार्हन्ति। तेषु ये यथार्थतः योगिन एव सन्ति ते प्राप्नुवन्ति सत्यम् , " मुण्डे मुण्डे मतिर्भिन्ना " अतो येन यथानुभूतं स्वबुद्ध्या तथा तेन भणितम्। देवानां स्वरूप विषयेषु तेषां नानामतानि सन्ति तेषु कानिचित् सर्वथा असम्बद्धानि सन्ति विषयैः सह । अस्माभिरपि प्रायः तेषां क्रियते अनुकरणं यद्वा खण्डनं, परं प्रयासपूर्वकं स्वाभिनवं मतं नोपस्थाप्यते। यच्चास्माभिरेव करणीयं कर्म अस्ति। अस्मिन् विषये मया कृतोऽत्र प्रयासो बालभाव एवास्ति तथापि स्वमत्यनुसारं गुरुप्रसादेन तत्कृतः। विज्ञानसाधनाभावे नास्ति तत्र पूर्णता तथापि यथाशक्तिः नूतनः प्रयासः कृतः। पाश्चात्यानां सम्बद्धासम्बद्धमतानां दर्शनं तत्र तत्र देववर्णनप्रसङ्गेषु कर्तव्यम् ।

देवानां द्युतिमत्ता शक्तिमत्ता च -

दिव् धातु निष्पन्नो देवशब्दो द्योतनगुणमावहति । अतः सर्वे देवाः द्योतनशीलाः सन्तीति सुनिश्चितं मतमस्ति । द्युस्थानीयाः देवास्तु द्योतनशीलाः सन्ति एव परमन्ये पार्थिवाः अन्तरिक्षीयाश्च देवाः अपि द्योतनशीला सन्ति । परन्तु तेषु सर्वेषां द्युतिः प्रत्यक्षदर्शन विषया नास्ति । वर्णविषयक्रियाविचारानन्तरं प्रमुख देवानां द्युतिवर्णाः एवं भवन्ति ---

| देवाः | तेषां वर्णाः |
|---|---|
| १- इन्द्रः | ईषन्नीलवर्णः |
| २- मित्रः | सूर्यविद्युद्वर्णः |

| | |
|---|---|
| ३- वरुण: | अव्यानजद्युतिवर्ण: |
| ४- सूर्य: | चित्रवर्ण: |
| ५- द्यौः | निर्वाणोऽपि भूत्वा परप्रकाशवर्ण: |
| ६- उषाः | दृश्यमानवर्णा |
| ७- आदित्या: | दृश्यमानवर्णा स्वराशिवर्णा: |
| ८- अजैकपाद् | रविवर्ण: रुद्रश्च कृष्णवर्ण: |
| ९- मरुद्गण: | धूम्रकवर्ण: |
| १०- रुद्रा: | कृष्णवर्णा: |
| ११- वायुवातौ | रक्तवर्णौ: |
| १२- अश्विनौ | रक्ताभ्रवर्णौ |
| १३- पर्जन्य: | घनश्याम: |
| १४- आप: | स्वच्छवर्णा: |
| १५- अहिर्बुध्न्य: | जनितशक्तिवर्ण: |
| १६- सोम: | स्वच्छवर्ण: स्वलतावर्णो वा |
| १७- अपां नपात् | विद्युद्वर्ण: |
| १८- त्रित- आप्त्य: | जनितशक्तिवर्ण: |
| १९- अग्नि: | स्वपदार्थवर्ण: |
| २०- वसव: | चित्रवर्णा: |
| २१- पृथ्वी | मातृभावाभाविता स्ववर्णद्युतियुता |

एवं सर्वेषां देवानां द्युतिभक्ता असन्दिग्धा अस्ति ।

शक्त्यधीना सर्वेषां द्युति: । यस्मिन् यावती शक्ति: विद्यते स तावदेव प्रकाशितो भवति ।अत अस्माभि: त्रित- आप्त्याहिर्बुध्न्यादीनां शक्त्य: प्रत्यक्षतया कार्येषु प्रयुज्यन्ते । नास्त्यस्माकमेकोऽपि देवो निस्सीमशक्तिहीन:। अत तेषां शक्तीनां प्रयोगा: समग्रे विश्वे विश्वकर्मभि: विश्वसज्जायै क्रियते ।

युगपरिवर्तितानि देवरूपाणि

तत्र द्युस्थानीयाः अन्तरिक्षस्थानीयाः देवास्तु मानवानां ग्रहणशक्तिबाह्याः सन्ति । तेषां रूपाणि तैः परिवर्तनीयानि न सन्ति । तथापि तेषां शक्तिसंग्रहे तत्पराः प्रयोगे च सक्षमाः एव सन्ति । निकटभविष्य एव सूर्यतापो विद्युत्कर्माणि करिष्यति। अपां नपादादयो विद्युदिन्धनदेवताः क्रियाशीलाः सन्त्येव। पृथिवी देवतायाः रूपाणि तैः अनुक्षणं परिवर्तितानि क्रियन्ते । तथा हि----

क्वचिद्भूमौ कुल्याः निर्मीयन्ते । क्वचित् नदीनां धाराः प्रवाहदिशो वा परिवर्तिताः क्रियन्ते । क्वचिन्महानदेषु सेतवो निर्मीयन्ते । क्वचित् शैलाः उत्खातमूलाः वेधितोदराः वा क्रियन्ते । नाना धातवो भूगर्भ विस्फोटैः विदार्य लभ्यन्ते। क्वचित् वनानि वन्हिना विनाशयित्वा भूमिः शस्यश्यामला क्रियते अन्यत्र च शस्यक्षेत्राणि अग्नेयास्त्रप्रहारैः युद्धकार्यार्थं भस्मी क्रियन्ते ।महानगराणां शैलशृङ्गोच्छ्रितानि भवनानि अमरावत्यो भवनानि ह्रेपयन्ति स्वमायया । सो मानवः क्षणार्धे एव प्रलयं कर्तुं सक्षमोऽस्ति। इयं कलाकलिता भूमिः तदनन्तरं श्मशानभूमिः भविष्यति ।

एवमेव आपोऽपि तेन बन्दी कृताः। विद्युत्सिंचनमत्स्य पालनकर्मसु आपो देवता तेन स्वेच्छया उपयुज्यते । महानगरेषु जीवनाय बन्दीकृताः आपो देवताः नलिकासु : वहति । भूगर्भे प्रवहणशीलाः आपो देवताः विद्युत्कूपैः तैलयन्त्रकूपैर्वा ततः उत्तार्य भूमौ क्षेत्रसिंचनाय प्रवाहिताः क्रियन्ते ।

पर्जन्यो देवोऽप्येव पराधीनो जातः। अब असौ जलसंचयकर्मणि सर्वथा स्वतन्त्रो नास्ति । अपितु यदा मानव इच्छति तदा सिंचनार्थं तेभ्योजलानि गृह्णाति ।

अग्निदेवोऽपि सर्वेषु देशेषु अस्याज्ञां शिरसा वहति। गृहेषु बाष्पयनार्थं, वर्तकिलोहकारादीनाम् उद्योगशालासु यन्त्रोद्योगार्थं प्राचीनकालादेवायं देव उपयुज्यते ।

अथ अयं देव: सुमहान्ति कर्माणि करोति नानारूपेषु यानि मानवशक्तिगम्यानि न सन्ति। लौहपथेषु वाष्पयन्त्राणि धावयित्वा अल्पकाल एव अतिसहस्रटनभारं नैकसहस्रयात्रिणो वा शतशतयोजनदूरं स्थानं प्रापयति। असावेव राजमार्ग निर्माण-कर्मणि व्यापृतो दृश्यते । महदुद्योगशालासु महान्ति यन्त्राणि अनेनैव परिचालिता: भवन्ति । नगराकारा: कपोता: अस्य योगेनैव यानान्तं गच्छन्ति ।

परं सर्वासां शक्तीनां हेतुरग्निरेवास्ति। अतो विद्युदादिभिश्च इन्धनै: प्राप्ता शक्तिरपि अग्नेरेव रूपाऽस्ति येन विद्युदादिभि: संचालितानि यन्त्राणि अपि अग्निना चालितानीति वक्तव्यम् । अयं विश्वकर्मशक्तिरूपो विश्वपालकोऽग्निदेव: सर्वथा नरनियंत्रित एवास्ति । तस्य दुरुपायं देवोऽपि विश्वरूपपदं प्रापित: ।

वर्तमानदेवरूपाणि

वर्तमानकाले पाश्चात्यविद्वद्भि: निर्धारितानि रूपाणि एव प्रचलितानि सन्ति । अस्मिन् विषये श्री दामोदर सातवलेकरेण संकलिता देवसामग्री, दैवत-संहिताख्ये ग्रन्थे , प्रशस्तियोग्यास्ति । परं अत्रापि वर्णनं कुर्वता तेन कापि वैज्ञानिकी पद्धति: न प्रतिष्ठापिता कृता, पारम्परिकं वर्णनमेवोपलभ्यते सविस्तारेण। अत्र श्री रमणस्य सनातनविज्ञानसमुदयेत्याख्ये ग्रन्थे कृत: प्रयासो देवानां वैज्ञानिक-स्वरूपनिर्धारणकर्मयानाग्रसरणे पाथेयतामर्हति । कर्मविज्ञानक्षेत्रे क्रियाशीलाय पुरुषाय श्री भगवद्दत्तस्य वैदिकसम्पत्तिरित्याख्यो ग्रन्थो मार्गदर्शको भविष्यति । गौरविद्वद्भि: प्रतिपादितानि देवरूपाणि सन्देहजनकानि सन्ति ।

अतो यावधि: प्रतिपादितानि देवरूपाणि नूतनप्रयासानामपेक्षां कुर्वन्ति। तानि सन्ति परिवर्तनीयानि । यन्त्रसंचालिकाशक्तिसमन्वितानां देवानां रूपाणि प्रयोगशालासु प्रयोगै:, भौगोलिकानां च देवानां रूपाणि भौगोलिकविचारै: कर्तव्यानि। रूपाणां निर्धारिते सति कार्याणां वैज्ञानिकी समीक्षासरला भविष्यति।

शिल्पाचार्येषु अग्रदेवता विश्वकर्मा :

ज्योतिषाचार्येण वराहमिहिरेण बृहत्संहितायां प्रतिमा लक्षणाध्याये ( अष्टोत्तरपन्चाशत्तमे) वास्तुशिल्पस्य सप्तपुरातनाचार्याणामुल्लेख: कृत:। येषां

नामानि एवं सन्ति ---

गर्गो, मनु:, वसिष्ठ:, पराशरो, विश्वकर्मा, नग्नजिन्मयश्च ।

भविष्यपुराणे शिल्पाचार्याणाम् अष्टदशनामानि श्रूयन्ते येषु मनु: पराशरश्च न श्रूयते ।तानि नामान्येतानि सन्ति ---

भृगु:, अत्रि:, वसिष्ठ: विश्वकर्मा, मय: , नारद:, नग्नजित, विशालाक्ष:, पुरन्दर:, ब्रह्मा, कुमार:, नंदीश:,शौनक:, गर्ग:, वासुदेव:, अनिरुद्ध:, शुक्र, बृहस्पतिश्च । ( अ०२५२)।

' विश्वकर्मप्रकाशाख्ये वास्तुशास्त्रे विश्वकर्मा पञ्चम: शिल्पाचार्य: पठित:। अत:पूर्वं क्रमश: शंभु: गर्ग:, पराशरो बृहद्रथश्च पठ्यन्ते ( १।३-४) । अत्र एव विश्वकर्मण: शिष्यो वासुदेव: स्मृत:। अनेन संकलितो ' विश्वकर्मप्रकाश ' इत्याख्योऽयं ग्रन्थ:। परन्तु वास्तुविद्यायां विश्वकर्मा ,' सर्वसूत्रप्रवर्तक:,' शिल्पिनां परमेश्वर: उक्त:( १।२) । प्रासादमण्डनेऽपि ' वृद्धयाकूत्रधारस्य प्रसादाद्विश्वकर्मण:। प्रासादमण्डनं ब्रूते सूत्र धारेषु मण्डन: । ' १।३।। एवमत्रो वृद्धयाकूत्रधार: इति श्रूयते । वस्तुतोऽयं शिल्पीनां परमेश्वरो विश्वकर्मा आकूत्रधार एवास्ति । विश्व-कर्मप्रकाशे उक्ता: चत्वार: शिल्पाचार्या: वेदेषु न श्रूयन्ते ।अतस्ते विश्वकर्मण: पूर्वं जाता इति न युक्तियुक्तं प्रतिभाति। तत्रोक्तो विश्वकर्मा कोऽपि तदुपाधिधारी शिल्पाचार्यो वासुदेवगुरु: समभविष्यत् । गुरुसम्मानार्थं तेनोपाधिरेव प्रयुक्ता न नाम । दक्षिणीपरम्पराया: शिल्पशास्त्रीयाणां ग्रन्थानां नामानि बहुधा विश्वकर्मपूर्वकानि सन्ति। तेषां रचयिता:भिन्नाचार्या: सन्ति। अतोऽयं वासुदेव-सम्पादितो विश्वकर्मप्रकाशोऽपि विश्वकर्मणो वास्तुशास्त्रीयविचाराणां संकलनो - स्तीति मन्तव्य: ।

विश्वकर्मण:कृतय: --

विश्वकर्मणा कृता कापि शिल्पशास्त्रकृति: अत्र उपलब्धास्तीति न वक्तुं शक्यते विश्वासपूर्वकम् । यद्यपि अस्य नाम्ना ज्ञेया: सन्ति नैका: शिल्पग्रन्था: परं तेषु तस्य विचारसंग्रह एवोपलभ्यते । महर्षिगर्गकृते गार्गेयवागे अगस्त्यादिभि:

सप्तदशर्षिभिः कृतानि द्वात्रिंशच्छिल्पशास्त्राणि पठ्यन्ते ( १।२४-३०)। अत्रान्ते मानमेदादिप्रासंज्ञकौ द्वौ शिल्पग्रन्थौ विश्वकर्मरचितौ उक्तौ । मयमतस्य पञ्चदशमे खण्डे द्वात्रिंशद्रूपीय एकस्य शिल्पशास्त्रस्य एव कर्तारः सन्ति । अपराजितग्रन्थे एको विश्वकर्मा द्वादशसहस्रशास्त्राणां कर्ता उच्यते । परं नास्ति उपलब्धः एकोऽपि विश्वकर्मीयः शिल्पग्रन्थः । येषामद्यावधिः सन्ति प्राप्याः शिल्पग्रन्थास्तेषु सर्वेषु विश्वकर्मा आदिशिल्पप्रवर्तकरूपेण श्रूयते । तथा हि --

अथर्ववेदो विश्वकर्मादिशिल्पशास्त्रम् अथर्व वेदस्योपवेदः।। चरणव्यूहे सं० ४।४।।

श्रीमद्भागवतस्य टीकायाम् ( ३।१२।१) अत्र श्रीधरो विश्वकर्माणं शिल्पशास्त्रकर्तेति लिखति ।

विमानविद्यारहस्यवर्णनप्रसङ्गे भरद्वाजो यन्त्रसर्वस्वेत्याख्ये ग्रन्थे तृतीये कृतकररहस्ये उल्लिखति यत् ---

" विश्वकर्मच्छायापुरुषमनुमयादिशास्त्रानुष्ठानद्वारा तत्तत्कृत्यनुसंधानपूर्वकं तात्कालिकसंकल्पानुसारेण विमानरचनाक्रमरहस्यम् ।"

वात्स्यायनकामसूत्रस्य टीकायाम्(१।३) अत्र श्री जयमंगलो लिखति यत् ---

सजीवानांनिर्जीवानां यन्त्राणां यानोदकान्नाद्यार्थघटनाशास्त्रं विश्वकर्म प्रोक्तम् ।

को जानाति यदद्योपलब्धशिल्पशास्त्रेषु नैकवचनानि तत्कृतान्येव सन्ति । कालकवलितेषु तस्य शास्त्रेषु असम्भवा तेषां परीक्षा । अतस्तानि तेषामुच्यन्ते । यवनकोपाग्निना भस्मीभूताः असंख्याताः ग्रन्थाः अद्य नाम्नापि न ज्ञायन्ते ।

शिल्पशास्त्रीयग्रन्थानां बृहत्सूची श्री द्विजेन्द्रनाथ शुक्लेन " भारतीयवास्तुशास्त्रे " प्रकाशिता, यस्यां षड्शताधिकग्रन्थाः सन्ति । परं तेषु बहुधा अनुपलब्धा एव सन्ति ।

प्रथमो वैश्वकर्मणयागो यज्ञभागाधिकारश्च --

शिल्पशिक्षानन्तरं रौहितेन विश्वकर्मणो लोकोपरोत्पत्तिमुद्योगितुं तस्मै एको भागः कृतः इति मैक्तमूलरः( पू०प० पु०६२।पृ०२०६)।

स्कन्दपुराणे हयग्रीवकथा प्रसङ्गे विश्वकर्मा अजं याचते यज्ञभागं सुरैः सह यागेषु । तदा ब्रह्मा सर्वयज्ञेषु विभागं ते दास्यामीति स्वीकरोति । तदनन्तरं देवैरानीतोऽश्वशिरस्तेन हरिस्कन्धे योजितः।

- ( ३।२।२५।३-१०)।

परमिदं सर्वं कल्पितं प्रतिभाति। कथासौन्दर्यलोभाद् इच्छानुसारं नूतनाः कथानकाः तत्र तत्र संयोजिताः पौराणिकैः। विश्वकर्मणः कर्मसु विनियोगो दृष्ट्वा कोऽपि न स्वीकरिष्यति यद् विश्वकर्मणे यज्ञ भागः पौराणिके युगे दत्तः। अतः पूर्वमप्यसौ यज्ञ भागविहीनःआसीत् । वेदमन्त्रैः अस्य यज्ञभाग युक्तता बहुधा उक्ता भवति । तथा हि-----

१- आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ ।
इह त्वष्टा सुजनिमा सजोषा दीर्घमायु करति जीवसे वः ।।

- ( ऋ० १०।१८।६)।।

२- य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतारिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ।।

- (ऋ० १०।११०।९)।

३- विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ।।
४- वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ।।

( ऋ०१०।८१।६-७)।

----------

अतोऽयं ऋग्वेदकालादारभ्य एतावदवधिः अन्यैः देवैः सह पूजितो भवति ।क्रियन्ते च वैश्वकर्मणहोमाः तत्प्रसादनाय ।

विश्वकर्मलक्षणानि ---

श्रीकुमारप्रणीतेशिल्परत्ने वास्तुविद्यायां च शिल्पिलक्षणान्येवं पठ्यन्ते --

स्थपतिः स्थापनार्हः स्यात् सर्वशास्त्रविशारदः।
न हीनाङ्गोऽतिरिक्ताङ्गो वा धार्मिकस्तु दयापरः।।

अमात्सर्योऽनसूयश्च तान्त्रिकःस्वभिजातवान् ।
गणितज्ञःपुराणज्ञः आनन्दश्चाप्यलुब्धकः ।।
चित्रज्ञः सर्वदेशज्ञः सत्यवादी जितेन्द्रियः ।
अरोगी चाप्रमादी च सप्तव्यसनवर्जितः ।
सुनामा दृढबन्धुश्च वास्तुविद्याब्धिपारगः ।
स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा ।।
स्थपत्याज्ञानुरोधी च सर्वकर्मविशारदः ।
सूत्रदण्डप्रमाणज्ञो मानोन्मानप्रमाणवित् ।।
तक्षणात् स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः ।
मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः ।।
गुरुभक्तः सदा हृष्टः स्थपत्याद्यनुगः सदा ।
तक्षितानां तक्षकेणाप्युपर्युपरि युक्तितः ।।
वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा ।
एभिः विनापि सर्वेषां कर्म कर्तुं न शक्यते ।।
तस्मादेष सदापूज्यः स्थपत्यादिचतुष्टयः ।।

-(शिल्प० १।३४-४१ १/२ , वा०वि० १।१२- २०)।

उक्तगुणानामभावे कोऽपि विश्वकर्मा कर्मनैपुण्यं साफल्यञ्च नावाप्स्यति । तथा चोच्यते गीतायामपि --

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणैवगच्छति ।।

- ( ४।३६)।

ज्ञानाभावे कर्मकौशलं न सम्भवति। कर्मकौशलाभावे कार्याभावो जायते तस्माच्च वृत्त्यभावो यस्माद्धेतोः सीदति यावज्जीवनं विश्वकर्मा । अतो गुरुभक्तिः, संयमादयो गुणाः विश्वकर्मणा यत्नपूर्वकमाराधनीयाः ।

प्राचीनकाले शिल्पिनां महत्त्वम्, समप्रतिष्ठा वा --

वैदिकयुगे प्रतिष्ठापिता सामाजिकी व्यवस्था आसीत् ज्ञानमयी । यज्ञपूजा आर्याणां दैनिकी क्रियासीत् । इन्द्राग्निवरुणादीनां देवानां प्रमाणां

स्तुतय: पदे पदे श्रूयन्ते एव तै: कृतेषु यागेषु त्रिकालसन्ध्यासु च । ऋभवो भृगवो वसिष्ठोऽङ्गिरसो विश्वकर्मा, त्वष्टा, बहुरूपादिश्च भवन्ति स्तुता: अर्हता: कलाकौशलनिमित्तं वा वेदेषु । ब्राह्मणग्रन्थकाले तु अभ्वेवस्य नाना यागकर्मसु विनियोगो दृश्यते ।पौराणिके युगेऽपि हरिहराजेन्द्रादिभि: प्रभुभि: रुद्रदेवैश्च: अयं देवो भवति पूजित:। शिल्पकर्मणि विश्वकर्मा स्तुतिपूर्वकम् आहूयते देवैश्च:। सम्पादिते च कर्मणि अभीष्टधनविसरै: वरैश्च तै: भवति पूजित:। एताद्दृश्य: श्रमप्रतिष्ठाया: निमित्तादेव आसीद् राष्ट्रमिदं सुखी धनसम्पन्ना च । स्वर्णखगनाम्ना आसीद्विश्वे विश्रुतमिदं भारतराष्ट्रम् । वाल्मीकिरामायणस्य बालकाण्डेऽपि शिल्पिपूजा उच्यते------

यज्ञकर्मसु ये व्यग्रा: पुरुषा: शिल्पिनस्तथा ।

तेषामपि विशेषेण पूजा कार्या यथाक्रमम् ।।

चतुरार्थसाधक: श्रम: --

अस्माकं हिन्दूपरम्परायां मानवजीवनस्य परं लक्ष्यो मोक्षोऽस्ति । सर्वाणि कर्मफलानि तत्रैव शान्तिम् अधिगच्छन्ति । तदर्थं केचिज्जना: सन्यासमार्गमवलम्बन्ते । ते तु एवं भावयन्ति यत् कर्माभावे कर्मफलाभावो भविष्यति फलाभावे च मुक्ति:। परमेते यथार्थज्ञानाभावे प्रायस्तत्पदं न लभन्ते । "कर्मसन्यासात् कर्मयोगो विशिष्यते" इति प्रतिपादितं श्रीगीतायां श्रीकृष्णेन स्वयम्( ५।२)। प्रपञ्चभयाद् भीता: भवन्ति कर्मसन्यासिन:परं सन्यासेऽपि ते न भवति निष्कर्मिणो यतो हि----

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।

कार्यते ह्यवश:कर्म सर्व: प्रकृतिजैर्गुणै: ।।३।५ ।।

अकर्मण: शरीरयात्रापि प्रसिद्धिं न विन्दति अत:" कर्मज्यायो ह्यकर्मण: " । विश्वे कर्म एव भूतभावोद्भवकरम् उच्यते यतो हि-----

कर्मणो यज्ञो यज्ञात्पर्जन्य: पर्जन्यादन्नं भवति अन्नाच्च भूतानि (गीता ३।१४)।ब्रह्मोद्भवं कर्म परित्यज्य ब्रह्माराधनपरो जनो ब्रह्माराधनकर्मणि साफल्यं न विन्दति । तत्र सिद्धयर्थं कर्म एव प्रशस्यते श्रीगीतायां सोदाहरणम् ----

कर्मणैव हि संसिद्धिमास्थिता जनकादय: ।

लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ।। ३।२०।।

तत्र क्रमेण सर्वार्थसिद्धिरेवं भवति ---

कर्मणार्थोपलब्धि: । अर्थाद्भवति धर्म: काम-

सिद्धिश्च । धर्माच्चावाप्यते सुखम् -- तत्पदमिति । अत्र भवति श्लोक: --

शिल्पेन कौशलं याति विनयं पात्रतां तथा ।

पात्रता धनहेतुश्च, धनाद्धर्मस्ततो सुखि:।।

कर्मपरस्य विश्वकर्मण: कर्मणि आसक्ति: न भवितव्या । नैव च तेन कर्मफलहेतु:

भवितव्य:।' असक्त: सततं कार्यं कर्म समाचर ' (गीता ३।१९) इत्यादिभि:वाक्यै:

उक्ता कर्मफलानासक्ति: विश्वकर्मभि:स्वेषु जीवनेषु व्यवहरणीया । कर्मफलानासक्ति-

रेव तान् विदेहादीनां स्थितिं प्राप्स्यति । परमं पदं प्राप्स्यति यथा चोक्तो

श्रीगीतायाम् -----

तस्मादसक्त: सततं कार्यं कर्म समाचर ।

असक्तो ह्याचरन्कर्म परमाप्नोति पूरुष:।। ३।१९।।

कर्मादिषु आसक्ति: दु:खहेतु: भवति जाते निष्फले कर्मणि । दु:खं च सर्वशक्ति-

नाशकरम् । अतस्तत्त्याज्यम्। ' रोगा दु:खहेतु: ' इतिपतञ्जलि: योगदर्शने । सुखपदमि-

च्छद्भि:विश्वकर्मभिराचरणीयं स्मरणीयञ्चेदं गीता वचनं सर्वदा ----

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।

मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।। २।४७।।

' सिद्ध्यसिद्ध्यो: समो भूत्वा ' मुक्तसङ्गो विश्वकर्मा कर्म समाचरेद् यावज्जीवनम् ।

अथ मात्र अर्थसाधक:श्रम: --

उक्तविधमहत्त्वमण्डित: श्रमोऽथ मात्र अर्थसाधक एव दृश्यते । सन्ति तत्र

कानिचिन्निमित्तानि ----

१- अद्य विश्वे सर्वत्र उद्योगानां यन्त्रीकरणं दृश्यते

बृहत्परिमाणे यन्त्रेषु योगेषु च क्रियते तीव्रवेगेन ।तत्परिमाण एव तीव्रतरगत्या

वर्धते कार्याभाव:। अस्माद्धेतो: अर्थसंकटमनुभवन्ति असंख्याता: जना: ।

२- वर्धमाना जनसंख्या वस्त्रनिवासानां वर्धयन्ती वस्तुमहार्घहेतुःभवति ।

३- कार्याभावे महार्घता जीवनकष्टानि वर्धयति। वस्त्रान्नावासव्यवस्था-भावे चिन्तादीनास्ते अहर्निशं अर्थाराधनपराः वर्तन्ते । अनिवार्यावश्यकतानां पूर्त्यभावे धर्मादयोऽशक्याः भवन्ति। अतो विवशीकृतः श्रमिकोऽर्थपर एव इदानीमस्ति। ये केचिद् विश्वकृतोऽर्थदृष्ट्या सम्पन्नाः सन्ति ते अद्यापि धर्मपराः सन्ति ।

<u>मध्ययुगे शिल्पिसम्मानहानिः --</u>

हर्षवर्धनकालादारभ्य त्रिशतोत्तरसहस्रख्रीष्टाब्दपर्यन्तं भारतीयनरेशानां पारस्परिक कलहकालः यवनाक्रमणकालश्च अस्ति । कालानुसारं शिल्पविद्या दुर्गशस्त्रास्त्रनिर्माणकार्येषु केन्द्रिता बभूव। शान्तिकालेषु च प्रासादकार्येषु । अस्मिन्युगे शिल्पिसम्मानयोग्यावसराणामभावोऽनुभूयते । तथापि शान्तिवर्षेषु तैः प्राप्तो मानो नृपेभ्यः ।

अनन्तरं यद्यपि यवनशासकैः कला सम्मानिता बभूव परं न कलाकारिणः शिल्पिनः। कलासिद्ध्यनन्तरं तेषु बहुभिः प्राप्तमभयदं पुरस्कारस्वरूपं अन्यैश्च दत्तं दक्षिणाङ्गुष्ठम् ।

आग्नेयपुराणे श्रुतेनानेन वाक्येन --- शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि वाप्यथ ( १५१।६)--- ज्ञायते यत्कालपर्यन्तं वर्णव्यवस्था वर्तमानरूपानुरूपिणी बभूव । विप्रैः खण्डीकृतं मात्र गुरुत्वं शिल्पकार्याणि चात्मप्रतिष्ठाविरुद्धानि मतानि। आसन् क्षत्रियाः युद्धशासनरताः वणिगश्च व्यापारव्यापृताः । अतस्तैः विप्रैः स्वशिल्पकर्म शूद्रवर्गेषु समर्पितम् । शासकानां नीतिभिःपीडितैः अनादृतैश्च तैः अनुभूतानि नानाकष्टानि अन्यैः सामाजिकैःसह । सामान्यरूपेण ते समाजे सम्मानिताः ~~कक्ष~~ आसन् परं कैश्चिद् धनिकैः सामन्तैश्च अनादरानुभूतिरपि तैः कृता । तथा च दृश्यते अद्यापि ।

<u>श्रमस्य श्रमिणां च वर्तमानस्थितिः --</u>

अद्य श्रमो यन्त्रदासतां प्राप्तः। प्रायः सर्वेषु कार्येषु यन्त्राणामपेक्षा क्रियते धनिकैः। येषु श्रमेषु यन्त्राणि न प्रभवन्ति तेऽपि श्रमाः धनिकानां

धनस्य दासाः सन्ति ।अर्थोदरत्वात् क्षुधातुरास्ते धनिकेभ्य उचितं श्रममूल्यं प्राप्तुं न शक्नुवन्ति। अनादराभिमानाक्ताः धनिकैः अनादरत्वं मातिरिक्त-पुरस्कारं याचवतां श्रमिकाणां कातरदृष्टिं दृष्ट्वा मनवः स्वकृतवंशवृद्धिरूपस्य पापस्य प्रायश्चित्तकरणाय नानाव्रतयागकर्मसु निरताः सन्ति। वणिग्विपणिषु सेवारतानां वृद्धानां च स्थितिः सम्मानदृष्ट्या अल्पूर्मकाराणामपेक्षापि दयनीयास्ति। गताः आङ्ग्लाःभारतात् परन्तु तैः पश्चात् प्रदिष्टा दासीकरणस्य वृत्तिः दासाभावेऽत्र सा तरुणायते बहुगुणिता भूत्वा। तस्याः दर्शनाय द्रष्टव्याः वरणीयाः वा व्यक्तिगताः संस्थाः --- विद्यालयाः, उद्योगसंस्थाश्च । एको गौरः आङ्गभारतीयानां शासकः आसीत्तेषु संगठनदृढ्यभावत्वात् । अद्य एकोऽधवलिको भारतीयः शतशः बुद्धिनामकानां शक्तिश्रमिकाणां वा शासकोऽस्ति। अधर्म-शिक्षाभावे उच्चशिक्षाव्यञ्जकपत्रखण्डधारकेष्वथापि दास्यार्थविघटनवृत्तिपदेषु तद्विरुद्धवृत्तिभिः पदानि न कृतानि येन ते स्वातन्त्र्ययुगे दासजीवनानि जीवन्ति ग्राम्यमृग इव ।

ग्रामीणश्रमिकाणां दुःखानि कार्याभावपरकाणि सन्ति यानि ऋणभारैः वृद्धिं गच्छन्ति प्रतिदिनम् ।विगतं मानं ते पुनः शनैः शनैः प्राप्नुवन्तीतीयं मेऽनुभूतिः। महदुद्योगश्रमी यद्यप्यर्थदृष्ट्या सीदत्येव तथापि स्ववर्गश्रमेषु ज्येष्ठो भवति । मानदृष्ट्यापि च ।

उक्तेषु श्रमिकेषु श्रमभावना क्रियाशीला वर्तते । यथोचिताधिकारेभ्यो यदा कदा तैः हडतालाः क्रियन्ते ।परं ते कार्यापेक्षायाः भावैः न क्रियन्ते । शासकीयेषु कार्यालयेषु कर्मचारिवृत्तिः अवश्यमेव प्रायः परांकोटिं स्पृशति ।तेषां कार्याणि अर्थभयापेक्षितानि भवन्ति । न कर्मभावापेक्षितानि । नवशिक्षितेषु इदानीं शरीरश्रमवृत्तिस्तु सर्वथा लुप्तैव भावनीया । अर्थोदरवृत्तिहेतवे ते लरकत्वं स्वीकुर्वन्ति परं न गृहेषु कृषिव्यापारोद्योगवृत्तिं स्वीकुर्वन्ति स्वातन्त्र्यदायिनीम् । अस्त्येषः प्रभावो निष्क्रियशिक्षायाः । विभ्रमशिक्षोत्पन्ना एते शिक्षिताः यत्र यत्र गच्छन्ति तत्र तत्र विभ्रमन्ति। नास्त्यत्र तेषां कोऽपि दोषः । भवति सर्वत्र कारणानुरूपमेव कर्म। यथा शिक्षा तथा शिक्षिताः।

हीनमहत्त्वहेतु: -- अहीना शिक्षा --

वर्तमाने समाजे शिक्षितेषु अपि च बहुषु अशिक्षितेषु शारीरिकश्रमं प्रति आदरबुद्धि: न प्राप्यते । ये च कुर्वन्ति शारीरिकं श्रमं तान् एते आदरदृष्ट्या न पश्यन्ति । केचित्तु तै: सह स्थितिं वार्तालापं वापि नेच्छन्ति । बालो भवति श्वेतपट्ट इव यस्मिन् अभीष्टं लिखितुं शक्यते स्वल्प प्रयासेन । परं तन्न भवति लिखितम् उपयुक्त शिक्षाशिक्षकाभावे । वर्तमानशिक्षायां सन्ति अधोलिखिता: दोषा: ये भवन्ति उत्तरदायिनोऽस्यै स्थित्यै---------

१- श्रमस्य व्यावहारिक्याःशिक्षाया:अभाव: ---

अद्य विद्यालयेषु यत्र विद्यार्थिषु जीवनसंस्कारा: संस्क्रियन्ते तत्र श्रमस्य व्यावहारिकी शिक्षा न दीयते।प्राय: सर्वेषु पर्व माध्यमिकविद्यालयेषु उच्चतर माध्यमिकविद्यालयेषु च कृषिप्रशास्त्रयोजना कोटिकोटिमुद्राव्ययेन परिचालिता भवति । परन्तु न्यूनतमोत्पादनसीमाभावे आलस्यविदग्धमूर्त्तय: कृषिशिक्षका: छायासु विश्रमन्ति छात्राश्च पञ्चमुद्रादानेन उत्तरन्ति प्रायोगिकीं परीक्षामनायासेनैव । यत्र च भवत्यपि यत्किञ्चिदुत्पादनं तदनाचार्या: आचार्या: बहुषु अंशेषु भक्षयन्ति। तत्रोत्पादने विद्यार्थिनामंशाभावे दृष्ट्वा तद्रस्यं तेषु श्रमोपेक्षावृत्ति: जायते । एवमियं पञ्चयोजना श्रमभावान् नोद्बोधयति अस्माकं विद्यार्थिषु ।

२- व्यायामशिक्षाया: प्रायोगिकाभाव: ---

यद्यपि शिक्षासंहितायां व्यायामाय एकं चक्रं नियतमस्ति । तदर्थञ्च विद्यार्थिन: क्रीडाशुल्कमपि ददति। परन्तु अस्माकं विद्यार्थिनो व्यायामलाभान्विता: न भवन्ति। कन्दुकादीनां क्रीडासु सर्वे छात्रा: व्यापृता: भवितुं नार्हन्ति क्षेत्र-साधनाभावे । अतोयोजनीया सामूहिकी व्यायामपद्धति: सर्वेषां लाभाय । परं नैवं क्रियते स्वार्थप्रियै: प्रधानाचार्यै: । यदागच्छन्ति शिक्षाधिकारिणो नेतारोऽन्ये निरीक्षणकर्तारो वा तदा पञ्चदशदिवसपूर्वं काश्चिद् व्यायामक्रिया:, सांस्कृतिक-क्रिया: अल्पाभ्यासानन्तरं तेषां समक्षं प्रस्तुता: क्रियन्ते । तथ्यानभिज्ञास्ते प्रयान्ति प्रशंसापत्रदानानन्तरं स्वस्थानम् । भवितव्या आकस्मिकनिरीक्षणपद्धति:।

प्रयोगयोग्या च व्यक्तीनां सामूहिकी व्यायामपद्धतिः ।

३- उद्योगशिक्षाभावः ---

अस्माकं देशस्य केषुचिद्विद्यालयेष्वेव उद्योगशिक्षा दीयते । सापि जीवनक्षेत्रे निष्प्रयोजना भवति --- यन्त्रवस्तूनां न्यूनमूल्यमयत्वात् । उद्योगशिक्षायाः साफल्याय यन्त्रवस्तुनिर्माणि कर्तव्यानि परिसीमितानि। भवितव्यो यन्त्रप्रयोगो नियन्त्रितः ।अन्यथा इयं शिक्षा किमपि फलं न जनयिष्यति । अन्ते यन्त्र प्रसार-विरोधो राष्ट्रहिताय भविष्यति ।नात्र कोऽपि सन्देह विषयःपदं करिष्यति कदापि । अन्ततो गत्वा यन्त्र दग्धं विश्वं प्रकृतिमातैव स्वपयोभिः पालयिष्यति शीतयिष्यति च ।

४- धर्मशिक्षाभावः --

सन्तियद्यपि साहित्यिकेषु पुस्तकेषु सत्यशौर्यसंयमसदाचाराहिंसामहत्त्वस्य प्रतिपादकाः विषयाः तथापि व्यवहारे एते निष्प्रयोजनाः सिद्ध्यन्ति । भवन्ति अत्र कानिचित्कारणानि ----

१- शिक्षकेषु एतादृशानां गुणानामभावो भवति तत्र प्रथमं कारणम् । यंगुणं जनः स्वयं न चरति तस्य शिक्षायाः प्रभावोऽपि न भवतीति मनोवैज्ञानिकं सत्यम् । अनाचारिते उपदेशे प्रभावबलं न भवति ।

२- अद्य पापपुण्ययोः , स्वर्गनरकयोः, यातनयोः कथाः कपोलकल्पिता सन्तीति उच्यते । अत्र भूमौ एतः स्वर्गनरकौ । एताभिः शिक्षाभिः दूरीकृता पापभीतिः पुण्यप्रीतिश्च । अनेन हेतुना कर्मचौरवृत्तिः निःशङ्कतया वर्धते । उत्कोचोपयोगो युगधर्मो जातः। स्वकीयंराष्ट्रीयवस्तु धनं वातोऽस्य अपहृतिः स्वार्थ-प्रयोगो वा नापराधः पापो वा। कस्यापि राष्ट्रस्य शासनतन्त्रःप्रजानामधिकारिणां वा दुष्प्रवृत्तिं दण्डबलेन अवरोद्धुं न शक्नोति । तां प्रतिरोद्धुं धर्म वृत्तिरेव समर्था भवति ।

एतदतिरिक्तं नैतिकी शिक्षा आचार्याचरिता भवितव्या । यावद्विद्यालयेषु प्रधानाचार्याः छात्रधनैः स्वोदराणि पूरयन्ति तावत् परधनं नाहरणीयमितीमां

शिक्षां दातुं योग्यास्ते न सन्ति । यथा विविधैः मार्गैः छात्राः स्वजीवनेषु शोषिताः भवन्ति तथैव शिक्षानन्तरं तेषामाचार्यास्तेऽपि विविधैः प्रकारैः धनानि संयोजयन्ति । कोऽत्र तेषां दोषः। यदाचरितं तेषामाचार्यैः तदेव तैः भवति आचरितम् ।

५- अनुशासनशिक्षाभावः --

भवन्ति केचिद् उद्दण्डछात्राः प्रायः सर्वेषु विद्यालयेषु परं न भवति तेषां बहुमतम्। चापि ते भवंति नियंत्रणबाह्याःसर्वथा न। बहुधा तेषां दलानि आचार्यप्राचार्यनियन्त्रितान्येव भवन्ति। प्रधानाचार्याचार्येषु विद्यमाना दलीयभावना एव छात्रेषु दलीयभावान् जनयति । यावत्तेषु विद्यते विद्वेषभावना तावच्च छात्रेषु अपि सा प्रत्यारोपिता भविष्यति आचार्यहस्तैः । अनुशासनविकृतिकर्मणः सूत्रधाराः भवन्ति सर्वत्र आचार्याः अपयशांसि च लभन्ते नटाः --- छात्राः । संक्षेपे अनुशासन-हीनतायाः हानिं, प्रधानाचार्याणां कर्मपरता जनिष्यति। यावत् ते सन्ति पापाचारिणः तावदाचार्येषु विद्वेषोऽपि वर्तिष्यते छात्रेषु च अनुशासनहीनता ।

उक्तविधासु शिक्षणसंस्थासु शिक्षिताः शिष्याः प्रमादारुद्ध्या कथं प्रक्ष्यन्ति ? न कथमपि । अतस्तत्र भवितव्या कर्तव्या वा उक्तविधव्यवस्था । अन्यथा कर्मनिष्ठाः छात्राः नागरिकाः वा न भविष्यन्ति येन राजनैतिकी स्वतन्त्रता बहुलीविनी भविष्यति ।

अपमानो दक्षतां क्षमतां चापचयति ----

यस्मिन् देशे श्रमिकाणां सम्मानो न भवति तत्र तेषां दक्षता क्षमता च हीयते शनैः शनैः । अपमानितो व्यक्तिः भवति मलिनवदनः। समाजे च प्रायः अपमानं सहमानो यः श्रमिको भवति तस्य बुद्धिरपि मलिनी भवति यस्माच्चस्य दक्षता नाशं याति । एवमेव सदा उदासभावेन दिनानि यापयन् चिन्तितोऽयं कर्मक्षमतामपि विनाशयति । अपमानितो जनः प्रसन्नतां न विन्दति । हर्षाभावे शरीरं पुष्टं न भवति । अपुष्टे च शरीरे क्षमतापि वासं न करोति। एवमसम्मानिताः श्रमिकः दक्षतां क्षमतां च विनाशयति यद्वा स्वयमेव एते नाशं समधिगच्छन्ति ।

शिल्पिनामपमानस्य दुष्परिणामा: ----

यस्मिन् समाजे शिल्पिनाम् अपमानो भवति तस्य समाजस्य श्रमशक्ति: हीयते । श्रमशक्तिक्षयाद् वस्तूत्पादनपरिमाणे न्यूनतां याति। यस्माच्च वर्धते वस्त्वर्घ: पीडन्ति । अप्रत्यक्षरूपेण सर्वे सामाजिका: । परं स्वामिनस्तस्य दु:ख-फलानि आस्वादयापि ते न जानन्ति दु:खहेतु: --- बुद्धे: कुण्ठितत्वात् ।

कोऽपि समाजो व्यक्तिर्वा अपमानं सहमानोऽपि निष्क्रिय: प्रतिक्रियाशून्यो वा न तिष्ठति । तस्य अन्त: करणं सदा उद्वेलितं, विक्षुब्धं, प्रतिशोधभावनाक्रान्तं च वर्तते । असन्तुष्टोऽयम् अनुकूलमवसरं सम्प्राप्य क्रान्तिध्वजम् उच्छ्रितं करोति । अतिसज्जितोऽयं शोषकानां नरपिशाचानां रक्तधारां पिबति पाययति च ।यद्वा धर्मान्तरं स्वीकरोति । विश्वकर्मावमानना कलां शान्तिं प्रददाति। कलाभावे अत्याचारिणां धनिकानां का मन:स्थिति: भवति तां तु ते भुक्तभोगिन एव जानन्ति।

अस्ति सर्वेषु राष्ट्रेषु निम्नवर्गीयाणां विश्वकर्मणामेव बहुमतम् । तच्च अनादिकालादस्ति भविष्येऽपि च भविष्यत्येव । तेषाम् अपमानस्य फलानि अर्वाचीनक्रान्त्यादिभि: राष्ट्रैस्तु प्राप्तानि अन्यैश्च येषु अस्माकं देशोऽपि एकोऽस्ति प्राप्तुमुत्को दृश्यते । महदुद्योगगोत्रेषु प्राय: हट्टताला एव पठ्यन्ते समाचारपत्रेषु । स्वापमानवृत्तिपीडिता: शिक्षका: ,लिपिका:, चालका:, परिचालका:, अन्ये च वर्गस्य कर्मचारिण: प्राय: हट्टतालपथपथिका: श्रूयन्ते । न्यूनवृत्ति: अपमानश्च समाजशान्ते: शत्रू एत:। तौ च निवारणीयौ सदा राष्ट्रहिताय।

अपमानहेतो: धर्मान्तरं गतो व्यक्ति: समाजो वापि त्यक्तबान्धवानां सुखाय शान्तये वा न भवति । धर्मान्तरं गतो यं शत्रुत्वेन वर्तते त्यक्ते समाजे ।

अतो निम्नवर्गीयेषु श्रमिकेष्वपि अपमानेन न वर्तयितव्यमात्मराष्ट्र-हिताय ।

श्रमिकेभ्यो स्पृश्या: नेतार: ---

मतलोलुपा: दलीयनेतार: श्रमिकेभ्य: तथैव अस्पृश्या: दूरत एव च संभाषणीया: कर्तव्या: यथा अवस्करको भवति । अन्यथा श्रमिकवर्गेषु प्रविश्य

एते तत्रापि पदस्वार्थाभ्यान्तरिकदलदोषात् उत्पात प्रसार्य च विघटनवृत्तिं प्रवर्तयिष्यन्ति। अशिक्षिता: अर्धशिक्षिता: वा श्रमिका: तेषां कपटनीतिं विज्ञातुं न शक्नुवन्ति ।

अन्यच्च यदि नेतारो धूर्ता: नापि भवन्तु तथापि दलानां श्रमिकेषु प्रविष्टे सति तेषु दलीयविवादा: प्रचलिष्यन्ति येन तेषां श्रमसंघो विघटितो भूत्वा शक्तिहीनो भविष्यति । शक्तिहीन:संघ: समस्यानां समाधानेष्वपि अशक्तो भवति । सशक्तसंगठनाभावे धनिकेषु शोषणप्रवृत्ति: बलवती भविष्यति । एवं दलनीतिप्रवेशेन तेषां दु:खानि वृद्धिं गमिष्यन्ति। जीवनानि पशुकष्टजीवनानि भविष्यन्ति । श्रमिकै: अत स्वेषु प्रविष्टदलानि उत्खातमूलानि कर्तव्यानि।यदि तेषु राजनीतिप्रवेशेच्छा बलवती स्यात्तर्हि तै: " श्रमलोक " इत्यनेन नाम्ना अभिनवं राष्ट्रीयदलं कर्तव्यं येषु सर्वे एव नेतार: श्रमिका: एव भवन्तु वर्तमानश्रमिका:।

श्रमस्य क्रेतारो विक्रेतारश्च बान्धवो न स्वामिदासा: --

यद्यपि विश्वे सर्वे जना: श्रमस्य क्रेतारो विक्रेतारश्च सन्ति तथापि उच्चवर्गीया: श्रमिका: परस्परं सम्मानपूर्वकं वर्तन्ते । त एव निम्नवर्गीयेषु श्रमिकेषु अनादरेण उपेक्षया च वर्तन्ते । आपणेषु, व्यक्तिगत संस्थासु चसेवारतेषु जनेषु तेषां स्वामिन: क्रीतदासा इति कृत्वा व्यवहरन्ति । तेषामयं व्यवहारो विद्रोहस्य संघर्षस्य च हेतु: भवति येन न केवलं कार्यक्षमतैव परिहीयते अपितु मनोविकृति: दक्षतास्तु अपि न्यूनी करोति ।

यत्र श्रमक्रेतासु विक्रेतासु च बन्धुत्व भावना भवति तत्र श्रमस्य बहुमुखो विकासो जायते । श्रमिका: सन्तुष्टा: भूत्वा सुखेन जीवन्त: श्रमक्षमतां कौशलं च वर्धयन्ति। अभिनवकलाप्रदर्शनेन स्वयशांसि विस्तारयन्तस्ते राष्ट्रायापि ख्याति-मर्जयन्ति । सर्वेषामेमानवानां शरीराणि पञ्चभूतविनिर्मितान्येव तत्र नास्ति कोऽपि विशिष्टो देहदृष्ट्या। सर्वेष्वेक एव पूरुष: सन्निविष्टोऽस्ति। संसारे तेषु वैविध्यस्तु अर्थमूलकमस्ति । तत्र समता सम्भवापि नास्ति। एते श्रेऽपि

नितान्तमेव बन्धके स्त:। एतयो: अभिमानबुद्धि: न करणीया विज्ञै: । अन्याश्च एताभ्यां हीनं दृष्ट्वा तेषु हीनबुद्धि: क्वापि ——— मानबुद्धिर्वा न करणीया । दासा एव दासत्वेन वर्तन्ते अर्थबुद्धिन्यूनेषु जनेषु न मान्या: । श्रमिकोऽर्थाय श्रमं करोति । क्रेतारश्च कार्यसिद्ध्यर्थं श्रमं क्रीणन्ति। अस्त्यत्र श्रमस्तेषामर्थदासो न श्रमिक:। कार्यायाभीष्टश्रमस्य दायित्वं श्रमिको वहति । परं नायं क्रेतु: दासो दासव्यवहार योग्यो वा । परं मदान्धै: धनिकै: अत्याचारिभि: नरादैश्च एते दीना: दासा:क्रियन्ते । अस्य दासत्वस्य अन्तो रक्तक्रान्तिषु अग्निज्वालासु च भवति ।

योधनीया: शोषका: श्रेशा:( धनिका: ) ---

प्रत्येकं समाजे धनेशानां शोषणवृत्ति: अनुदिनं तरुणायते ।पत्रमुद्रा गर्भगृहेषु संगृहीता भवति । धनिकानां लाभांशो वर्धते व्यापारभावेन सह परं श्रमिकाणां वृत्ति: नीरसतरु इव निश्चला वर्तते, आगते झंझावाते अपि । अमानवीयोऽयं व्यवहार: । कर्तव्यो विरोधोऽस्या: शोषणवृत्ते: । यत्र मूल्यवृद्ध्या सह वृत्तिवृद्धि: न प्राप्यते तत्र शोधनीया एते शोषका: श्रेशा:। कालानुसारं निर्वाहक वेतनस्य उपलब्ध्यर्थं कर्तव्यास्तै: संघर्षा:-- यथा भवतु कार्यसिद्धि: ।

शोषकाणामविरोधेन तेषां शोषिका वृत्ति: कुत्रापि कृशतां न प्राप्स्यति । अपितु सरला एते अतीव शोषणीया: सन्तीति मत्वा तां वर्धयिष्यन्ति एव । अन्यच्च अविरोधेन वृत्तिवृद्धि: कदापि सम्भवा नास्ति । वस्तुमूल्यवृद्धिश्च सुरसरिधारेव सदाग्रगामिनी अस्ति। अस्यामवस्थायाम् अविरोधेन श्रमिकाणां जीवनानि स्वानुभूतै: दु:खै कुक्कुरकष्टानि क्षेपयिष्यन्ति । अतस्तदर्थं योधनीया: सर्वदा शोषका: धनपतय:।

तत्र धर्मो रक्षति रक्षित: ---

यद्यपि शोषकानां श्रमदासकानां संख्या विश्वे नास्त्यधिका तथापि धनबलेन विघटकशक्त्या चतै: असंख्याता: संघार्थमतिकृशा: श्रमिका: दासी क्रियन्ते । अद्य औद्योगिका: श्रमिका: नानासंघकेषु संगठिता: सन्ति यद्यपि तेषु राजनीतिक-

यो धर्मो लोक धारकोऽस्ति यो वश्यमेव अस्मान् मदान्धैः पीडितान् अपि धारयिष्यति -- संकटेषु, समरेषु च । अधर्मो वै सन्देह हेतुः । सन्देहश्च विघटनहेतुः। अतः संघसंगठनदृष्ट्या त्याज्योऽयमधर्मः ।

अन्यच्च अधर्मो मतिशान्तिस्वास्थ्यहानिहेतुः। अतो यं सर्वथा त्याज्यः। अन्यथा शनैः शनैः वर्धमानः पापवृक्षः प्रौढ़तां प्राप्य स्वकण्टकफलैः संघशरीरं विदारयित्वा रक्तस्नातमशक्तञ्च करिष्यति। पापप्रवृत्तो मानव एव यदा स्थायित्वं न भजते तदा शरीरसंघः श्रमसंघः कथं स्थायित्वं प्राप्स्यति ? न कथमपि इति भावः।

धर्माचरणेषु शङ्का जनमानसेषु पदं न करोति। सर्वे संघाङ्गभूताः श्रमिकाः विश्वस्ताः भवन्ति । शान्ताः भवन्ति। तेषु शान्तिः विश्वसनीयतां च सम्पश्य अन्येऽपि तस्य संघस्य अङ्गत्वं भजन्ते, येनासौ अनुदिनं दृढ़तरो भवति, वर्धते च ।

विजयते धर्मश्रमसंघः --

`धर्मे सर्वं प्रतिष्ठितम्` इत्यनेन वचनेन सर्वेषां प्रतिष्ठा धर्म एव ज्ञायते । धर्मं परित्यज्य किमपि वस्तु कोऽपि जीवो यावत्पर्यन्तं स्थातुं न शक्नोति । चिर-प्रतिष्ठा पुनः सर्वैः काम्यते । सर्वांसर्वतो विघ्नन्ते विविधविघ्नगणाः व्याकुलयन्तः। तेषु मध्ये स्थितिहेतुः धर्मं एव भवति नाधर्मः। यो धर्मो विश्वं धत्ते स एव श्रमसंघं धर्तुं क्षमो नान्यः। धर्ममूलः संघः एव अस्मिन् अहैतुकसंघर्षयुगे स्थातुमर्हति । कपटमूलः संघः कञ्चित् पदानि गत्वादौ तीव्रतरगत्या पश्चान्नाना दिक्षु प्रधावति विश्वतोमुखो भूत्वा। विनश्यति च समभूमौ प्रवहणशीलं जलमिव कामपि धारामवृत्त्वैव। पूर्वजैः पापमूलानि शून्ये उक्तानि यस्माद्भोज्यानि नोपलभ्यन्ते तद्वृन्दावृद्धयर्थं । उपलभ्यते च तैः रविरश्मितापः तत्त्व-शोषकः।

अतो विपश्चिद्भिः परिवृतेन श्रमसंघेनापि आत्मानं धर्ममूलकं कर्तव्यम् । धर्मेण सम्प्राप्ता धारिणी शक्तिः संघं विपत्सु संधारयिष्यति। समरे स्थितिं प्राप्तो जनः अन्ततो गत्वा जयत्येवासंशयम् इति इतिहाससिद्धम् । `यतो धर्मस्ततो जय` इति ध्रुवं मतम् । अतः श्रमसंघो धर्ममूलः कर्तव्यो विजयाय ।

श्रमो वै एको विजयश्रीपतिः --

विश्वस्य विश्वेषु कर्मसु विजयहेतुः एक एव श्रमोऽस्ति । कार्यसिद्धिः कर्मजयः। जीवैः अनुदिनं क्रियमाणेषु कर्मसु अनिवार्या श्रमापेक्षा। पानाशनकर्मसु अपि श्रमोऽपेक्षितो भवति । का कथा पुनःअन्येषु कर्मसु श्रमापेक्षायाः । तत्र तु कार्यगौरवानुसारं भवति अपेक्षितः श्रमः।एक एव श्रमः कर्मसिद्धिदः अस्तीति-नात्र विचिकित्सा विषयः कश्चित् --- कार्यसिद्धौ अन्यहेतोः अदर्शनत्वात् ।अतः श्रमो वै एको विजयश्रीपतिः ।

कर्मणा श्रमेण चामरत्वप्राप्तिः ---

नश्वरं सर्वं दृश्यम् । नरदेवैश्वरकृतानि सर्वाणि रूपाणि नश्वराणि सन्ति । यावदेषां स्थितिः तावदेव प्रशंसन्ति जनाः । अनन्तरं तेषु विशिष्ट-गुणमण्डितान्येव रूपाणि नाम्ना यशसा वा ज्ञायन्ते। ये विश्वकर्माणः श्रमपूर्वकं कलाकृतीः कुर्वन्ति तेषां कलाकृतयः शरीराणि च कालादामत्वात् कालान्तरे नाशमुपयान्ति । परं यशसा ते ताश्च गुण गौरवानुसारं सुचिरं यावद्युगं वा जीवन्ति। कार्यगौरवादेव श्रमदेवो विश्वकर्मा अद्य जनमानसेषु मानेन महीयते । अयं तु महत्त्वैकविषयोऽस्ति यद् वैदिकेषु पौराणिकेषु च शिल्पिषु एकमात्र विश्वकर्मण एव कृतिः जगन्नाथप्रतिमा उपलब्धास्ति । गतवर्षेषु ( १९७०-७१) जापानदेशे प्राप्ता बुद्धप्रतिमा विश्वकर्मकृता मन्यते। अन्येषां शिल्पिनां कार्याणि श्रूयन्त एव नोपलभ्यन्ते। अजन्तादिगुहासु प्राप्तप्रतिमानां न ज्ञायन्ते कलाकाराः। विचित्रं विधिविधानं सन्ति कृतयो न नाम्नापि तासां कर्तारः। बहवः कलाकाराः नाम्नैव ज्ञायन्ते तेषां कृतयः यवनकृतान्तैः कवलिताः कृताः ।

अस्तु । श्रमजन्याःकृतयः शिल्पिनां यशः शरीराणि कुर्वन्ति जनयन्ति वा। येषु शरीरेषु जरा मरणं वा न प्रविशति देवशरीरेष्विव ।

आदौ अश्विनौ नास्तां यज्ञभागिनौ देवौ । पश्चात् वैद्यत्वेन यज्ञभागिनौ देवौ बभूवतुः। एवमेव स्कन्दपुराणानुसारं विश्वकर्मापि यज्ञभागी सोमपायी देवो नासीत् । पश्चात् हरिवंशे अश्वशिरसन्धानकालात् देवैः सह यज्ञभागाधिकारी देवो जातः। एताभ्यां कथाभ्यां श्रमेण शिल्पेन वा देवत्वप्राप्तिरेव उच्यते। गीतायामपि

अतोऽइमवं कर्म सततमसक्तो भूत्वा ह्याचरन् जनः परमं पदं प्राप्नोतीत्युच्यते (३।१६)। जनकादिभिः महापुरुषैः अपि निष्कामकर्मयोगेनैव प्राप्तं तत्पदम् । अतः कर्मणा श्रमेण चामरत्वप्राप्तिः परमपदप्राप्तिश्च भवतीति निश्चित्य, कर्माधिकारिक्तो भूत्वा, मनोयोगेन कार्यं कर्म समाचरेदिति उक्तं भवत्यत्र ।

विजयतां श्रमेण श्रमिकाः ---

श्रमस्य विश्वकर्महेतुत्वात् तदाधाराः श्रमिकाः सर्वत्र माननीयाः सन्ति । कर्माभावे विश्वस्थितिः सर्वथा कल्पनातीतास्ति । अतः कर्मतातत्याय तेषु आदर-भावना अनिवार्यतया कर्तव्या । यथा च वृद्धिमस्यायाः उपेक्षा काले- काले हडतालहेतुः भवति तथैवेयं वर्धमाना उपेक्षावृत्तिः निकटे भविष्ये हिंसक्रान्तेः हेतुत्वं प्राप्स्यति । धनिकानां शासकानां च उपेक्षावृत्तिः अन्तोन्मुखी न दृश्यते। यावती पुरःसरति तावती एव प्रतिसरति। श्रमस्य अपरिहार्यतां सम्पश्यन् कार्योऽयं श्रमिकैः प्रयत्नतः। कलाकृतिभिः जेयानि जनमनांसि । प्रसादनीयाः श्रमेण श्रमूल्य-दातारः । परं योधनीयाः यत्नपूर्वकं शोषकाः अत्याचारिणो वा। सुगठितश्चैः सुविगठितैश्च श्रमसंघैः सदा श्रमिकाः सुशिल्पानि शोषकांश्च विजयन्तामिति युगेश्वरस्य श्रमदेवस्य विश्वकर्मणः आशीर्वचनानि ।

विदुषां वशंवदः

।। दीपावली ।।

सं० २०३०

अहिबरन सिंह कुशवाहः

( अहिबरनसिंह कुशवाहः )

----००----

॥ श्रीः ॥

अस्तु हलिना सार्धं , नित्यं कृष्णो हलीसखा ।
कर्तुं पातुं च कार्याणाम्, रक्षितो विश्वकर्मणा ॥

## वैदिकदेवतानां स्वरूपमादिविमर्शः

### आदौ वैदिकदेवतानां स्वरूपकर्मविवेचनस्य आवश्यकता :

अस्ति मानवसंघः समाजः धात्ववयवानां यन्त्रमिव । न विद्यते यथैकरूपता समता वा तत्र यन्त्रावयवाकारेषु कार्येषु वा न दृश्यते तथैव एकरूपता समता वा देवमानवसमाजावयवानामपि कार्येषु बलबुद्धिविवेकवैविध्यत्वात् ।सत्यपि एवं वैविध्ये आन्विता एव सर्वेषामुपस्थितिः यथा यन्त्रसंचालने, किन्तु अवयवा एव सर्वथा तेषु महत्त्वसमता कार्यगौरवभेदात् ,एवमेव कार्यगौरववैषम्यत्वात् देवमानवसमाजयोरपि न भवन्ति सर्वेऽपि महत्त्वसमतां यद्यपि उपस्थित्यनिवार्यतामापादयन्त्येव, यन्त्राङ्गानीव।

यन्त्रे तु यानि कानि एव अवयवानि एवंविधानि भवन्ति एषामभावो न भवति चिन्ताविषयः हीनमहत्त्वात् , परन्तु समाजस्य तु अधिकांशः स्वार्थपरः एव भवति । अतः केचिदेव स्वनामधन्याः नरदेवाः समातु शंसनीयं महत्त्वमावहन्ति। भवन्ति वै परोपकारैकधियः दधीचिदयानन्दयोरिव, समाजार्पिताः महामना मदन-मोहन मालवीयराजारामभोहनराय डा० केशव बलीराम हेडगेवाराणामिव, परसुखाय स्वसुखविमुखाः गान्धिगौतमरामचन्द्राणामिव, मातृभूमिमुक्तिरक्षणार्थं दुःखद्रुत-भूताः शिवासुभाषप्रतापाणामिव, दानशीलाः शिविकर्णसूर्यकान्त 'निराला'ऽऽ-दीनामिव, शरणागतरक्षकाश्च कृष्णभोजविक्रमादित्यादीनामिव नृषु ; देवेषु वा इन्द्राऽग्निवरुण विश्वकर्मादीनामिव वदान्याः जनरक्षकाः, शत्रुहन्तारः, कर्मकलाकुशलाः वा यन्त्रसंचालकेव स्वसमाजसञ्चालकाः । तद्ध्यायन्ते त एव समाज-शिरोमणिषु । तानेव स्वीकुर्वन्ति सामाजिकाः नेतारः स्मरन्ति सायंप्रातः स्वोत्सवेषु स्थापयन्ति च चित्राणि कक्षेषु । दृश्यन्ते तेषामेव पुण्यनामानीतिहास-पृष्ठेषु स्वर्णरजताक्षरेषु ।

एवंविधगुणान्वितदेवानाञ्च क्रियते यज्ञेष्वाह्वानं योगिभिश्च ध्यानम् ।

अन्ये च असंख्याता: जायन्ते, यापयन्ति च जीवनानि, म्रियन्ते च परं न ज्ञायन्ते तेषां नामान्यपि समाजेषु—क्रियासु गौरवाभावे ।

एवं कार्याण्येव समाजे महत्त्वादिप्रतिपादकानीति व्यवहारेण सिद्ध्यते ।

सत्यमेतद्। तथापि नृदेवसमाजयो: कस्याऽपि सामाजिकस्य पदमहत्त्वादि-निरूपणार्थमपर्याप्ता मात्र तस्य सामाजिकस्य कार्यविवेचना । तत्र तु अनिवार्या भवति पर्यालोचना, पदमहत्त्वादिप्रतिपादनार्थं स्वीकृतस्य सामाजिकस्य कार्याणामन्यप्रमुखसामाजिकानां कार्यै: सार्धम् यतो हि अन्यान् सामाजिकान् अविगणय्य कृता एकस्य कार्यालोचना भविष्यति अरण्यरोदनम्—समाजे पदमहत्त्वनिश्चयाऽभावे। यथावसर समस्तसामाजिकानां प्रमुखसामाजिकानां वा गुणदोषविवेचनाश्लिष्ट-सङ्घटकस्य क्रियाविवेचना साफल्यमनुभविष्यति—तत्रैव सङ्घटकानां क्रियागौरव-तन्तोलनं सम्भवत्वात् ।

अत एव अत्राऽपि वैदिकी शिल्पदेवताविश्वकर्मण: स्वरूपकर्मादिविमर्शात् प्राग् वैदिकदेवतानां स्वरूपकर्मादिविमर्श: सर्वथा समीचीन एव सिध्यति । तद् निरूप्यतेऽत्र तावत् वैदिकदेवसमाज: सह चारित्रिकवैशिष्ट्यै:——

## वैदिकदेवसमाज:

ऋगथर्वयो: देवानां सङ्ख्या प्राय: त्रयस्त्रिंशी एव पठिता मिलति ( ऋ० १, १३९[११] ; ३, ६[६]; ८, ३५[३] इत्यादि; अथर्व० १०, ७[१३]) अपि च शतपथैतरेययो: ब्राह्मणयो: एतेषां सङ्ख्या प्राय: त्रयस्त्रिंशी एव कथिता परन्तु एकदा ( ४, ५, ७[२]) प्रजापतिं पठित्वा तत्र देवानां सङ्ख्या चतुस्त्रिंशी कृता । एतेषां तु देवानामेव दृश्यन्ते प्राय: स्तुतय: वेदमन्त्रेषु । परन्तु उक्तानुक्तदेवानां तु सङ्ख्या अधिकैव कथिता । तथाहि—ऋग्वेदे देवानां सङ्ख्या ( ३, ९[९];१०, ५२[६]) एकोनचत्वारिंशदधिकत्रयस्त्रिंशच्छतम् अथर्ववेदे च त्रयस्त्रिंशदधिकत्रिषष्टिशतम् (१०, ३१५[२]) पठिता ।

देवानां वर्गीकरणानि :—

अ०अ० मैकडानलमहोदयेन स्वकीये वैदिकपुराकथाशास्त्रग्रन्थे केचित् वर्गीकरणाधाराः प्रस्तुतीकृताः तेषु मूर्तीकरणम्, कालगता सापेक्षिकता, देवेभ्योऽर्पिता सूक्तसङ्ख्या नामावृत्तिसङ्ख्या प्राकृतिकाधारश्च मौलिकाः सन्ति । ऋग्वैदिकं त्रिपदीयं वर्गीकरणम् ( ऋ० १,१३९)[११] सापेक्षिकमहानताऽनुसारी (ऋ०१, २७)[१३] च सामान्यविभाजनमात्रं उल्लिखति परन्तु कुत्रापि तन्नोपर्णं न भवते । सन्दिग्धदृष्टिरेव दृश्यते अयं जनः । वर्गीकरणकार्ये क्वचित् अनिश्चिततां क्वचिच्च अनुभवति सापदः ।

तस्य मताऽनुसारं तु प्राकृतिकाधारेषु कृते वर्गीकरणे एव न्यूनतमापत्तिः सम्भवति येषामिमे देवाः सन्ति प्रतिनिधयः। कुर्वन् चाऽस्य वर्गीकरणस्य विवेचना, स्वयमेव विद्वान् विवेचकः विज्ञापयति यत् यद्यपि काऽस्ति कस्याः देवतायाः आधारभूता प्राकृतिकी वास्तविकता, सम्भवत्यत्र न्यूनाधिकसन्देहः कश्चित् दशासु, अत एव च तस्य देवस्य दौर्बल्यपूर्णस्थाने वर्णना शङ्कापि सम्भवति, तथापि एषा विधिः सजातीयधारिभिर्वैशिष्ट्ययुक्तदेवानां तुलनात्मकमध्ययनं सरलीकरोति । एतद् कथनानन्तरं न प्रस्तुतं तेन तदनुसारी वर्गीकरणमिति खेदविषयम् ।

नामसूक्तसंख्यानुसारं प्रदत्तं तेन वर्गीकरणं । यथा हि——

१- इन्द्राग्निसोमाः , २- अश्विनौ, मरुद्गणः वरुणश्च।

३- सूर्यः , उषाः , पूषन्, सवितृ, बृहस्पतिश्च । ४- वायुः, रुद्राः, विष्णुः, द्यावापृथिव्यौ । ५- यमपर्जन्यौ ।

परन्तु, नार्हति भवितुं नामसूक्तसंख्या वर्गीकरणस्य आधारः महत्त्वहीनत्वात्, विद्वद्दृष्ट्या अग्राह्यत्वात् गौरवस्य सन्दिग्धतापकत्वाच्च ।

यो वासौ 'सापेक्षिकी महानता' नामकः वर्गीकरणाधारः, ऋग्वेदस्य (१, २८)[१३] मन्त्रे आधारितः अस्ति। परन्तु असौ महान् देवः, असौ च लघुः, वा असौ युवा वृद्धो वा नेदं वर्गीकरणम्——'सापेक्षिकी महानता' सूचकं वर्गीकरणम्। कोऽत्र विशेषः सरलमर्गे ? न चेदलं प्रकटितुं देवानां सापेक्षिकी महानता द्वयोरेव शब्दयोः ।

अपरञ्च, यं मन्त्रमुल्लिखति मैकडानलमहाशयः स्वमतपुष्ट्यर्थं तत्रापि, महानादयः शब्दाः देवानां वैशिष्ट्यव्यञ्जकाः नैव सन्ति, सन्ति च व्यक्तिवैशिष्ट्य-व्यञ्जकाः । न च अत्र मन्त्रद्रष्टारमभीष्टं देवानां विभाजनं केनापि रूपेण। नमस्करोत्यत्र यजमानः सर्वविधान् जनान् , न च देवान् ।

यदि च प्रयतते, तर्हि, कुतोऽपि कार्याणां विवेचना, दृष्टिभेदात्, वर्तिष्यते एव वक्रा स्य वर्गीकरणस्य रेखा । दृष्टिभेदो हि कार्यगौरवभेदजनकः अतो वर्तिष्यते सर्वदा विवादविषयः यत् कानि- कानि कार्याणि भवितव्यानि प्रथमे पदे, तथैव च कियन्ति कार्याणि समावेश्यानि एकस्मिन् पदे अथवा एकमेव कर्म, एकस्य दृष्ट्यां भविष्यति महत्त्वपूर्णम्, द्वितीयस्य च दृष्ट्याम् अपेक्षाकृत न्यूनमहत्त्वस्य। एवं सापेक्षिकी महत्ता नैव सिध्यति दृढाभूमिः वर्गीकरणस्य, अपितु विवादस्य जननी ।

ऋग्वेदस्य ( १, १३९[११]) अस्मिन् मन्त्रे स्थानभेदात् देवानां त्रयो वर्गाः प्रतिपादिताः—एकादशैव पृथ्वीस्थानीयाः, एकादश अन्तरिक्षस्थानीयाः द्युलोकस्थायिनश्च एकादश । परम्, नोल्लिखितानि एकत्र कुत्रापि वेदेषु नामानि देवानां ये ये सम्मेलिताः अत्र ( १०, १५८[१]) मन्त्रे त्रिपदीयोपक्रमेभ्यः रक्षणार्थम् अग्निवायुसूर्याः, पृथिव्यन्तरिक्षद्युलोकानां प्रतिनिधयः इति कृत्वा एव सन्ति आमन्त्रिताः। अनेन उक्तं भवति यत् पार्थिवेषु देवेषु अग्निः, अन्तरिक्षीयेषु वायुः, द्युलोकिकेषु च सूर्यः प्रधानः अस्ति ।

वेदानां प्रतिपाद्यविषयः अभीष्टलाभाय देवस्तुतिः , न च वर्गीकरणं, नाम वृक्षादीनां पठनम् , आधुनिकदृष्ट्या। अस्वाभाविकञ्च वर्गनामपठनं स्तुतिकाले । पुनश्च देवाराधनकाले पठिताः तत् तद्देवावासाः । अतएव परिहार्या पुनरुक्तिः भविष्यति च लोकाचारदृष्ट्या देवानां वर्गीकरणम् एवम् ——

## स्थानभेददृष्ट्या वर्गीकरणम्

| पार्थिवाः देवाः | | अन्तरिक्षीयाः देवाः | | द्युलोकिकाः देवाः | |
|---|---|---|---|---|---|
| १- अग्निः | २- आपः | १- इन्द्रः | २-मरुद्गणः | १-सूर्यः | २-सवितृ |
| ३- पृथिवी | ४- सोमः | ३- पर्जन्यः | ४-त्रित आप्त्य | ३- आदित्याः | ४-विवस्वत् |
| ५- क्षेत्रपतिः | ६- बृहस्पतिः | ५-रुद्राः | ६-अपां नपात् | ५-उषस् | ६-पूषन् |
| ७- वास्तोष्पतिः | ८- नद्यः | ७-मातरिश्वानः | ८-वायुः वातः | ७-विष्णुः | ८-मित्रावरुण |
| ९-अश्वः | १०-भृगुगणः | ९-अज एकपात् | | ९-अश्विनौ | १०-विश्वकर्मा |
| ११- मनवः | | १०-अहिर्बुध्न्यः | | ११-प्रजापतिः | |

एवमेव सामान्यदृष्ट्या, अस्तित्वप्रकारमपि संलक्ष्य सम्भवति साधारणं वर्गीकरणम् ।

## अस्तित्वविधिभेदाद् वर्गीकरणम्

| मूर्तदेवाः | | अमूर्तदेवाः | | मूर्तामूर्तदेवाः |
|---|---|---|---|---|
| १-सूर्यः | ९-अपांनपात् | १- इन्द्रः | ६- क्षेत्रपतिः | १- मरुद्गणः |
| २-सवितृ | १०- पर्जन्यः | २- मित्रम् | ७-त्वष्टृ | २-वायुः, वातः |
| ३- आदित्याः | ११- आपः | ३- विष्णुः | ८-विश्वकर्मन् | ३-अज एकपात् |
| ४-विवस्वत् | १२- सोमः | ४- पूषन् | ९- प्रजापतिः | ४-अहिर्बुध्न्यः |
| ५- अग्निः | १३- रुद्राः | ५- अश्विनौ | १०-वास्तोष्पतिः | ५-त्रित आप्त्यः |
| ६- पृथ्वी | १४- नद्यः | | | |
| ७- बृहस्पतिः | १५-वरुणः | | | |
| ८- सप्तर्षिः | १६-उषस् | | | |

ऋग्वेदोक्ताः ( २,३१[१];१०,३६[१२]) रुद्रादित्यवसवः अपि अर्हन्ति भवितुं त्रिपदीयानां देवानां प्रतिनिधयः, वर्गीकरणाधाराश्च। दिव्यन्तरिक्षभौमानां एते प्रतिनिधिदेवाः—वसुरुद्राऽऽदित्याः—अन्यत्र गुणवाचकाः, न च मात्र स्वनामवाचकाः। एवं ये ये देवाः प्रत्यक्षाऽप्रत्यक्षरूपेण बुद्धाः सन्ति ते बहुषु ,

यदा कदा शुभाशुभकराः अन्तरिक्षीयाः रुद्रेषु, आदित्येषु च प्रकाशगुणान्विताः समापतिष्यन्ति । नात्रेत्यत्र वार्ता भवितुमवरोधः, स्पष्टमर्थेऽस्मिन् व्याघातशङ्कया । एवञ्च वर्ण्यन्ते प्रमुखाः देवाः —

## गुणवाचकं वर्गीकरणम्

| वसवः | | रुद्राः | आदित्याः | |
|---|---|---|---|---|
| १- अग्निः | २- वायु-वातौ | १- मरुद्गणः | १- सूर्यः | २- सवितृ |
| ३- पृथ्वी | ४- सोमः | २- मातरिश्वन् | ३- आदित्यगणः | ४- उषस् |
| ५- आपः | ६- पर्जन्यः | ३- अज एकपाद् | ५- विवस्वत् | ६- पूषन् |
| ७- इन्द्रः | ८- विश्वकर्मन् | ४- अहिर्बुध्न्यः | ७- मित्रः | ८- वरुणः |
| ९- अङ्गिरसाद्यः पुरोहिताः | | ५- त्रित आप्त्यः | ९- धाता | १०- अंशुमान् |
| १०- अश्विनौ | ११- क्षेत्रपतिः | ६- अपां नपात् | | |
| १२- वास्तोष्पतिः | १३- विष्णुः | ७- हरः | | |
| १४- सूर्यः | | ८- भैरवः | | |

एतेषां वर्गीकरणनामपेक्षया प्रकृतिसम्मतगुणकर्मानुसारं कृतं वर्गीकरणं अधिकं भविष्यति व्यापकम्, तच्च भवति प्रतिपाद्यमेवम् —

## गुणकर्मानुसारं वर्गीकरणम् ( प्रकृतिसम्मतम् )

| प्राकृतिकरूपानुरूपिणो देवाः | | | लौकिककर्मानुरूपिणो देवाः | | |
|---|---|---|---|---|---|
| प्रकाशत्वम् | संसरणत्वम् | द्रवत्वम् | रक्षकत्वम् (अरिसम्मर्दम्) | कर्तृत्वम् | पौरोहित्यम् |
| १ सूर्यः | १ मातरिश्वन् | १ पर्जन्यः | १ इन्द्रः | १- विश्वकर्मन् | १ बृहस्पतिः |
| २ सवितृ | २- मरुद्गणः | २ आपः | २ विष्णुः | २- प्रजापतिः | २ अङ्गिरसः |
| ३ आदित्यगणः | ३ वायुः, वातः | ३ सोमः | ३- पृथिवी | ३- त्वष्टृ | ३ भृगुगणः |
| ४ विवस्वत् | ४ अज एकपाद् | ४ रुद्राः | ४ पूषन् | ४ ऋभवः | ४ सप्तर्षयः |
| ५ उषस् | ५ अहिर्बुध्न्यः | ५- नद्यः | ५ मित्रावरुणौ | | ५ अथर्वन् |
| ६ द्यौः | ६ त्रितआप्त्य | | ६ अश्विनौ | | ६ अत्रिः |
| ७ अग्निः | | | ७ वास्तोष्पतिः | | ७ कण्वादयश्च |
| ८ अपांनपात् | | | ८ क्षेत्रपतिः | | |

वैदिकवर्णनानुसारं वैज्ञानिकशोधानुसारञ्च पूषन्, अश्विनौ, पृथिवी, वरुणः, बृहस्पतिः, सप्तर्षयश्चापि सन्ति प्रकाशगुणान्विताः, परम् अत्र, वैदिकवर्णनानुसारं सह तद्गुणानां प्राधान्यत्वात्, तत्रैव पठिताः ।

एकद्विबहु( गण) दैवत्यत्वेऽपि सम्भवं सरलं वर्गीकरणं देवानाम् । परमत्र द्विदेवत्यवर्गे ये देवाः सहाऽऽध्यायन्ते तेषु, अश्विनौ वर्जं सम्भवन्त्येव मित्रावरुणौ अपि- अन्ये देवाः एकदेवत्ये गणिताः भवन्ति । तथापि दृश्येतेऽत्र द्वे वैशिष्ट्ये--तत्र प्रथमं वैशिष्ट्यम्--प्रधानदेवस्य सहयोगिनि देवे गुणसंक्रमणम्, द्वितीयञ्च कार्येषु परस्परसहयोगेन वर्तते यस्या भावः तेषां वर्णनेषु ।

एकदेवत्यवर्गे तु समापतति विशालदेवसमूहः येषु सूर्येन्द्राग्न्यः प्रमुखाः सन्ति । गणदेवत्ये वसुरुद्रमरुदादित्याः विश्वेदेवाश्च प्रमुखाः सन्ति । पौरोहित्यकर्मशीलाश्चाथर्वभृग्वाद्याङ्गिरसश्चापि । द्विदेवत्यवर्गे अश्विनौ, द्यावापृथिव्यौ, मित्रावरुणौ, इन्द्रेण सार्धमग्निसोमवायुविष्णुवरुणनासत्यबृहस्पतिमरुतः पठिताः पर्वताश्च । 'सोमा- पूषणा', 'सोमा- रुद्रा', 'अग्नी-सोमा', 'अग्नि- पर्जन्या', 'पर्जन्या- वाता', 'उषासानक्ता', 'वाता- पर्जन्या', 'नक्तोषासा', 'सूर्या- मासा', 'सूर्या- चन्द्रमसा' उभाः गौणरूपेण विद्यन्ते ।

दानरक्षौदार्यादयः गुणाः दृश्यन्ते प्रायः सर्वेषु देवेषु एव । आसीच्च यत्र तत्र यत्किञ्चिद्गुणवैविध्यं तदपि नष्टप्रायमेव प्रतीयते युगलत्वं गते सह तद्देवानाम्। तथाहि--वरुणः प्राकृतिकनियमानामधिपतिः, चरित्रदेवता, विश्वनियामकश्चास्ति ( ८,४२[१]; १,२३[५]; २,२८[६] ) । परं यदा इन्द्रेण सह असौ दृश्यते तदा रक्षकः दानशीलश्च ( १,१७,[१,३] ) । एवं प्रमुखेषु देवेषु परिलक्ष्यते गौरवसाम्यभावः । गौणेष्वपि प्रमुखानां दानादयः सामान्यगुणाः सम्बद्धाः प्रकीर्तिताः, परं स्तुतिकथाप्रसङ्गे , ते स्वल्पमहत्त्वपदमेव अभजन् कालगौरवात् ।

एवं गुणसम्मिश्रणादिषु विघ्नेषु सत्यपि गुणकर्मानुसारिणि वर्गीकरणे एव न्यूनतमापत्तिः सम्भाव्यते ।

## मुख्यानीया: देवा:

### आदित्यगण:

#### आदित्यपदस्य विशेषणत्वम् :

देवानामेको गण: 'आदित्या:' इति नाम्ना ज्ञायते । अस्मिन् गणे मित्रेन्द्रवरुणादयो मुख्या: सन्ति । आदित्येषु मुख्येष्टाज् यत्र तत्र द्विवान्येन मुख्यान्यान् 'आदित्या:', 'आदित्यास:', 'आदित्यै:' 'आदित्यान्' वा पदै: ज्ञायते । वेदेषु आदित्या: सप्तसंख्याका: सन्ति ( ९,११४[३];१०,७२[८]; ऐ०ब्रा०२,१०[७]) अत्राष्टमो मार्तण्ड इति श्रूयते, यं अदिति: पश्चात् प्रसूतेति । वेदेषु कुत्रापि तेषां सर्वाणि नामानि न श्रूयन्ते एकत्र । येनादित्यानां संख्या नामानि च निश्चितता भवताम् । अन्यच्च यत्र बहुवचनान्तादित्यपदं विशेषणत्वेन श्रूयन्ते तत्रापि नास्ति असन्दिग्धा स्थिति: भिन्न गणीयदेवश्रवणात् अष्टाधिकानां वा एकत्र श्रवणात् । तथाहि——

१- उषासानक्ता बृहती सुपेशसा द्यावाक्षामा वरुणो मित्रो अर्यमा ।
इन्द्रं हुवे मरुत: पर्वतां अप आदित्यान्द्यावापृथिवी अप: स्व:।। १०,३६[१]।

२- अदितिर्द्यावापृथिवी ऋतं महदिन्द्राविष्णू मरुत: स्वर्बृहत् ।
देवाञ् आदित्यां अवसे हवामहे वसून्रुद्रान्त्सवितारं सुदंससम् । १०,६६[४] ।।

३- पर्जन्यवाता वृषभा पुरीषिणेन्द्रवायू वरुणो मित्रोऽर्यमा ।
देवां आदित्यां अदितिं हवामहे ------ ।। १०,६५[९] ।।

४- अग्निरिन्द्रो वरुणो मित्रो अर्यमा वायु: पूषा सरस्वती सजोषस: ।
आदित्या: विष्णुर्मरुत: स्वर्बृहत्सोमो रुद्रोऽदितिर्ब्रह्मणस्पति: ।। १०,६५[१]।।

५- आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ।। १०,१४१[३]।।

६- यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्र: सह चीक्लृपाति ।। १०,१५७[२]।।

अधिकेषु मंत्रेषु तु आदित्यपदस्य प्रयोगो विशेषणत्वेन एव दृश्यते । परन्तु द्विवचनान्तम् 'आदित्या' पदमिन्द्रावरुणयो: मित्रावरुणयोर्वापि आम्नायते ( १,१३६[३];७,८५[४]) ।( १०,३५[६]-६३[३]) अत्र 'आदित्या' देवा: इत्यर्थे

१६
श्रूयते । आदित्यस्तु इन्द्राग्नि सूर्यवरुणार्यमेषु श्रूयते ( १।१०५--१४१।१,७,८४।४, ८।४६।५,तैं०ब्रा० २।१।२।१०) । ( १०।७७।२,८) अत्रायं मरुद्भ्योऽपि प्रयुक्तो भवति । बहुवचनान्तात् आदित्यपदं तत्र श्रुतदेवानां विशेषणत्वं भजते यद्वा देवाः इत्यर्थे भवति । " अमेनादित्या: अनिन: , " त्वामग्न आदित्यास आस्यं ----- ( २।१।३,१०।८५।२) इत्यादिमिवचनैः देवमात्राणामादित्यत्वं पुष्यते । तत्र मरुतामादित्यता एनमेव भावं पुष्यति। वायुपुराणे काश्यपीयप्रजावर्णने आदित्य एकोनपञ्चाशन्मरुतेष्वेको भवति, यो दितेःपुत्रो भवति ( ६।१२३)। तत्रैव कल्पान्ते सप्तरश्मिः संवर्तकादित्यो भूत्वा लोकांस्त्रीनदहदिति श्रूयते ( ५।१२३) । पर वर्तिनि साहित्ये तु सर्वे देवा: आदित्यपदवाच्या: सन्ति ( अथर्व० ८।२।१५, आदि०६६।३६)।

## आदित्यानां संख्या

वेदेषु षडादित्यनामानि श्रूयन्ते --- " शृणोतु मित्रोऽर्यमा भगो नस्तुविजातो वरुणो दक्षोंऽशः( यजु: ३४।५४)। परन्तु श्रीराम शर्मेत्याख्याचार्येण तुविजातस्त्वष्टेति मत:। परन्तु अयं शब्दो वेदेषु सर्वत्र विशेषणत्वेनैव श्रूयते न क्वचिदपि पर्यायरूपेण । अत्र अन्यत्र अनेनापि तथैव स्वीकृत:। श्रुतिसंख्यां पूरयितुं सम्भवत: पर्यायरूपेण तेनाङ्गीकृतमिदं पदमत्र अस्मिन् अर्थे । तैत्तरीये ब्राह्मणे आरण्यके चाष्टादित्यनामानि एवं सन्ति --- मित्रावरुणौ , अर्यमा, भगो धाता च अंशश्च इन्द्रश्च विवस्वांश्चेत्येत इति( तैंआ०२।१०।७, तैंब्रा०१।१।६।१)। अदितेः अष्टादित्यानामुत्पत्तिप्रसङ्ग एवं श्रूयते ---- तस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतो धत्त तस्यै चत्वार आदित्या: अजायन्त। सा द्वितीयमपचदित्यष्टानाम् उत्पत्ति-र्वर्णिता ( तैंसं० ६।५।६।१)। सादिति: सप्तभि: पुत्रैर्देवान् उपप्रैत् । अष्टमं पुत्रं मार्तण्डं प्रजानामुत्पत्त्यै मत्यैव सा द्युलोके धारयत् ( १०।७२।८-९)। अतएव अष्टासु आदित्येषु अन्तिमो मार्तण्डोऽस्ति । परन्तु अन्यत्र ( ६।१२।२८, ११।६।३।८) तस्मिन्नेव द्वादशादित्या: श्रूयन्ते । एते द्वादशमाससम्बद्धा: सन्ति। इतिहासपुराणेषु एतेषु विष्णु: श्रेष्ठो भवति ( मुईर: सं०मू०४,११७-२१)। उपरवैदिकादित्येषु मार्तण्ड: आदित्येषु न श्रूयते । तेषु मासिकी स्थितिभेदेन मात्र एकस्यैव सूर्यस्य

द्वादशनामानि 'द्वादशादित्याः' इति कृत्वा ब्रुवन्ते । मार्तण्डस्तु सम्भवतो मलमासस्य अधिष्ठाता भवति। यतो हि पूर्णमसौ परास्यतो अनन्तारम्भानीय दिवि स्थापितो भवति । मलमासश्च गतवर्षेषु सञ्चितदिनानां योगो भवति। अतः श्रुति सम्मतमेवास्य मलमासेशत्वम् । आदौ सप्तादित्याः ब्रुवन्ते । तेषु पंचादित्याः सम्भवतस्तदानीं द्वि-द्विमासयोः पंचर्तूनाम् अधिष्ठातारो देवाः बभूव। ग्रीष्मतौ आषाढे वृष्टिमावादनयोः मासयोः द्वौ भिन्नादित्यौ अधिष्ठातृदेवौ भविष्यत इति। अतःसप्तादित्याः श्रुताः । यद्वा षडादित्याः षड्ऋतूनामधिष्ठातारो भविष्यन्ति तथैव । सप्तमो मलमासस्य पतिः भविष्यति । अष्टमो मार्तण्डस्तु पूर्णग्रहणानन्तरं पूर्णतां प्राप्तो रविः। परं पाश्चात्यविद्वत्सु श्री मैकडानलस्तु ऋग्वेदेऽत्र ( २।२७।१) षडादित्यानां नामानि मन्यते । सप्तमश्च सूर्यो भविष्यतीति। श्री सायणोऽत्र दक्षपदं कौशल इत्यर्थे स्वीकरोति। वेदविस्तारकेषु पुराणादिषु दक्षनामाभावात् अस्य स्थितिः सन्दिग्धा एवास्ति सर्वथा । अथर्ववेदे अपि ( ११।६।२) अत्र षडादित्येषु विवस्वन्तं गणयति( तत्रैव पृ०८२)। एवंच तन्मतानुसारं वेदेषु सप्तादित्यनामानि ~~भवन्ति~~ भवितव्यानि । परन्त्वसौ षण्नामान्येव मन्यते इति विरोधः ।

श्री ओल्डनबर्गः सप्तादित्येषु ~~सूर्यचन्द्रमसौ~~ सूर्यचन्द्रमसौ स्वीकरोति भगादयः पंचग्रहाश्च । अस्यैतस्याः संख्यायाः समर्थने ईरानदेशस्य सप्तामेषस्पेन्तसो भवन्ति प्रस्तुताः। परन्तु साम्याभावे इयं तुलना अवेस्ताविद्भिः निरस्तीकृता ( डमे० : हा०ए० १ तदनन्तरंच , वा०ला० : एफा० ३।२६ , स्पीगेलः डी०पी० १६६, हार्लेजः ज०ए० १८७८ (११), १२६)। श्री डाउसनमहोदयः 'षड्वैदिकादित्येषु वरुणो मुख्य' इति मन्यते ( हि०ध०आ०इ०पृ० ३)।

अथ वेदेषु सप्तादित्यनामानि एतानि भवन्ति ---- मित्रोऽर्यमा, भगो वरुणो दक्षोंऽशोविवस्वांश्चेति । तत्र मित्रो हेमन्तस्य , अर्यमा वसन्तस्य, भगो ग्रीष्मस्य, वरुणो वर्षतौ, दक्षः शरदृतोः, अंशः शिशिरस्य, विवस्वांश्च मलमासस्य आदित्यो भवितव्य इति ।

पुराणादिषु आदित्या: द्वादश सन्ति । तेषां नामानि एतानि सन्ति ——

धाता, अर्यमा, मित्रावरुणौ, इन्द्रो विवस्वान्, पूषापर्जन्यौ, अंशो भगस्त्वष्टा, विष्णुश्च ( शान्ति० २०८। १५-१६, विष्णु० २।१०। २-१८)। अत्र सवितु: सूर्यस्य मण्डले रथे वा एतेषाम् आदित्यानामन्यै: ऋषिभि: यक्षादिभि: सह स्थिति: श्रूयते । एतेषु गणेषु आदित्यानां प्राधान्यात् तेषामाख्यै: एव सूर्यो यशो लभते । वस्तुतस्त्वेकं ज्योतिर्बहुधा विभाति । सूर्यस्य स्थितिभेदेन विभिन्नमासेषु जगति तस्य प्रभावो वैविध्यं भजते । प्रभावानुकूलान्येव सन्ति तस्य भिन्ननामानि, यानि आदित्यनामानीति कृत्वा श्रूयते। वस्तुतो राशिस्थितिभेदेन एकस्यैव सूर्यस्य द्वादशनामानि भवन्ति । ~~आदित्यनामगुणा:~~

आदित्यनामगुणा:

अथादित्यनामगुणा:। जीवनमधुधारकत्वादसौ धातेत्युच्यते । अरीन् वातुगतरोगाणून् नियच्छति नाशयति वेत्यर्यमा । प्रमीते: कालात् त्रायको मित्र:। आवृणोति तेजोभिरन्यानि तेजांसि यद्वा कृष्णमेघै: आकाशमावृणोतीति वरुण:। इन ईशो द्रप्सस्य रसस्येति इन्द्र: । वरुणेन्द्रकालेषु उत्पावृष्टीनवृतान् सिक्त्वासौ तान् विशेषेण वस्वान् फलवान् करोतीति विवस्वान् । पुष्यति औषध्यादीनि तेषु सम्बन्धितगुणप्रभावान् संस्थाप्येति पूषन्। पर्जन्यवत् शैत्यसम्पादकत्वात् पर्जन्य इति। अङ्गानि स्वत्या पूरयति विचालयति वेति अंश: । सुखाधनधनेभ्यो भजनीयो भग: । त्वक्ष्यते जीवशरीरं नानाशिल्पकर्माणि कारयित्वा शुभगर्भितेषु येन स: त्वष्टा । विश्वं व्याप्नोति मधुराकारतया ( मधुरश्मिभि:) य: सो विष्णुरिति । मासक्रमानुसारिणीयमादित्यानां व्युत्पत्ति: । प्राय: सर्वेषु पुराणेषु धात्रादित्यक्रमेषु भेदो लभ्यते ।

इतिहासपुराणेषु द्वादशादित्यानां वेदेषु च सप्तानां श्रुति:, अस्माकं क्रमिकराशिज्ञानं निदर्शयति । नानापुराणेषु तु उक्तनामान्येव आदित्यानां श्रूयन्ते किञ्चिदेव मतान्तरेण सह । भारते तु गरुडारुणसुहृत्तयोऽपि आदित्या

एव सन्ति परं द्वादशादित्यव्यतिरिक्ताः ( आदि० ६५।१५-१६, ६६।३६) आग्नेय-
पुराणे तु षडादित्यनामानि भिन्नानि सन्ति। यानि सम्प्रति सूर्यवाचकानि सन्ति।
तथाहि—सूर्यः, सहस्रांशुः, रविः, सविता, तपनो गभस्तिकश्चेति ( ५१।५-६)।
अन्यच्चात्र आदित्यनामानि रविगणनामानि वा राशिमासक्रमे न सन्ति ।तथाहि—
वरुणः, सूर्यः, सहस्रांशुः, धाता, तपनः, सविता, गभस्तिको रविः, पर्जन्यः,
त्वष्टा, मित्रो विष्णुश्चेति। एतेषां वर्णास्त्वेवं सूच्यन्ते—कृष्णो रक्तो मनाग्रक्तः,
पीतः, पाण्डुरकः, सितः, कपिलः शुकाभो धवलो धूम्रो नीलस्तथेति । एतेषाञ्च
शक्तय एताः सन्ति—केसरा, इडा, सुषुम्णा, विश्वार्चिः,इन्दुः, प्रमर्दिनी,
प्रहर्षिणी, महाकाली, कपिला, प्रबोधिनी, नीलाम्बरघनान्तस्था, अमृता
चेति ( ५१।५-८) । तत्र सूर्यो रविः सविता, सहस्रांशुः, तपनो गभस्तिकश्च
क्रमशः अर्यमेन्द्रविवस्वत्पूषभगादित्यानां स्थानापन्नानि नामानि भविष्यन्ती-
ति मन्तव्यम् । विस्तारभयादत्र वर्णादीनामौचित्यं न प्रतिपाद्यते । अत्र स्मृतिपथं
समायान्ति श्री धामभट्टाचार्यस्य एते शब्दाः सारभूतत्वात् ——

अर्थश्च प्राचीनार्याः महाज्ज्योतिर्विदः आसन् । ज्योतिषां गतिस्थित-
यश्च सावधानतया विज्ञाताः। सूर्य-स्थितिभेदस्य ऋत्वाश्रयः प्रभावोऽपि तेभ्यो
नाविदितः( कु म०पु०       पृ०७३)।

मत्स्यपुराणे तु तेषां क्रम एवमस्ति—धाता, मित्रोऽर्यमा, शक्रो,
मेघः, अंशुः, भगो, विवस्वान्, पूषा, सविता, त्वष्टा विष्णुश्च (३, २०[८३] ) ।
अत्रैव कीकटे देशे आगत्य ते सुराः कोणाञ्जिरे इत्यपि श्रूयते। अनयास्माकं देशे
कीकटदेशकालस्य मान्यता ज्ञेया भवति यथा इदानीं कलि-कातानगरस्य मद्रासनगरस्य
च कालो मान्यतां भजते । अत्रैव वरुणो माघस्य, पूषा फाल्गुनस्य, धाता
चैत्रस्य, तापनो वैशाखस्य, इन्द्रो ज्येष्ठस्य, रविः आषाढस्य, विवस्वान्
श्रावणस्य, भगो भाद्रपदस्य, पर्जन्यः आश्विनस्य, भास्करः कार्तिकस्य,
मित्रो मार्गशीर्षस्य, विष्णुश्च पौषमासस्य आदित्यो भवति ( ३,४३[१६-२१] )।
विष्णुधर्मोत्तरपुराणे आदित्यनामव्युत्पत्तिः एवं भूयते—प्रजानां प्रसवनात् सविता,
रसानां दानाद्रविः, मैत्रभावतो मित्रः, पुष्णाति सर्वलोकान् तेन पूषा, धारणात्
धाता, यमनादर्यमा, अंशुधारित्वादंशुः, विसर्गाद्वरुणः, सौभाग्यवत्त्वाद्भगः,

सर्वक्रियाकृते: त्वष्टा:, सर्वजन्तुसमत्वाद् विवस्वान्, क्रमणाद्विष्णु:, ऐश्वर्यादिन्द्र इति ( ब्र०अ० ३०।२५-२६) । अस्मिन् पुराणे ( १,१७०)[२-३] अत्र कानि नामानि व्युत्पन्नेभ्यो भिन्नानि सन्ति । अपि च एकस्मिन् एव पुराणे नामक्रमभेदान्, द्वयोश्च पुराणयो: मासादित्यभेदं दृष्ट्वा, कानि आदित्यनामानि, कश्चादित्य: कस्य मासस्येति निश्चयो न सम्भवति कथमपि ( पद्म० सृ० ६।३७,१८।१७-१८, ३७।१०३,७६।२५-२७, मत्स्य० ३-४३ १६-२१) ।

## आदित्यकर्माणि

अथादित्यकर्माणि। आदित्या: जनान् नूतनसंरचितेन पुष्करेण च शर्मणा पुष्यंति रश्मिभि: कीटादीन् हत्वा व्याधी: अपनीय । कुत्रचित् प्रशस्तं समृद्धं नृपश्यं गृहं पश्चात्स्वकाय पुत्रपौत्रेभ्यो जीवनार्थं याचते जन:। स्तोत्राणि श्रोष्यमाणा: आदित्या: स्वजनेषु अदितित्वमनपराधत्वमन्यत्तं दधाति ( ७।५१[१], ८।६७[६], १०।३५[१२] ) । अत्र वैदिकयुगे सूर्यरश्मिप्रयोगै: दीर्घायुप्राप्ति:, शरीरेषु च कृतापराधजन्यदोषहानि: ज्ञेया भवति । आदित्यैरात्मानं पुत्र इव पोषणीयं मन्यमानो जनो बहुभोज्यं धनं खाद्यान्नमित्यर्थ: , तेभ्यो याचते । श्रूयते च तद्युगे रश्मिप्रयोगेण वनस्पतिवंश-वृद्धि: यथा च क्रियते ऽधुना । आदित्यानां वस्व्यानि धनानि तेषां विविधगुण-सम्पन्ना: रश्मय: सन्ति , येषां प्रयोगै: तदानीं चिकित्सादीनि कर्माणि क्रियन्ते स्म । यद्वा पृथिव्यामन्तर्हितानि वस्व्यानि धनानि, (स्वर्णादीन् खनिजान् इत्यर्थ:) स्वरश्मिपरिचालितयन्त्रै: तेषां खननकार्येषु आवश्यकं सद्योगं कृत्वास्मान् प्रापयेति। अत्र सूर्ये नानाखनिजज्ञानमपि ज्ञायते, यै: तस्य रश्मिषु गुणभेदा: क्रियन्ते । तेषां गुणभेदै: नानायंत्रचालनं भवति स्म । रश्मिमाध्यमेन आदित्यधनानि जना: प्राप्नुवन्ति । एतेषां तप: पूतं जनमिमं दु:खेभ्यो ऽत्यादध्येनसश्च रक्षन्ति शूरं कवचो यथा ( ८-४७[७-८] ) । अनया चिकित्सादौ च ( मानसिकी चिकित्सादौ च ऽपि) उद्योगेषु च रश्मिणामभ्यर्थप्रयोग: सूचितो भवति । एते आदित्या: स्वसुनीतिभि: सुशक्तिसम्पन्नैश्च मयूखै: पापजन्यां मानविकृतिम् विदारयन्ति स्वजनक्षेमाय च तेभ्यो ऽन्यान् विज्ञानमार्गान् प्रकाशयन्ति—तदभावे चिन्तनामात्रत्वात् । रश्मिविज्ञान-

ज्ञाते सति स्तरेषां सुलभता निश्चितैवेति भाव: ( १०-६३ [७,१३] )। पञ्चमे स्तोमे स्तुता: आदित्या: वर्षर्तुना सह इन्द्रे वयो हविश्च दधु:( यजु: २१।२५) । धातारूप: पूर्ववर्तिन: आदित्या: वाष्पहवि: दधु: तस्मिन् येन पर्जन्यात्मक इन्द्रो तवयो भवतीति । यजमानो अर्वाचीं सुमतिम् आदित्यान् याचते, या तेषां सदुपासनेन प्राप्यते, यया च नूतना: विज्ञानपद्धतय: आविष्कृता: भवन्ति ( यजु: ८।४ )। प्राणिषु प्रेरकतया विद्यमानास्ते सर्वेषां वृजनानि, पुण्यानि च सम्पश्यन्ति । यन्त्रं विद्युत इव जीवशरीराणि परिचालयन् तत्रस्थेन तापेन, दर्शनहेतुत्वात् तेषां कार्याण्यपि पश्यन्त्येव ( २,२७ [२-३,६] ) । त एव मेघेषु जलानि रक्षन्ति । तत्र आकाशे दर्शयन्ति इत्यर्थ: । अन्येभ्यो श्रद्धधातृभ्यो पेटाजनधातकतत्त्वानाम् उन्मूलकेषु प्रथमत्वादवस्थितो विपत्सु रक्षा: आदित्या: कीटेभ्यो भये प्राप्ते जनान् रक्षन्ति ( २।२७ [४-५] )।

आदित्या: त्रिस्रो भूमी:—भूनागपातालोकान् स्वकीयेन वृष्टिलक्षण-कर्मणा, त्रीन् द्यून्—द्यावापृथिव्यौ अन्तरिक्षञ्च—प्रकाशकर्मणाधारयन्ति । रसादान-धारणसम्प्रदानरूपाणि तेषां त्रीणि व्रतानि सन्ति । स्वैरगामी: महारथिकान् उपरितनान् लोकान् अपि धारयन्ति। अनवद्यास्ते यजमानं यथा पारं नयन्ति । तदानीं ( प्रात: काले सायं काले वा) रश्मिषु प्रतापाभावे, प्राय: अतश्चैव वायो: सुखेन वहति सति यत्रो निर्विघ्नरूपेण सम्पाद्यते जनै: । अस्य श्रेय: तत्रैव तिष्ठति । त एवाग्न्यादीनि दिव्यानि तेजांसि धारयन्ति। सर्वेषां तेजसामत्र तन्मूलकत्वमुच्यते ( २।२७ [८-९], १।४१ [५] ) । सङ्क्रान्त्यादिजननकार्येऽपि तेषां रश्मिप्रयोग: श्रूयते ( १।४१ [६] ) । आराधनप्रसादितोऽयं गण: आत्मप्रकाशेन हिंसिकां प्रणितिं, दुर्मतिं, द्वेष्टॄन्, पातकं यमजालञ्च नाशयति यथा सानुभूतं बहुभि: साधकै: । वृद्धो जनो, यमस्य( कालस्य) भासविलासप्रभूत: कृतोऽत एव कृत्रिमो यो भूत: शरु: तस्माद् त्राणं याचते आदित्यान् येनायं दीर्घायु: भवेत् ( ८।६७ [१५,१८-२१] ) । युद्धे साहाय्यार्थं कल्याणाय चाहूयते यं गणो जनै: ( १।१०६ [२] )। यथाधुनिकै: वैज्ञानिकै: लेसरविस्फोटका: आविष्कृता: तथैव सम्भवतो वैदिकयुगेऽपि नानारश्मिप्रवाहिता: ज्वालकर्षका: विस्फोटका: विविधारव्यशरै: प्रसिद्धा: आसन् । आदित्यानां रश्मिधनं चित्रमिति श्रूयते—तत्रस्थेभ्यो नानाखनिजेभ्यो निःसृतनानारश्मीनां विविधयन्त्रपरिचालकत्वात् । नैकखनिजमयात्त्वादेव

एतेषां गृहमपि चित्रमिति आम्नायते ( ८।६७ [२,५] )। विविधविषापनोदने पि तेषां किरणानां प्रयोगः समाम्नायतेऽत्र ( १, १९१ [६] )। स्वदुःखानामर्धत्वात् जात्या एते क्षत्रियाः सन्ति ( ८।६७ [१,४] )।

प्रकृष्टतापयुक्तत्वात् सर्वं एव एते सर्वथा शुचयो धनपूताः, अवृजिनाः, अनवद्याः अरिष्टाश्च सन्ति । कार्याकारतया महान्तो पारतन्त्र्यव्यवायुमयत्वात् गम्भीराः, परज्योतिर्भिः अनाक्रमणीयत्वात् अदब्धाश्च सन्ति ( २।२७ [२-३,६] )। अहर्निशप्रदीप्तत्वात् अनिमिषाः अस्वप्नजाः चेति श्रूयते तेषां विषये । अनया तेषामुग्रयानरूपया लोकदृष्ट्या प्रचारितेति ज्ञायते न पुनः यथार्थतया अज्ञानतया वेति ( २।२७ [२,३,६] )।

पूर्वसिद्धान्ते ' आदित्यो द्वयाधिभूतत्वात् ' इत्युच्यते ( १२।१५)। अस्ति यद्यप्यत्रादित्यो रविवाचकः तथापि अर्केषु प्रथमो धातिति ज्ञायते ।

## धातादित्यः

**अस्य श्रुतिः :**

विष्णुमत्स्यपुराणयोः धाता चैत्रादित्योऽस्ति स्कन्दे च कार्तिकमासस्य ( म०पु० ३।४३, १६-२१, वि०पु० २।१०।२, स्क० प्रभास० प्रभासक्षेत्रमा० ११५८।३२)। नास्ति वेदेषु अस्मिन् रूपे उल्लेखोऽस्य । तथापि चैत्रमासस्यायमधिष्ठातेति ज्ञायतेऽत्र ( अथर्व० ७। १७।, १६,३१ [३] )। यतो हि चैत्र एव फलन्ति औदुम्बरफलानि चैत्राद्यारम्भको संवत्सरः । ऋक्षु ऋग्यजुर्वेदयोस्तु नाम्नैव पठ्यते धाता, नास्ति तत्रास्य कार्यरूपादीनां कश्चिदुल्लेखः । अथर्ववेद एवास्य कानिचित् कार्याणि श्रूयन्ते । परं तत्रापि मानवत्वारोपणं न दृश्यते । पुराणेषु तु धातादित्येषु प्रथमोऽष्टमो वास्ति।

यथा नाम तथा गुणाः अनुसारमेवासौ मुख्यतया गर्भस्थं गतं रेतो दधाति येन पश्चात् भूतानि व्यकल्पयति सम्भवतो वेदेषु यावदयं देवपदयोग्यो जातस्तावत् शक्ति श्रयाणां विभाजन इन्द्रादिषु देवेषु प्रचितामभवत्——इन्द्रादिषु तेषां कर्मणां बहुश आरोपणत्वात् । धाता तु स्वव्युत्पत्त्यनुसारमेव तत्कर्मणि नियोजितः ।

## बाधात: सम्बन्धाश्च

साम्बपुराणे अयमिन्द्रादिभि: चतुर्भिरादित्यै: सह वनस्पतिषु औषधीषु च स्थित: श्रूयते ( २४।८)। भारतेऽसौ ब्रह्मणो यद्वाऽदितिकश्यपयो: तनयोऽस्ति । विधाताऽस्यानुज: स्मृत: । एतौ द्वावपि मनुना सह निवसत:( आदि० ६५।१५, ६६।५०) शल्यपर्वणि धाता स्कन्दाय पञ्चपार्षदान् ददाति- कुन्द:, कुसुम:, कुमुद:, डम्बराऽऽडम्बरौ च ( ४५।३६)। उद्योगे इन्द्रप्रस्थं गच्छत: श्रीकृष्णस्य दर्शनलाभो लब्धोऽयमपि देवोऽन्यै: देवै: सह ( ८३।६४ दाक्षि०पाठ:)।

### स्वरूप: :

अयं धाता पुराणेषु ब्रह्मेति कृत्वाऽम्नायते । अयं धाता ब्रह्मा वा मूर्तीकृतो धातादित्य एवास्ति । दृश्यत एव पुराणेषु प्राकृतिकशक्तीनां व्यक्तीकरणस्य प्रवृत्ति: कर्मणां प्राय:। यद्वा सर्वा: शक्तय: तत्र मूर्तीकृता:। आदित्य एवादिवेद ( ज्ञान) प्रकाशक:। अत एव तस्य मूर्ति: ब्रह्मापि आदिवेदप्रकाशक इति पठ्यते पुराणेषु। सर्वत: प्रकाशकत्वात् सूर्यस्य सर्वतोमुखी ब्रह्मेति वक्तव्यम् , परमनेन कथनेन भ्रमो विकारो भविष्यतीति विचार्य चतुर्मुखोऽयमिति श्रूयते--प्रयोजनं तु सिद्ध्यत्येवानेनापि वचनेन । एवं पौराणिको धाता धातादित्यमूर्तिरेवास्ति । कपिलवर्णोऽयमादित्योऽष्टसहस्रै: किरणै: तपति ( कूर्म० ४३।२२,२७)।

### कर्माणि

अथास्य कर्माणि । गौणरूपेण अन्यै: देवै: सह देवदानवयुद्धे धातापि युद्धरतो दृश्यते । बलिना संज्ञाहरणप्रकरणेऽसौ पाञ्चजन्येन सह युध्यते ( भवि०प्र०प० ३।१८।१६)। जगतस्पति ईशानो धाता रयिं ददाति मनोरथांश्च पूरयति । उपासका: एनमदायजीवनशक्तिमुत्साहञ्च वृद्धिं याचन्ते । यदा धाता तपति तदा वसन्तर्तु: शरदृतुर्वा भवति । एतयो: ऋत्वो: स्वास्थ्यवृद्धि: बुद्धिवैशद्यञ्च प्रशस्यत एव । प्रजाकामाय दाशुषे यजमानाय अन्नौषधादीनि विश्वानि वरणीयानि वस्तूनि प्रयच्छति । विश्वेदेवा: अदितिश्चास्मै अमृतं ददाति। स्वस्वशक्त्या जलानि आकृष्य धातादित्यं ददति विश्वेदेवा इत्यर्थ: ( अथर्व० ७।१७ [१-३] )।

खदिरफालमणिं बद्ध्वा ( तद्योगेन इत्यर्थः ) धाता भूतानि व्यकल्पयत् ( अथर्व०१०।६[२१] ) । आदौ कतीतले जीवनं कथं जातम् इत्यत्र प्रतिपाद्यते । खदिरफालमणिश्चन्द्रकान्तमणिः । मणिबन्धनेन शैत्यगुणयोगो वाच्यो भवति-तच्चाप्सु चन्द्रमसि च विद्यते । मणिः मात्र अलङ्कारूपेण पठ्यते, वस्तुतस्त्वत्र चन्द्रशैत्यमेवास्ति अभीष्टम् - तस्यैव जलादपि पूर्ववर्तित्वात् यद्यप्युत्तरकाले बहुधा जलयोगेनैव कृतानि भूतानि तेन । सम्भवत आदौ धाताचन्द्ररश्मिभ्यो द्वयोः भिन्न - प्रकारयोः जीवाणवो जाताः अनन्तरञ्च एतयोः योगैः नानाभूतानि जातानि । अतः श्रूयते -----

जनाः धातारं करीषिणीं फलवतीञ्च भूमिं याचन्ते या औदुम्बर-फलनिर्मितेन उर्वरकेन अतिशयफलवती भवति । धाता उर्वरकेषु गुणाः उत्पादयन्त इत्यर्थः ( अथर्व १६।३१[३] )। यथाहोरात्रात्मकानि दिनानि वसन्तादयश्च ऋतवो विपर्ययेन यन्ति पुत्रो वा पितरं पूर्वमरणेन न जानाति तथैव कुलीनानामायूंषि कर्तुं धाता प्रार्थितो भवति । धातारि तपति जनाः स्वास्थ्यमनुभवन्त्वित्यर्थः । अनयोः मासयोः ( चैत्रकार्तिकयोः ) जनस्वास्थ्येषु प्रायः बाधानुभूयते एव । ( १०।१८[५] )। पूर्वस्मिन् काले धाता सूर्यचन्द्रमसौ पृथ्वीमन्तरिक्षञ्च अकल्पयत् ( १०।१९०[३] )। जीवान् निर्माय तेभ्य एतान् सर्वान् दृश्याकरोत् इति भावः । असावादित्यो द्यावा-पृथिव्यौ सूर्यञ्च धारयति । स्वशक्त्यायं देवः पृथिव्यादीनि ग्रहनक्षत्राणि यथास्थानं संस्थापयति येनाकाशो जायते । अत एव धाता तद्धारक उच्यते । सूर्य एव गुणस्थिति-भेदेन आदित्यत्वं भजते । अतः एतस्मिन् मासे धाता तद्धारक इति श्रूयते । धातैव कन्याभ्यो वरान् ददाति ( अथर्व० ६।६०[३] )। सम्भवतः तदानीमस्मिन् एव मासे विवाहोत्सवाः शुभतमाः भवन्ति स्म। भाति अस्य रश्मिषु गर्भसंस्थापनशक्तिः अत एवायं जाये गर्भत्वं गतं रेतो दधातीति श्रूयते ( १०।१८४[१] )। धाता ( प्रजापतिरूपः ) वै प्रजाः सृजते ( ताण्ड्य० ब्रा० २४)।

<u>व्युत्पत्तिः</u>

' धा ' ( धारणे ) धातोः तृच् प्रत्ययात् निष्पन्नोऽयं शब्दः । धाता विशुद्धो भारतीयदेवोऽस्ति । वेदेष्वसौ सामान्यदेवतया श्रूयते । उत्तरवैदिके साहित्ये

आदित्यरूपे पङ्क्तयोर्निरूपे वाम्नायते । कर्मसमता द्वयोः घनिष्ठं सम्बन्धं व्यनक्ति। सोमपानायायं देवः कदाचिदेवाहूयते ऋषिभिः येन तेषां तं प्रति उपेक्षावृत्तिः सूचिता भवति भवति । सत्यपि धातरि प्रजासर्जकत्वं तस्योपेक्षा सम्भवतः तात्कालिकी संघर्षमयी परिस्थितिवशात् कृता । तदानीमासीत् शत्रुभ्यो रक्षणस्य जटिला समस्या यस्यै समाजः शक्त्युपासनारतो बभूव । अतस्तैः शक्तिसम्पन्नाः देवा एव बहुधाहूताः नान्या इति ।

## अर्यमादित्यः

श्रुतिस्थितिः :

अयं देवः प्रायः मित्रावरुणाभ्यां सह श्रुतो वेदेषु । बहुधायं नाम्नैव ज्ञायते । स्वतन्त्ररूपेण गुल्यमावेऽस्य कोऽपि विशिष्टगुणो न ज्ञायते । अस्ति यद्यप्ययं स्वल्पमहत्त्वयुक्तः तथापि भगस्य अपेक्षाधिकं महत्त्वमावहति । परमसौ मित्रावरुणयोः संगतिसापेक्ष्यैवास्ति। अर्यमा मित्रावरुणयोः अधीन इति श्रूयते ( १।१३६[३] )। अनेनास्य देवस्य वैदिकयुगे गौणता ज्ञेया भवति तथा च ताभ्यां सह सम्बन्धदृढता ।

## रथवर्णनम्

आदित्येष्वयं वैशाखमासस्य आदित्यो भवति । तदानीमनेन साकमस्य रथे एते भवन्ति ------

पुलहः ऋषिः( पोलनं वृद्धिं हन्ति अवरुणद्धीति पुलहः) रथौजा यक्षः ( रथे ओजो यस्य सः ), पुञ्जिकस्थलाप्सरा ( एकस्मिन् एव स्थले पुञ्जीभूय पतन्ति ये रश्मयस्ते एवाप्सरा स्थानीयाः भवन्ति तासामिव नर्तनशीलत्वात् ), प्रहेतिः राक्षसः( एतन्नामकाः राक्षसाः अस्मिन् मासे विशेषेण इत्यर्थः), कच्छवीरः सर्पः ( जलाच्छन्न भूशोषणसमर्थः--- प्रतापत्वात्), नारदो गन्धर्वः ( पितृभ्यो जलं ददाति यः सः यद्वा नरसमूहान् प्रति खण्डयति इतस्ततः करोतीति नारदः)। षडेते अस्यादित्यस्य रश्मिगुणाः सन्ति । ( विष्णु० २।१०।५-६ )।

## पन्था:

अस्य पन्था: ऋतुतोऽस्ति ( १०। ६४[५] )। अनेन वचनेन अनन्त-ब्रह्माण्डस्थानां केषाञ्चिद् ग्रहाणाम् उपग्रहाणां वा अनियतगतित्वं वक्रगतित्वं वा सूचितं भवति । यच्च सत्यमेवास्ति। यथा टॉरोनामक: उपग्रहो वक्रगतिकोऽस्ति । तैत्तरीये ब्राह्मणे बृहत्संहितायामस्य मार्गो वक्र इति श्रूयते ( २०३० हि० बृहत्सं०११२)।

## कर्मनिरूपणम्

अथास्य कर्मनिरूपणम् । अर्यमादेवस्य कार्याणि अन्यदेवचरितान्येव सन्ति । अत: कर्मवैशिष्ट्याभावो दृश्यते । वेदेषु अस्य कर्माणि मित्रेन्द्रवरुणादीनां नामधेयै: सहैवाम्नायन्ते स्वतन्त्रस्तुत्यभावे—अतोऽस्य कर्मसु तेषां सहयोगोऽवगन्तव्य इति । अर्यमा स्वजनानां यज्ञमार्गं ज्ञापयति संगमयति चैतान् आयुषा जरापर्यन्त जीवनाय ( ४।५६[४],१०,८५[४३] ) । नित्यमेवायुष्यो रवि:। अत: सर्वं स्वादित्या: आयुष्या इति श्रुत:। सुष्ठु सेविता: भवन्त्येते आयुष्या: इति विज्ञानसिद्ध स्वास्ति । हिंसकशत्रो: मन्युमर्यमा प्रकर्षेण हिनस्ति । रवितापतापितास्ते विगतमन्यवो व्याकुलचेताश्च स्वधामानि प्रति गच्छन्तीत्यर्थ: । मित्रावरुणाभ्यां सहार्यमा जनान् पारयितव्ये विषये द्विषोऽति पारयति । स एव विश्वं परिपाति । नानाभूतानां शत्रून् पापानि चातिनयति । जना: एतेषां देवानां प्रिये शर्मणि भवन्ति ( १०, १२६[३,४।७] )। ये जना: तदनुकूलमाचरन्ति तान् परिपाति:, अन्यांश्च व्याधि-पीडापीडितान् अतएव निर्बलान् तस्य जना: अतिक्रामन्ति । स्वजनकृतपापानि स्वानुकूलरश्मियोगै: अपाकरोतीत्यर्थ: । मित्रावरुणमरुद्भि: सह अर्यमा निवरूथं जनेभ्यो दातुं प्रार्थितो भवति ( ८। १८[२१] )

पुरुरथोऽर्यमा विष्णुरूपेषु अन्यसु जीवानां सप्तरश्मिभि: पोषको भवति । सर्वेषां प्राणिनां पोषकोऽर्यमेत्यर्थ: ( १०। ६४[५] ) ।रविगता: नानाविस्फोटा एव गच्छतोऽस्य रथत्वं ( रथचक्रत्वम्) भजन्ते । अत: श्रूयते पुरुरथोऽर्यमेति । मित्रावरुणयो: सामर्थ्यात्तर्यमा सर्वप्राणिन: स्वस्वकर्मसु नियोजयति अयाशिकांश्च नरके निपातयति ( १,१३६[३,५] )। अस्योपासना जनेषु कार्यशक्तिं

जनयति या तेषां सुखाय भवति । विरोधिनां जीवनानि तदभावे नारकीय जीवनानि भवन्तीति । भग एवायमपि वरवधू: परस्परं योजयति ( अथर्व ६।६०, १-२ १४।१।७ )। वैशाखमास एव प्राय: विवाहोत्सवा: सम्पाद्यन्ते । अत एवमाम्नायते । देवदत्तां कामदुघां लब्ध्वा तस्य दोहने शक्तै: अङ्गिरोभि: प्रार्थितोऽर्यमा तां दोग्धि पय: ( १। १३९ ७ ) । पृथिवीरूपां कामदुघां रसरूपं पयो दोग्धि अर्यमादित्यो बदत्यतेऽश्विनौ दोग्धुं न प्रभवन्ति इत्यर्थ: ।

## स्वरूपविषये नानामतानि

श्री वेबरमहोदय एनमाकाशगङ्गेति मन्यते । पर नास्त्यस्य पुष्ट्यर्थं कश्चिदर्को विशेषो येनासौ दृढतां गच्छेत् । अत इदं मतं विद्वद्भि: अनादृतमेव वर्तते ( शत०ब्रा० ५,३,१ २ ) सायणभाष्ये, वेबर: फ्रे० राय पृ०१३८, राजसूय पृ०८४, टि० २) । पुरातन वंशसिद्धान्तं निदर्शयन् अर्यमा वृद्धपूर्वजपदवीं गत: पश्चाच्च जातो यं पितृराज इति ए० डैम्बल:( हि० बहु०पृ०११७)। अस्य पितृराजत्वस्य भावनाया: उद्भवहेतु: सम्भवत: नारदेन सहास्योपस्थिति: भवति ( नारं जलं पितृभ्यो ददाति इति नारद:)। वायु: गन्तादित्य:। स्वार्यमेति श्री सायण:( अत्र कदाचित् सूर्यतापवाही वायुरेवार्यमेति कृत्वा पठ्यते । आचार्येण यतो हि अदिति: पृथिवी । तस्या: शरीरे तापभेदहेतो: उत्पन्नत्वात् नार्या आदित्यत्वं नायुक्तम् ।

व्युत्पत्ति:

## व्युत्पत्ति:

ऋच्छतीति अर्यमा इ्भाचार्यकृता व्युत्पत्ति:। संगता च सा वायुगते: प्रत्यक्षत्वात् । परं श्री सायणस्य अयमर्थो द्वादशादित्येषु पदं नार्हति--- सुदेवत्वाभावाद्भाव्यां । ऋ० ( गति- प्रापणयो:) + यत् = अर्य:। अर्य/मा ङ्०( माने) + कनिन् = अर्यमा । अर्यान् स्वामिनो न्यायाधीशान् मिमीते मान्यान् करोतीति अर्यमा(सत्या० पृ०५) । अन्यत्र श्री सायणोऽरीणां तमसां यन्ता नियन्ता सूर्य इति अर्यमा ( १०।६४ ५ ) इत्यपि कथयति ।

## मित्रावरुणौ

### आदौ मंत्रसूक्तसंख्याविचार:

यद्यपि मित्रावरुणौ पृथग्भूतौ देवौ स्त:, तथापि मात्र ऋग्वेदे एक: सूक्तस्त्रयो मंत्राश्च मित्राय सन्ति । अन्यत्र सर्वेषु वेदेषु मित्रो वरुणेन सार्धमेव समाम्नायते । अत इव पृथग्रूपेण वर्णनेन कर्मपुनरुक्ति: भविष्यति । अस्य दोषस्य परिहारार्थमेव एतौ एकत्र वर्ण्येते ---- सत्यपि स्थितितत्त्वभेदे । ऋग्वेदे वरुणस्य स्तुतौ चतुर्विंशतिमन्त्रोत्तराणि अष्ट सूक्तानि, यजुर्वेदे सप्त मंत्रा:, अथर्ववेदे च षोडशमंत्रोत्तराणि षट् सूक्तानि सन्ति। मित्रस्तु त्रिभि: मन्त्रै: अथर्ववेदे, त्रिमन्त्राधिकेन चैकेन सूक्तेन ऋग्वेदे स्तूयते । मित्रावरुणौ चतु:षष्टिमंत्रोत्तरै: द्वादशसूक्तै: ऋग्वेदे, अथर्ववेदे च एकादशमंत्राधिकाभ्यां द्वाभ्यां सूक्ताभ्यां स्तूयेते । अन्यै: सह एतौ ऋग्वेदस्य एकोनविंशत्युत्तरशतमंत्रेषु, अथर्ववेदस्य अष्टाविंशति मन्त्रेषु। पञ्चदशमंत्रेषु च यजुर्वेदे श्रूयेते। एतदतिरिक्तश्च ऋग्वेदस्य अष्टमन्त्रोत्तरसप्तसूक्तेषु, अथर्ववेदस्य च द्विमंत्राधिके एकस्मिन् सूक्ते वरुण इन्द्रेण सह समाम्नायते ।

### पितरौ :

ऋतावरी अनर्वा अदिति: असुरघ्न इन्तुं मित्रावरुणौ जनयामास ( ४।२५[३]-४५[६], ७।४०[४], अथर्व० ५।१[६], भाग० ६।६[३६], आदि० ६५।१५)। आदौ अग्निशमनाय श्रीकृष्णमुखारविन्दजलाद् उत्थितो वरुण इति ब्रह्मवैवर्ते श्रूयते (ब्र०ख०४)। पुलोको वरुणापेक्षयान्यं नभसि दृश्यमानं मित्रमभूत ( १०।१३२[४] ) । वरुणकार्यसम्पादनार्थमेवादौ मित्रस्तपति अनन्तरञ्च वरुण इति । महत: शवसो नपातौ मित्रावरुणौ बहूनामुपकाराय जायते । अत एव सुविजाते सुपाणि: अनयोरेव श्रूयते ( १।२[६], ८।२५[५] ) शवसो नपातत्वेन अनयो: अमितशक्तिसम्पन्नता मात्र ज्ञेया भवति यथा चराचरं शक्तिं लभते । एतौ द्यावापृथिव्यो: सकाशात् ( दितिजात्) अपि जायेते । यद्वा श्रेष्ठ वर्चसौ तौ दिविभवौ स्त: ( १। १५१[२], ५।६५[२], ६५-६६[४])। अथर्ववेदे ( ५।११[१] ) हरि: ( सूर्य:) वरुणस्य पितेत्याम्नायते । स्थितिभेदात् सत्यपि नामान्तरे गुरुत्वं तत्रैव वर्तते । इति योनिजातो यं सुजन्मा वरुणोऽप्सु वर्धते ( ५।१[१] अथर्व० )।

आवास: --

ऋषीणां हितकरौ मित्रावरुणौ दिवो धामभ्यो यज्ञेषु आहूयेते सोमपानाय (७।६६[१८])। द्युलोकनिवासिनौ एतौ उभौ निवासस्थानेऽपि निवसत: (१।१३७[१], ८।२५[५]) अपि च अनभिद्रोग्धारौ तौ ध्रुवे, उत्तमे सहस्रस्थूणे सदसि आसाते (२।४१[५])। सहस्रद्वारणे वरुणस्य गृहे सहस्रद्वाराणि सन्ति (७।८८[५])। दिवो मध्ये स्थितोऽयं तत: सर्वान् दण्डनीयान् परीक्षते (११।६[१])। सम्राजः वरुणस्य राज्यं द्युलोके अस्ति (७।८२[२]-८४[२])। समुद्रे अन्तर्हितो वरुणो नाकमधिरोहति यथाऽऽदित्यो द्याम् (८।४१[८])। अल्पोदकेष्वपि अस्य व्याप्ति: सूक्ते (४।१६[३])। अप्स्वेवास्य हिरण्मयमप्राप्यं गृहमस्ति (अथर्व० ७।८३[१])। अस्य गृहा: पुरातना: सन्ति (८।२५[१७])। सुजना: सुविजातस्य वरुणस्य मृदादिभिर्निर्मितं गृहं नोपगच्छन्ति, ते तु अस्य सुवर्णमयं गृहमेव प्राप्नुवन्ति (२।२८[८],७।८९[१])। अनया सागरेषु सलिलानां स्थितिशानमायानां सूचितं भवति। (२।४१[५], ७।८८[५]) अत्र रश्मय एव वरुणमण्डलप्रवेशद्वाराणि स्थूणा वा सन्ति यै: रसानां प्रवेशो भवति। (८।४१[८]) एतया श्रुत्या आपूर्णसागरमुखावर्णामुपस्थिति: विज्ञेया भवति यतस्तैस्तै: वरुणादित्य छायामेतज्ज्ञातुम्। नानयावगम्यते समुद्रगर्भादस्योद्गति: अपितु समुद्रान्तात्। भारतेऽन्त: सलिलमास्थाय विश्वकर्मणा विहिता मनोहरा वरुण सभा यस्यां धर्मपाशधरोऽयमादित्यादिभि: सार्धं विराजते (सभा०अ०९)।

## प्रसादनसाधनानि

मित्रावरुणयो: प्रसादनार्थं यज्ञेषु मधुपुरोडाशादीनि माधुर्योपेतानि च औषध्यादीनि सम्पादितानि भवन्ति (७।६०[४])। अत अदम्भनीयौ: सुतिमन्तौ एतौ स्तोत्रै: सोमपीतये आहूयेते (७।६६[१७])। यद्वा दिविस्पृशौ तौ गवाशिर: सोमं पातुमागच्छत: (१।१३७[१])। धृतव्रतौ इन्द्रावरुणौ पात्रस्थं सुतं सोमं पातुं यज्ञेषु रथेना यात: (६।६८[१०,११])। यद्वा कुशासनस्थौ एतावेव चमसस्थमभीष्टवर्षकं सोमं पिबत: (७।५८[१,२])। वरुणो दुग्धादीनां पौष्टिकपदार्थानाम् अधाशिन आत्मानं शेषाशिन च बलं वर्धयति (अथर्व० ५।१[६])। आभ्यां हवींषि

प्रयच्छन् यो जनो धनानि वर्धयति तस्य तानि नापगच्छन्ति तमेव च सर्वदा भजन्ते । एताभ्यां रक्षितोऽन्यकृतजं एनो न युज्यते। शुशुक्वनो क्रियमाणभूमिकौ च मित्रावरुणौ सूर्ये उदिते यजमानो नमोभि: सूक्तैः हव्यैश्च परिचरति ( ७।६३[५]-६५[१]; १०।१३२[२-४] )। एतौ इन्द्रादिभि: सममग्निना नीयेते यज्ञेषु । वरुणस्य प्रख्यातं कर्माणि विश्वेदेवा: भजन्ति ( ७।३६[५]; १०।३१[१०]-३६[१३] )।

स्वभावो महिमा च

अक्रोधधारावप्येतौ क्रोधनशीलौ आम्नायेते अतापवृष्टिलाभत्वात् (७।६२[४]-६६[१८] )। स्वभावतो निर्मलस्य वरुणस्य कोपो नमोभि: हविर्भिश्चापनीयते येन पापहानिरपि जायते । सत्यमाचरणं वरुणाधीनमस्ति । तस्य, सुमति उर्वी, गम्भीरा, स्थिरा च श्रूयते। अस्मादन्य: कोऽपि प्राचीनतरो मेधया वा धीरतरो न विद्यते । स तु विश्वानि भुवनानि वेत्ति ( १।२४[६,१४]; ७।८६, अथर्व १।१०[२], ५।११[४] )

नानासम्बन्धा: :

शास्त्रेषु बहुधा वरुणानी वरुणस्य पत्नी श्रूयते ( ५,४६[८],७,३४[२२] )। अथर्ववेदे वा वरुणस्य वामपार्श्वोत्पन्नेति श्रूयते ( अध्याय ४)। भारतेऽस्य ज्येष्ठा पत्नी देवीनाम्ना ज्ञायते या बलनामानं तनयं सुराख्याञ्च तनयामजीजनत् ( आदि० ६६।५२)। ( उद्योग ११७।६) गौरी अस्य जाया स्मृता । वन्दीवसिष्ठौ अस्य पुत्रौ स्त: ( आदि० ६६।५, वन० १३४।२४)। शरण्युनामाश्वोऽस्य एव सूनु: श्रूयते (१०।६१[२४] )। वसिष्ठागस्त्यौ मित्रावरुणाभ्याम् उर्वश्यां जातौ स्त: ( ७।३३[११]) कौषी० ब्रा० १४-१५)। एकस्थानत्वेन अग्नि: वरुणस्य भ्राता इन्द्रश्च सखेति श्रूयते ( ४।१[२],७।३४[२४] )। वरुण एव देवबन्धुं स्वधायन्तं पितरमजीजनत् । धनं ददानोऽसौ यजमानस्य परं प्रशस्तं सखा भवति ( अथर्व० ५।११[११] )।

बलं रूपश्च

महते धनाय स्तोत्रै इन्द्रावरुणयो: बलमुत्पाद्यते( ७।८२[६] ) । असुरौ मित्रावरुणौ अन्यै: बलेभ्यबलसमन्वितौ स्त: ( ७।३६[२]-६६[११] )। उद्गूर्णवरुणस्य

अनुचरं वरुं दर्शतो गच्छति ( ७।३४[११] )। वरुणस्य हिरण्मयरथस्य कीलकादयोऽयो-मयाः सन्ति, अयञ्च दिवि विभ्राजते । सारथिनियताश्वाः अक्रविहस्ता रथस्थौ मित्रावरुणौ अवगाहन्ति ( ५।६२[४-८] )।

## मानवत्वारोपणम्

अथ मानवत्वारोपणम् ( ५।६६[१] ) अत्रासावुदकस्य: अत एव जलपश इत्युच्यते । पूर्वापरौ तोयनिधी अस्य कुक्षिस्थानीयौ भवतः ( अथर्व ४।१६[३] )। अन्यत्र जलधिः वरुणस्य तालुः भवति ( ८।६९[१२] )। परं सागरे एव अङ्गत्वया-रोपणेन विरोधो भवत्यत्र । तत्र परिहारमेवं सम्भवति—ककुदं उच्छ्रितस्थाननाम यद्वा मेरुप्रतिपादकचिह्नाम्। सागरोत्थिता भूमिरेव तस्य ककुत्स्थानीय इति वक्तुं शक्यते । ततो जाताः शैलशिखराः अत एव ककुत्पदवाच्यत्वमर्हन्ति । ते सप्त च ( ८। ६९[१२] ) अत्र काकुदं शैलमूलं सप्तसिन्धवः गङ्गादयो नद्यः अनुक्षरन्ति सततं स्रावयन्ति इत्यर्थं घटते। एवमनया युक्त्या शैलोत्पत्तिक्रमः ज्ञायते । विज्ञानसम्मतत्वाद् एतदेव मान्यं मतम् । तत्रवस्तुः वरुणो बृहस्पतिना दत्तं मणिं बध्नाति ( ७।३४[१०], अथर्व १०।६[१५] )। देवानां सवनात् दूष्यं बहुरश्मित्वात् श्रूयते । बृहस्पतिः ब्रह्मान्तुलकेन्द्रः। अत एव तत्सम्पादितं वरुणे ब्रह्मणिबन्धनमिति श्रूयते- समूहे एकवचनम् । आत्मनः पुष्टशरीरं सौवर्णिकेन कवचेन वरुण आच्छादयति । हिरण्यस्पर्शिनो रश्मय एनं परिनिषेवन्त इत्यर्थः ( १।२५[१३] )। दिविस्थो भानुरेव मित्रावरुणयोः चक्षुस्थानीयः स्मृतः । स एव एतयोः रूपं कुरुते ( ७।६१[१]-६३[१], यजुः ७।४२, ३३।३८ )। आभ्यामनयोः सूर्यात्मकत्वं सूच्यते । स्वरूपत एतौ उरोः पृथिव्याः अतिमहतो द्युलोकाच्चापि अतिरिच्येते । अग्निरेव एतयोः जिह्वा भवति। नित्ययौवनौ तौ जनजीवनाय, गव्यूतिं तृणादिप्ररोहाय, उदकेन सिञ्चनार्थम्, जनेषु यशो च बाहवः प्रसारयितुं प्रार्थितौ भवतः ( ७।६१[३]-६२[५]-६५[४]-६६[१०] )। तेजसा वृष्टिं कुर्वतोः अनयोः हिरण्यरूपं जनाः सदनेषु ( यज्ञेषु ) पश्यन्ति ( १,१३६[२] )। घृतज्वलिताग्नयः तादृश एव भवन्तीति व्यवहारविदः। पद्भ्यां शीघ्रगमनशीलौ मित्रावरुणौ अविच्छिन्नानि वस्त्रस्थानीयानि तेजांसि धारयतः ( १।१५२[१], ५।६४[७] )। श्री मैकडानलः ( ५।६२[४], ७।६४[१] )। अत्र घृतमनयोः वस्त्रस्थानीयमिति मन्यते ( तत्रैव ४१)। परमत्र एतदर्थं न घटते । न चैतद्

युक्तियुक्ततां भजते यजुःषु तद्दर्शनत्वात् , अन्यत्र च तत्पदस्य असम्भवात् ।

आयुधानि

न श्रूयन्ते मित्रायुधानि वेदेषु । भारते खाण्डववनदाहप्रसङ्गे श्रीकृष्णार्जुनौ प्रहर्तुमयं देव: क्षुरान्वितं चक्रं बिभर्ति ( आदि० २२६।३६)। वरुणोऽपि वेदेषु पाशेनैव अलङ्क्रियते । परन्तु भारते असावेव शूलायुधं नियमपूर्वकं गदां प्रददाति ( द्रोण० ९२।५०-५१)। अग्निना याचितोऽयं तूणीरम्, चापम्, कपिध्वजरथञ्च तस्मै ददाति ( आदि० २२४। १-६ )।

मित्रकर्मविवेचनम्

अथ मित्रकर्माणि । अनुकूलो मित्र: शकपूताख्ये कर्णौ स्थितेनैनसास्य अरीणां पुत्रपौत्रादीन् निहन्ति ( १०। १३२[५] ) । विश्वपति: मित्र: पुरुद्रव्याणि स्वतेजसा पश्यति । महानादित्योऽयं द्यावापृथिव्यौ: अन्तान् स्वरश्मिभि: परिमिनोति महिम्ना चैते आपूरयति ( ३।५९[५],८।२५[१६,१८] ) । आत्मागमनेन मित्रो जनान् कर्मसु नियोजयति । वृष्ट्यान्नं वर्धयन् द्यावापृथिव्यौ धारयति-तत्रस्थान् जीवान् जीवयतीत्यर्थ: । कर्मशीलानसौ अनुजाणम् अनुग्रहदृष्ट्या पश्यति। अस्मै हविर्ददानो जनोऽन्नवान् भवति, न चापि हन्यते अभिभूयते वा केनापि शत्रुणानेन रक्षित: । अनागसो मित्रस्यैव कर्मकुर्वाणा: अनमीवान्नै: मदन्तो जना: पृथिव्या: विस्तीर्णे प्रदेशे यथेष्टं विचरन्ति ( ३,५९[१-३]; ७,६६[४] )। सुसेव्यो मित्र: सुदात्रोपेतास्ति । असौ एव जगतो विधातेति श्रूयते ----- जीवनक्रियाया: तन्मूलकत्वात् । वृष्ट्या चर्षणीनां धारकस्य मित्रस्य अन्नं सर्वै: सम्भजनीयं धनञ्च चित्रश्रवस्तममस्ति । मित्रो महिम्ना दिवं श्रवोभिश्च पृथिवीमभिभवति । तेजसा दिवं विद्योतयन् मित्रो वृष्टिं करोति अन्नैश्च क्षमां पूरयतीत्यर्थ: । शत्रुशमनशक्तिसम्पन्नो यं विश्वान् देवान् ~~स्वरूप~~ स्वस्वरूपतया बिभर्ति । सर्वेषु देवेषु ज्योति:षु वा द्योतनशीलता अनेन कृतैवास्तीत्यर्थ: ( ४।५९[४-८] ) शत्रु शमनात् सर्वत्र जीवेभ्यो हानिकराणां वायुमण्डलव्याप्तानां रोगाणूनां हानि: श्रूयते, न च व्यक्तिरूपारीणाम् ।यद्वा प्रकारान्तरेण मित्रोपासनया लब्धबलेन जना: शत्रून् नाशयन्ति, अत एवं श्रूयते ।

## वरुणकर्म विवेचना

अथ वरुणकर्मनिरूपणम् । वरुणो माध्वानां पशून् गा इव पाति । उत्सरणशीलोऽयं विश्वं परितो निदधाति ककुभश्च निधारयति पृथिव्यामपि कृष्व: सद्म । जनै: दर्पणीयं स्वर्गमस्यैव कृति इति श्रूयते । तत्र तत्र प्राप्यानि शीतलसाधनानि सुखानि च मेघादिष्ववरुणकृतान्येव सन्तीति भाव: । मुवनयतयिद्र उग्राणाद्यन्तर्हि-तानि गुह्यनामानि विजानाति तेषु सूक्ष्मरूपेण व्याप्तित्वात् यद्वा तेषां जनकत्वात् । सम्प्रति वैज्ञानिका: तानि नामानि एवं पठन्ति---- अल्फा, बीटा, गामा च । पुरुरूपं काव्यं कवि: वरुणो द्यौरिव पुष्यति ( ८।४१[१-५]; अथर्व ५।१[१] )। चक्रे नाभिरिव विश्वानि कविकर्माणि वरुणाश्रितानि सन्ति--काव्यस्य प्रकृतिमूलकत्वात् । देवानामपि शुभाशुभ कर्माण्यसौ परीक्षते । विश्ववेदोऽयमसुर: त्रिभि: रूपै: आकाशमापूर्य द्यामस्तम्नात् । यद्वाऽग्निरितोऽयं द्यावापृथिव्यो: अन्त: पातितश्च आकाशमाल्मनो रूपै: आपूर्य एतयो: तस्य पद्भ्यो: अस्थापयत् । आदौ तमाधिक्येन असंगठितां पृथिवीं सुसङ्ग-ठिता कृत्वा परितो माननीया चक्रे अनन्तरञ्च जलधारै: एनां विस्तारितवान् शमितेव चर्मेद्र ( ५।८५[१]; ७।८६[१] ) । एतया श्रुत्या भौगोलिकानामिदं मतं प्रतिपाद्यते यत् नदीभि: नदारिवरजनिर्मिता: इदानीं दृश्यमाना:समभूभागा: । नासीदियं भूमि: आदौ तथा यथेयं दृश्यते इदानीम् । आदिकाले तु विषमैवासीत् सा शैत्यकृत पलितै:, पश्चाच्च जलप्रवाहै: ( वरुणयोगेन ) सागरेण सञ्चितै: नगपांसुभि: कृता: सम भूभागा:। यद्वा परिमाण: परिधि:। स्वञ्च सा भूपरिधि: वरुण कृता भवति ।

प्रजाभ्यो वृष्टिं कुर्वन् वरुणो सुराणां बलवताञ्च मेघानां मायां स्वर्धिना नाशयति--तान् वृष्टिजल रूपेण परिणमयन् । सकललोकेश्वरो धैर्यसम्पन्नोऽयं देवोऽमृतस्य गोप्ता, स्वजनेभ्यश्च त्रिषु लोकेषु सुखशरणप्रदाता भवति ( ८।४१[६-८]-४२[१-२])। वाजेशोऽयमविणान्नदातास्ति --- स्वच्छजलसेचनसमर्थत्वात् । दूषितं जलमपि अन्नं दूषयतीतीयमृषीणां विज्ञानबुद्धि: अन्या ज्ञेया भवति ( ८।२५[२०] )। विश्वेषां देवमर्त्यानां स्वराजो राजा वरुणो ददाति सुकीर्तिमायुश्च स्तोत्रं कुर्वते जनाय ( १।२४[११]-२५[१२]; २।२७[१०]-२८[१]; १०।१३२[४] )। मेघोदध्यादिषु मीनमकरादिरूपै: पुरुवीरै:

परिवृतो वरुणो विश्वस्य नेता श्रूयते । सेतुरिव अपां धारयिता ( मेघरूपेषु) वरुण एव नदीभ्यः उदकानि सर्वतः सृष्टवान् येनास्माकं नद्यो यन्ति सततं यथा श्येनो वयो भूम्यां गच्छन्ति। अनयास्य हिमरूपत्वं सूचितं भवति । उरुगूर्णोऽयं नदीनां तानि परिपश्यति तासां रूपाणि च निर्माति। नदीरूपपरिवर्तनं प्रति आसन् जागरूकाः आर्याः । इदानीं भौगोलिकाः तानि रूपाणि विविधरूपैः वर्णयन्ति । अविज्ञेयत्वात् कविभिः तन्न श्रूयते स्म ( २।२८[३-४]; ७।३४[१०-११] ) । अन्तरिक्षे वर्तमानानि अस्य मेघरूपाणि धामानि सर्वेषां कृते प्रीतिकराणि भवन्ति ( ७।८७[२] )। अनेनानुगृहीतो जन एव स्वपदमलक्षालने समर्थो भवति नान्यः । वरुणवारिकृता खलु स्निग्धता पदमलेभ्यः यदभावे तेषां प्रक्षालनं न सम्भवति । अत एवं श्रूयतेऽत्र ( २।२८[६] )। एकस्मिन् मन्त्रे स्तोता वरुणं पापशैथिल्यम् । कर्मसातत्यम् ऋतुपर्यन्तञ्च अशीर्णशरीरं याचते । अस्य वारिभेषजैः पापव्याधीनाम् उन्मूलनम्, स्वास्थ्यलाभात् कर्मरतिः, ततश्च शरीरस्य अशीर्णता याचिता भवति अनयेति भावः ( २।२८[५-६] )।

घोरोऽयमनृतानि प्रकृतिनियमविरुद्धचरितानि भूतजातानि हिनस्ति । कर्मभावदोषान् देहेषु व्याधिदोषान् जनयति येन मृत्युमप्यनुभवन्ति देहिनः इति तस्यैव । पापपुण्य विवेकेन विभिन्नफलभोक्त्रीः प्रजाः असांकर्येण धारयति वरुणः। अनेन प्रेरितो वायुः सर्वं प्राणिजातं प्राणत्वेन धारयति उदकानि च प्रेरयति यतो हि पयोनिधिः प्रान्तेभ्यो भवति अस्यागमनम् ( ७।८४[५]-८५[३]-८७[२] )। असावहनि महान्तमादित्यं रात्रौ च विकाशमानं चन्द्रम्, रूप्यानि नक्षत्राणि च प्रेरयति ( १। २४[१०],७।८६[१] )। अनया सर्वेषां नक्षत्राणां वरुणस्य उद्गन्तृत्वशक्तिसमन्वितत्वं ज्ञायते यथा एतेषु उदयास्तकारणरूपा गतिर्वर्णिता ( हॉपकिन्सटनो: ऋग्वे० )। वर्गौ नाऽसौ महती रात्रीः अहोभ्य एव चकार । यद्वा स एव आत्मनो रश्मीन् दिवा श्वेतान् अधिकरोति रात्रौ च कृष्णान्( ७।८७[१], ८।४१[१०] )। अन्तरिक्षेऽधिवसतो वरुणस्य श्वेतानि तेजांसि सिद्धो भूमिः निरुपराणि भुवनानि च प्रथयन्ति ( २।२७[८],८।४१[६] )। ब्रह्मलोकव्याप्तोऽयं तद्रहस्यानि उपदिशति अन्तेवासिने ( ७।८७[४] )। द्यावापृथिव्योर्मध्ये तस्य परस्ताच्च यत् तत्सर्वं वरुणो विजानाति। अशून्यं वै आकाशं नानाग्रहपिण्डखण्डयुक्तत्वात् इत्याधुनिकैः स्वीक्रियते येषां ज्ञातायं वरुणः श्रूयते ( अथर्व० ४। १६[५] )।

अदब्धासु ( परमाणुषु ) भ्राजमानो वरुणोऽणुकमपि परेषां भावं विजानाति । यद्वा विस्फोटादिभिः क्रियमाणान् शब्दान् पूर्वमेव विन्दति ( अथर्व ५।१ [१-२] )। भूमण्डलस्य प्रजानां साम्राज्याय अयं लोकान्तरेषु निवसन्तु देवीषु प्रजासु ( तान् लोकस्थिताय प्रेरयितुम् ) यद्वा नक्षत्रमण्डलात् देदीप्यमानान् प्रजान् निषसाद (१।२५ [१०])। दृश्यत एव नक्षत्राणां प्रभावो जीवेषु येषां माध्यमेन शान्तिः प्रजासु । सृष्टेः आदौ वरुणो जलं परिव्याप्य नानाजीवानां पुरूणि वपूंषि करोति ( अथर्व ५।१ [२,८] )।

गातुविदं वरुणं जनाः अस्य दुष्प्राप्याणि सुवर्णमयानि धामानि याचन्ते ( १,१०५ [१५], ७।८३ [१] )। वरुणालयो रत्नाकर इत्यभिधीयते तैलस्वर्णादीनां खनिजानामाकरत्वात् यथा च मन्यन्ते वैज्ञानिकाः । परं तेषां प्राप्तिः सुदुष्करी । अत एव अस्य धामानि दुष्प्राप्याणीति आम्नायते । एवमेव अनेन सम्बद्धेषु ग्रहनक्षत्रेष्वपि नासम्भवा धातुप्राप्तिः, येषां ज्ञानलाभाय इदानीं पाश्चात्याः प्रयत्नपराः सन्ति । तथा हि- --- मैरिनरयानेन ( नवमेन , १३-११-१९७१) प्रेषितसूचनाभिः मंगलग्रहे धातुप्राप्तिः अनुमीयते ---- गुरुत्वाकर्षणभेदेन । अस्य अनुचरस्थानीयाः 'सप्तऋक्षाः' ग्रहनक्षत्रादयो द्यावापृथिव्योः तयोर्मध्ये च स्थितान् शुभाशुभकर्मकृतान् जीवान् परिपश्यन्ति ( ७।८७ [२-३], अथर्व० ४।१६ [४], शत०ब्रा० ११। ६ [१] )। त्रिविधाः सुलोकाः, आकाशसमन्विताः त्रिविधाः भूमयो वरुणव्याप्ताः सन्ति । अत्रैव दिवि प्रेङ्खमेव दिगन्तस्पर्शिनं हिरण्मयं सूर्यं शुभे दीप्त्यर्थं चक्रे ५।८५ [२],७।८७ [५], अथर्व० ५।१ [१-२४] ) । तदुदकनीयशक्त्यैव अवभासते सूर्य इत्यर्थः । ययोः कयोः द्वयोः भुवनयोरपि भूमण्डलमिव आकाशवो भवन्तीति नासीदाविदितमार्येभ्यो यदर्थं यतन्ते इदानीं वैज्ञानिकाः। मघोनोऽयं सूर्याय मार्गं विस्तीर्णं चकार ( २।२८ [११], ७,८७ [१] )। सम्भवतः आदौ सौरपरिवाराभावे गुरुत्वात् सूर्यकक्षा न्यूनविस्तारवती आसीत् । अनन्तरं जाते सौरपरिवारे वरुणशक्त्या ( उदजनशक्त्या) तस्मिन् गौरवाकर्षणशक्त्योः न्यूनतां गते सति स्वभावतो यद्वान्येन केनचित् नवागतेन महद्ग्रहेण आकर्षितोऽयम् ( सूर्यः ) उच्चतां प्राप्तो येनास्य कक्षा विस्तीर्णा बभूव । अत एव श्रूयते ।

सूर्य इव देदीप्यमानो वरुणो वेलायामस्वापयति उदधिषु- अतिरिक्त-मार्गतं जलं वाष्पत्वेन निष्कास्य । अत एवासौ उदधिपतिरुच्यते जलेशो वा । तुषारकान्तो वरुणो जगतो राजेश्वरो भवति। गौरमृग इव सुविष्पाड गम्भीर-शंसो वरुण उदकानां निर्माताऽस्तीत्यनया श्रुत्या अस्य देवस्य उदजनत्वं हुडीक्रियते, हुडीक्रियते, अस्य योगेन वैज्ञिका: प्रयोगशालासु जलं सम्पादयन्ति स्म । मित्रेण सह अस्य घनिष्ठं सम्बन्धं वीक्ष्य शुद्धवायुरूपो मित्र इति भावो जायते । नानेन कथनेन मित्रो व्याकारतया तयेति मन्तव्योऽपितु ग्रीष्ममासे प्रकृष्टतापेन वायुगतान् नानादोषान् नाशयति। तत्कृता वायुशुद्धि: । अत एव सोऽर्हति शुद्धवायो: प्रतिनिधित्वं स्वनाम्ना । यथा मृत्तिका घट: कुम्भकारस्य घट इत्युच्यते । पराजितधनभोगपराङ्मुखो जन: आत्मना पित्रादिभिश्च कृतानि ऋणानि परासुवितुम् अदब्धव्रतं वरुणमुपास्ते ( २।२८, ३।५४, ५।८५, ७।८७ )।[६-१०, १८, ७, ६] अयमेव वनेष्वन्तरिक्षम्, अश्वेषु वाजम्, प्रजासु जठराग्निम्, उस्रियासु क्षीरम्, हृदयेषु क्रतुम्, अप्स्वग्निम्, दिवि सूर्यम्, अद्रौ च सोममदधात् । विश्वेशोऽयं लोकहिताय कबन्धम् ( मेघम्) अधोमुखविलं कृत्वा लोकत्रयं क्लेदयति ( ५।८५, यजु: ४।३१)।[२-४] अन्तरिक्षे तिष्ठन् वरुणो दण्डकारूपे आदौ सूर्येण पृथिवीं परिच्छिनत्ति ( ५।८५)।[५] नान्यया केवलं पृथिव्या: उत्पत्ति: ज्ञेया भवति अपितु अन्येषां सौरग्रहाणामपि । यथा च मन्यन्ते श्री जेम्स जीनस्य समर्थका: भूगोलविद:। महिम्ना युक्तो महाकर्मा, तेजस्वी , अजरामर वरुणो विस्तीर्णे द्यावापृथिव्यौ विभासयति ( ६।६८ )।[६] चन्द्र इव अस्माकं पृथ्वी अपि ( वरुण ) आदित्यभासाऽ भातीति भाव: ( अयं उरो: कृष्णस्य पृष्ठतो वातस्य मार्गं कुलीकस्याः देवांश्च विजानाति--रश्मिभि: तत्र तत्र व्याप्तत्वादस्य । समुद्रियो वरुणो व्याधिबन्धनिवारकाणि कानि औषधीनि धारयति। आत्मनो रश्मिषु वारिषु वा व्याधिबाधकान् गुणान् बिभर्ति वारिपतिरिति भाव: ( यद्वा वृष्ट्या तानि धारयति ( १।२४-२५ )।[६, ७]

नाभिपादौ माङ्गेषु बद्धान् पाशान् शिथिलीकर्तुं प्रार्थितो भवत्ययं बहुश: ( १।२४, अथर्व ७।८३, यजु:० १२।१२ )[१३-१५, ३-४] कुपितोऽयं जीवान् पाशै: बध्नाति तेभ्यश्च मुक्त्यर्थमग्नि: प्रार्थितो भवति ( ४।१ )।[४] अनया श्रुत्या शैत्यस्य पाशत्वमनुमीयते यस्माज्जायन्ते विविधेषु अङ्गेषु पक्षाघातादय: पाश इव अङ्गनियामका: ।

यद्वा आमाय मात्रेण जायते शरीरतापहानि: ( जीवनशक्तिह्रास: ) । अतस्ते ( आमया: ) अपि पाशत्वमर्हन्ति । शैत्यामयो: पाशत्वे नास्ति कश्चिद्वास्तविको भेद:। अग्निनात्र औषधीषु अन्तर्हितोऽग्नि:( रोगशामकतत्त्व विशेष:) अभीष्टो भवति। अनेनैव प्रेरितो वायु: प्राणत्वेन जीवान् जीवयति । जलांशान्विते वायौ सुखेनजीवति जीव इत्यर्थ: । त्रिषु लोकेषु सप्त सप्त कृत्वा व्याप्ता: निर्मिता रुशन्तो स्य पाशा: मिथ्यावादिनं शत्रुं निघ्नन्ति सत्यवादिनञ्च अवमुञ्चन्ति । अस्य समाम्यनामक: पाश: सामान्यरूपेण जनान् रोगै: पीडयति , व्याम्यो नाना विधरुजै: सम्पीडति, सन्देश्य: समानदेशे, विदेश्यो विदेशे, दैवो देवेषु, मानुषश्च मानुषेषु प्रभवति ( अथर्व० ४।१६ ६,८ )। अत्र पूर्वोक्तौ द्वौ पाशौ अजीर्णपरकौ स्त:, सन्देश्यविदेश्यौ वरुणनिरतजलवायुपरकौ स्त: । एतै: चतुर्भिपाशै: सर्वेविधप्राणिनो भवन्ति पीडिता: अस्य कोपभाजनेषु सति । इतरौ तत्रैव प्रभवत:------ स्वधर्मकर्मणामभावे विरुद्धाचरणे वा । अनृतभाषिणं जलोदरेण नाशयति वरुण: । व्याध्युत्पत्ति: तस्या: अराध्यता वैद्यस्य कृच्छ्रिकापी भवत: याभ्यामसौ कोपभाजनानामायुर्विद्रापयति ( अथर्व० ४।१६, यजु:२१।२ )।

न केवलमसौ व्याधिपाशयुतलुब्धक इवास्ति दुष्कृतां कृते, अपितु प्रपन्नोऽयमिन्द्रसुपवरान् यद्वन् जलोमानञ्च तस्मिन् स्थापयति । अपां रसेन सोमेन च तमयं वर्धयति । सूर्याय दानवीरवरुणो वाप्यरूपां दक्षिणां ददाति मनोव च चिकित्सति ( अथर्व५।११, यजु:१६।८५,६४) । एताभि: श्रुतिभि: वरुणस्य वैद्यत्वम् , वैदिककाले चिकित्साविज्ञानस्य चरमोत्कर्ष:, ( यदधुना इवानीं यतन्त एव वैज्ञानिका:) वाष्पशोधितायां प्रयोग: , मनोयौगिकचिकित्सापद्धतिश्च ज्ञेया भवति ।

## मित्रावरुणकर्मणां संयुक्त विवेचनम्

अथ मित्रावरुणकर्माणि । अनयो: आशयैव अग्नि पयोदोग्ध्रीं धेनुं मायिशीतवायां मृत्युं वा अपनीय सुभिक्षभवना करोति ( १०।६१ २७ )। गां पयसेव स्तुतो एतौ जनकर्माणि फलै: धनैर्वा प्याययत:। अनयोरभिमतं देशं प्राप्ता: जना: दुरितानि शीघ्रमतिक्रामन्ति यथा निरुदकान् प्रदेशान् पथिका: (५।४६ ५ १०।६४-६३-१२ ६ १२६ १-२)।प्रकाशवर्णनादिना राजमानौ तौ कणूयन्ती शाश्वी: प्रजा: अभिमवितुं क्रमश: घूर्णदं वनर्धदं रथमभितिष्ठत: ( १०।१३२)। वरुणो जीवानां शुभाशुभकर्माणि

वीक्ष्य तेभ्यस्तदनुसारं भिन्नयोनौ पदं ददाति मित्रश्च सर्वं प्राणिजातं कर्मसु नियोजयति। अजकावं दुर्दृशीकमपि विषं मित्रावरुणौ नाशयतः। मृग्मानौ वर्धमानाद् विषादात्मानं त्रातुमेतौ निवेदितं पड्वा गच्छतो भुजगात् ( ७।२६[२]-५०[१] )। सिन्धुरिव देवेषु वारिरश्मीणां विषापाकरणशक्तिः। पूर्वं नृतविघातकौ मित्रावरुणौ अर्यम्णा समयुक्तयुद्धेषु वृद्धिमधिगच्छतः ( ७।६०[५] )। तत्रोत्पादितस्तोमो मित्रं वाध्यस्व वरुणं पुष्यति तत्र वैज्ञानिकं सत्यमस्ति। तथा च श्रूयते गीतायाम्---नासतो विद्यते भावो नाभावो विद्यते सतः। ( गीता २।१६)। सुकृतं कर्मानुष्ठानवन्तं जनं गच्छन्तौ मित्रावरुणौ तमर्चिमार्गेण नयतो दुष्कृतञ्च नरं धूममार्गेण। द्यावापृथिव्योः कर्माणि निर्निमेषेण पश्यतोः सामर्थ्यादेव नद्यो निम्नदेशेऽपि गाधतां भजन्ते ( ७।६०[६-७]-६५[२] ) प्राणिजातं कदुष्णोऽपि पूर्वं मेधारौ एतौ सर्वं स्वस्वकर्मसु नियोजयन् अनुल्वणेन अहोरात्रयोः व्यापेन तेनैव पूजितौ बभूवतुः ( ८। २५[६] )। तयोः तेजांसि भूलोकमहर्निशं तापयन्तीत्यर्थः। सूर्यः क्व उदयति अस्तं वा गच्छतीति आर्याणां धारणा, अत एव पृथिव्याः वर्तुलत्वेन परिभ्रमणेन वा आर्याः आसन् अनभिज्ञाः इति मन्यन्ते पाश्चात्याः। परन्तु असत्यैवं तेषां मतम्। सूर्यदेवस्य उदयास्तं दृश्यादृश्यभावेनैव मन्यन्ते स्म तथा च श्रूयते अन्यत्रापि ( ऋ० सं० १।२।१४।५ ,विष्णु० २।८[१५-१७] )।

मित्रावरुणयोः शुष्मो द्यावापृथिव्योः पृथक्करोति दधाते न स्वतेजोभिः ( ५।६२[३],७।६१[४])। धनधान्यैः पृथ्वीं पूरयित्वाकाशं ततः पृथक् करोति ---तयोः भेदं प्रकाशयति। यद्वा मित्रावरुणाभ्यां सम्पादितेन शैत्येन घनीभूता पृथ्वी अन्तः पातिनाकाशेन विहीना जाता। एतस्य नेता वरुणो मित्रश्च जनानां यज्ञादिलक्षणं कर्म ददाति। जनान् अनिमिषं पालयन्तौ एतौ ओषधीषु प्रजासु च रूपं धारयेते। चराचर प्राणि एताभ्यां कृतान्येव सन्ति। अनृतबन्धकौ तौ वैरिजनाय दुरतिक्रमौ स्तः। वैरिजनाः रोगाणवो दास्तिकाश्च। ( ७।६१[३]-६४[२]-६५[२-३] ) सूर्येणानुज्ञातौ मित्रावरुणौ अर्यम्णा सह सहस्रऽसंख्याकं धनं जनेभ्यो दातुमीशाते ( ५।६४[४], ७।६६[११])। अनयोः अर्चनम् अत एव ज्येष्ठयमसुर्यं शुरसऽव्योपेतं यामनि सकलशत्रुऽव्यस्य जेतृ भवति। प्रकृष्टतेजस्कौ दक्षपितरौ देवैः बलकरणाय ध्रियेते। देवैरिति द्योतनशीलैः ऋत्विग्भिः बलकरणाय आत्मनो धृतिवर्धनाय ताभ्यां ज्योतिः

गृह्णन्ति । गृहवनूनां पातारौ जरितॄणां स्तुतिकर्माणि सफली कुरुतः ( ७।६६[२-३] )। प्रचेतसौ एतौ पिशाचाद् अपसारयन्तौ रपांसि वशीकुरुतः ( ४।२६[२],अथर्व ६।३२[३], १०।४[१६]) सन्ध्याकाले मन्देहानां रक्षसां नाशोऽन्यत्रापि श्रूयते ( विष्णु० २।८।५०) । सर्पविष-नाशिनी ~~शक्तिर्~~ शक्तिरपि तत्र विज्ञानसम्पत्तैवास्ति ।

आग्नेयतेजसा मित्रावरुणौ लोकं प्रकाशयतः । अश्विनाभ्यां साकं एतौ यजमानो द्युभिरुपेतं शीतातपनिवारकं शरण्यं त्रिभूमिकं वरूथं याचते ( ६।६७[२], ८।१८[२०-२१]-१९[१६] )। अनया श्रुत्या एतेषां देवानां गृहशिल्पनैपुण्यं आर्यविज्ञानभूमिश्च अनुमेया भवति। भूरिपाशौ सिन्धुपती एतौ विश्ववेदसौ स्तः ( ७।६४[२]-६५[३],८।२५[३])। वर्षिष्ठक्षत्रौ दीर्घश्रुतौ चैतौ सूर्यरश्मिभिः सह कर्माणि प्राप्नुतः ( ५।६५[२],८।१०१[२])। क्षत्रदक्षौ जीरदानू एतौ श्रुतां देवदीप्तिमनुवर्तन्तौ उर्वीं तथैव रक्षतो यथा बर्हिः पशुभिः रक्ष्यते । उदकवन्तं पुराणाश्च सिन्धवः ऋतवन्तौ मित्रावरुणौ अनुगच्छन्ति ( ५।६२[३-५] , ८।२५[१] ) । पुराणा इत्यनेन विशेषणेन अस्माकमृषीणां सिन्धूनां चिरकालैतिह्यज्ञानं ज्ञायते । वेदानां देवप्रधानत्वाद् यस्य वर्णनमनभीप्सितं भवतेऽत्र । यद्वा भौगोलिकानां विषयत्वाद् नात्र वर्ण्यते । अनुगच्छन्तीति तत्रस्थानि जलानि रश्मिमाध्यमेन एता अनुगच्छन्ति। स्वर्दृशौ मित्रावरुणौ द्यावापृथिव्योः पती स्तः तयोः रश्मयश्च एतयोः विचरन्ति। दिविक्षितो दीप्यमानो यो रविः चित्रायुधभूतो भवति मित्रावरुणयोः ---- अनयोः कर्मसु रविः साधनस्थानीयो भवति। यद्यपि स्थितिभेदेन रविरेव मित्रावरुणनामभ्यां ज्ञायते तथापि तदानीं एवौ मित्रावरुणतत्त्वयोः प्राधान्याद् ताभ्यां नामभ्यामेव स ज्ञायते लोके । शुक्लाशुक्लप्रतीकत्वाद् शोषणधर्मो मित्रः तच्च व्यवहारसिद्ध एव । अनयोरेव अनुग्रहान्मरुतः शूर इव उदकार्थं शोभनाधाधारं रथमश्वैः योजयन्ति । मेघरथं धावयन्तीत्यर्थः । पर्जन्योऽपि एतयोरेव कृपयाविष्टस्तनां दीप्तिमतीं वृष्टिं कर्तुं गर्जनं करोति । मरुतां पर्जन्यानाञ्च योगेन मित्रावरुणौ अरुणाम् अपापां ( निर्मलाम् ) वृष्टिं कुरुतः ( ५।६३[२-६] )।

विपश्चितौ एतौ निजव्रतभूतं जगद्धिताय दिवि धारयतः आत्मनो गुणैः पूरयित्वा। अनयोः अनुग्रहकृतैः वार्यादिभिरेव नदीषु भूमिषु जीवाः सुखानि अनुभवन्ति नान्यथा । जलाभावे कस्यापि लोके सुखजीवनं न सम्भवतीत्यर्थः । अनयोः

प्रसादादेव त्रिलोकेशाः अग्न्यादयश्चादित्याः स्वेषु स्वेषु लोकेषु वर्तन्ते । अद्रोग्धारौ उग्रौ मित्रावरुणौ वितुराणौ जनान् रक्षतः ( ५।६३[७]-६४[२]-६६[२]-७०[२-३] ) । तत्तु ज्येष्ठतमौ तौ स्वबाहुभिः जनान् सारथिरिव यंयच्छतः ---- वायुवृष्ट्यन्नानां हेतुत्वात् । अश्वाविव वाजिनौ पूतदक्षौ रिपुघातकौ स्तः । यथा स्थूणा वंशं धारयति तद्वदेताभ्यां दृढीकृतौ विश्ववेदौ रविः भूमिं दिवञ्च आतनोति । अत्र अनयोः प्रभावात् सूर्ये सततरूपेण वर्तमाना दृढीकरणक्रिया सूचिता भवति । अपि च अत्र भूमिमातनोतीति अनेन वचनेन भूधारणविस्तारणयोः वारिवाय्वादीनां सूर्याधीनत्वात् ( रविमूलकत्वात् ) स एव पठ्यते प्रतिनिधिरूपेण । दिवमातनोतीत्यनेन वचनेन दिवि प्रचलिताः सूर्यग्रहाः उच्यन्ते । यद्वा सूर्येण पृथग्भूताः ग्रहाः भूमिभावं भजन्ते येन भूमिः विस्तारं भजते , भानोः आकारश्च नानाग्रहान् उत्पाद्य न्यूनतां गतो येन तं पूरितो वर्तमान आकाशो विस्तारं गतवान् । असावेव मेघान् दृढीकरोति ( ५।६७[१,४,६] )। उरुक्षयौ कवी मित्रावरुणौ जनानां कर्म दक्षञ्च पोषयतः । एतौ अनिष्ट्वा मूढः परमाणैः व्यथितो भूत्वा हृदये व्याधिं निधत्ते । अनयोः सर्गाः अच्छिन्नाः मननीयाश्च भवन्ति। ज्योतिष्मती तौ गवाश्वौषधीः वृष्ट्या वर्धयतः ( १।२[६]-१२२[६]-१५२[१],५।६२[३] ) । अनयोः वृष्ट्युत्पादकत्वं तैत्तिरीयेऽपि श्रूयते -----

एतयोरहोरात्राभिमानिदेवत्वादहोरात्रद्वारा वृष्ट्युत्पादकत्वात् अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति ( २।१।७।३१ )।

## इन्द्रावरुणकर्मनिवेदनम्

अथेन्द्रावरुणकर्माणि । देवश्रेष्ठौ इन्द्रावरुणौ शूराणां मध्ये शविष्ठौ दानवत्सु च दातृतमौ स्तः ( १।१७[२-३]; ४, ४१[३]; ६।६८[२] )। अन्येषाम् आदित्यदेवानाम् अपेक्षयाधिकजलप्रदायकत्वात् इति भावः । ऋषिभिः स्तुतौ उग्रौ इन्द्रावरुणौ दीप्यमानौ निष्ठञ्च वज्रं बिभ्रतौ क्लिश्नूणां वधाय भवतः ( ४।४१[२,४],७।८३[४]-८३[१,३,५] ) अनयोः वज्रत्वं गता दामिन्यौ जीवघातकानां रोगाणूनां वधाय भवतीत्यर्थः । महान्तौ तौ परमे व्योम्नि शरीरदार्ढ्याय ओजः दधातु:---- जीवानामात्मनश्च एतौ अपामानरकं वृत्रं निराकृतवन्तौ स्वमनुप्रावृतं सूर्यञ्च तद्वधेन प्रकाशितवन्तौ ।

आत्मबलेन एतौ भूतजातानि पुनत: । चारित्रापयोग्यानि भूतानि घ्नन्तीति भाव: । दृष्ट्या सर्वाञ् प्रीणयन्तौ तौ व्याधिबन्धकै: पापकृतौ बध्नीत:। ऋतुनियम-विरोधिनो जनाञ् इत्यर्थ:। यस्य च इन्द्रावरुणाभ्याम् अभिज्ञायते तं जनं पापानि , सन्ताप:, परिबाधा वा न बाधते । रक्षणहेतुना मित्रो वरुणं मरुतश्चेन्द्रं परिचरन्ति येनोक्तं वर्णितं ( ७।८२ २-३,५,७ ---------- ८४ २ )।

वरुणस्य गुप्तचरा:

वरुणस्य गुप्तचराणां विषये श्री ओल्डनबर्गस्य मतमस्ति यदवनिपतिं गुप्तचरपरिवृतं वीक्ष्य आर्येषु वरुण चरधारणा जाता ( धर्म-वेद पृ०२८६,पू०२)। यद्वा ईरानदेशीयानां मिथ्रस्य गुप्तचरा: स्पशनाम्ना ज्ञायन्ते । अत एव तेनैव नाम्ना मित्रावरुणयो: चरा श्रूयन्ते वेदेषु इति मन्यन्ते बहव: पाश्चात्यमनीषिण: ( एग्गर्स: मित्र , ५४-७, तुल्की० रॉथ: त्सी०गे० ६,७२, ओ० त्सी०गे० ५०,४८)। सर्वत्र अनुकरणबुद्धिमन्विष्यन्त एते विद्वांस: परकीयमार्यज्ञानमिति सिद्धयितुं यतन्ते, अत एवं विचारयन्ति । तत्र भविष्यति मिथ्र: तस्य चराश्च अवैज्ञानिका: । परमस्माकं वरुणचरास्तथा न सन्ति । उद्वहनशक्तिसमन्वितानि सर्वाणि ग्रहनक्षत्राणि स्वयि: ज्योतिर्भिश्चरन्ति सर्वेषु जीवशरीरेषु प्रभवन्ति च---- तत्कर्मस्वरूपानुरूपम् । चराचरेषु ज्योतिषां प्रभावो विदितमेव । पापकृतेषु ( नियममात्रविरोधिषु) बाधते तत्त्वहानि: येनानुभूयते तै: अस्वांकृता मानसी शारीरिकी च पीडा ।पुण्यशीलेषु सत्त्वाधिक्यात् तेषां कुप्रभावो न प्रभवति । यद्वा सर्वाणि दृश्यमानानि ज्योतींषि स्वान्यो: चरस्थानीया: भवन्ति यतो हि गुप्तचराणामिव एतेषां प्रभावकार्योऽपि अदृश्यरूपेण घटति सर्वेषु । नाऽत्र भूपतीनां चरत्वं मिथ्रस्य वा स्पशत्वं प्रभवति । मित्रावरुणयो: गुप्तचरा: स्पशपदेन उच्यन्ते इति काकतालीयसम्बन्ध एवास्ति ।

अनयो: स्वरूपविचार:

मित्रो रविरिति मन्यमाना: पाश्चात्या: वरुणस्य प्राकृतिकमाधार-मन्विष्यन्त एवं रात्र्याकाशेन आकाशेन वा योजयन्ति यतो हि मित्रो दिवसं वरुणश्च रात्रिं चकार अथवा रात्रि : वरुणे समाहिता ( मूर: पृ०७५,७०, रॉथ:सें०को०

व० व्या०[3] वरुण ; ओल्डर:[1] वी० मा० ६,११६; मैक०, तत्रैव पृ०४६; तै०सं०१,८,१६,[1]
६,४,८; तै० ब्रा० १,७,१० )। वाशिंगटन: पाश्चात्यास्तु वरुणमाकाशस्य
उच्चस्थानीयदेवतात्वे यौस एव गुणमात्र अपविष्यत इति मन्यन्ते ( वाशिं: वा०क०
६८-१०३; काय: डी० गे० ८०-६; मैक० ज०रा० सो० २६,६२८; श्लि०:मित्रा० ट्रेस्ला
१८७७; मैक्स०, इण्डिया १६७-२००[18] ; बौहनेन० उ०भा० लुड०: क० अ० ३,३१४-६ )।
हिलेब्रान्टश्च अथर्ववेदे ( ६।३ ) अत्र वरुणं संवरत्वाच्छादकं ( तमसा ) मित्रञ्च
प्रात: काले तत्सर्वं प्रकाशकमिति कथयति । अनेन वरुणस्य रात्रि देवत्वं सिद्धीक्रियते
प्रतीच्येन विदुषान्वेषणामिव । परं नात्र तथास्ति यतो ह्यस्मिन् शालासूक्ते तु
मात्र वाष्पाच्छन्नशालां प्रकाशयितुं मित्रो भवति स्तुतो न पुन: तमसाच्छन्नं विश्वमालोकयितुम्।
एवं सति वाष्पाच्छन्ना शालेति भावोमनसि पदं करोति, वाष्पश्च वरुणकृति: ।
अतस्तेनकृतेन तमसाच्छन्ना सेति ब्रूयते, न च वरुणकृतरात्रितमसा । अन्यच्च सन्ध्यवेला-
यामुपासनार्थमेव स्तोतात्मन: शालामालोकितं द्रष्टुमिच्छति मित्रेण । मित्रोदये
उच्यते प्रातर्वेला कविभि: न च भवति तदानीमन्धकार: ( अमि०४।२)। अत एव
शाला तदानीं रात्रितमसाच्छन्नेति वक्तुं नोत्सहे, न च तदर्थं मित्रो भवति प्रार्थित: ।
तत्र वाष्पाच्छन्नतैव अनुमेया भवति। श्रीसायणाचार्योऽपि चकार महीसनीरहोभ्य
इत्यस्य भावं प्रकाशयन् कथयति यद् अस्तं गच्छन् सूर्यं एव वरुण इति। यतो हि स:
स्वगमनेन रात्रीर्निनयति ( ७,८७[1] ) । एवं वरुणस्य रात्र्याकाशत्वम् आकाशत्वं
वा न सिद्धयति । पाश्चात्यानामाकाशे वरुणबुद्धिं सम्भवतो हैलिकानां ज्यूसदेवो
जनयति। परं निविरोधेन मित्रेण सह सम्बद्धो वरुणो व एवाकाशत्वमर्हतीत्यपि वक्तुं
न शक्यते यतो हि सवित्राद्यो देवा: अप अपि तत्रैव वर्तन्ते, अतस्त: साधर्म्यमस्य
मित्रवन्न्यूनाधिकसम्बन्धो भवितव्य:, तच्च नास्त्येव। अपि चाकाश: स्वयं प्रकाश्यो
नास्ति यद्वरुणो बहुश एव श्रूयते । आ समन्तात् काश्यते प्रकाश्यते ज्योतिर्भिरिति
आकाश:। केचिद् अहुर मज्दे वरुणे च सादृश्यं पश्यन्ति ( ह्विटने:
ज० अ० ओ० सो० ३,३२७) अन्ये च निर्णयं प्रतिपादयन्ति यच्च युक्तियुक्तमेव
( विन्डिश: बो० स्टू०१२२, स्पी०, अ०भा० ३ पृ० ।।।)।

एतन्मतं यन्मित्र: सूर्येण सम्बद्ध: आसीत् तद्विपरीतमेव वरुणो रात्रिदेवता बभूव इत्यपि तर्कसङ्गतं न प्रतिभाति ( ओल्डन०: स्टी० गे० ५०, ६४-५)। तथाहि--मित्रावरुणयोरिव इन्द्राग्नी, इन्द्रा वरुणौ इत्यादयो देवा: अपि परस्परसम्बद्धा: सन्ति। अतएव तेषां स्वरूपविमर्शेऽपीयं धारणाधारभूता भवितव्या, परं तन्न दृश्यतेऽन्यत्र। अन्यच्च- यदि केचिद् विद्वांसो मित्रावरुणयो: वैपरीत्यमेव द्रष्टुमिच्छन्ति तर्हि तै: वक्तव्यं वरुणश्चन्द्र इति श्री ओल्डनबर्गमनुसरन् । परं तमसा जगदाच्छादको वरुण इति वक्तुं न शक्यन्ति ते तदानीम् । यदि च वरुणं रात्रिदेवतेति मत्वा तं रात्रौ तमसा जगदाच्छादक इति स्वीक्रियते तर्हि जायते श्रुतिविरोधो यताम्नायते तस्य ज्योतिर्मयत्वम् ( १।२४[७], ७।८७[६], अथर्व १३।३[१३])। देवा: द्योतनशीला: भवन्ति । तच्च न कथमपि सम्भवति रात्रिदेवे । यदि ग्रहनक्षत्रेषु कमपि वरुणदेवत्वे स्वीक्रियते यद्वा चन्द्रमेव ( समुद्रिय इति श्रुत्वा वरुणम् १, २५[७]) तर्हि ' प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रम् ----, अव सिन्धुं वरुणो द्यौरिव स्थात् , हंसो राजा वरुणश्चक्र एतं दिवि प्रेंखं हिरण्ययं शुभे कम् ( ७, ८६-८७[१] [५-६] ) इत्यादिभिर्वचनै: विरोधो जायते, यच्चानभीष्टमेव । अवनीरहम्य:, वारुणी रात्रि:, स दापा परिगच्छते, एतयोरहोरात्राभिमानिदेवत्वाद् वेति वचनै: वरुणस्य रात्रिदेवत्वमनुमीयते, परं वस्तुतस्तत्र तथा नैवास्ति ( ७।८७[१],८।४१[३], तै०सं० २।१।७।३, तै०ब्रा० १।७।१०[१] )। दिवि सूर्यमदधात् , प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रम् , ---- चक्र एतं दिवि प्रेंखं--- ' इत्येभिर्वाक्यैरस्य सर्वग्रहनक्षत्रव्याप्तता तेषु च द्योतन गतिसम्पादिका उद्वहनशक्तिरूपताभिव्यज्यते ( ५।८५[१],७।८६-८७[६]) । ' एवं यदुइना न धृणन्त्येनीरासिञ्चन्तीरवनय: इत्येतया श्रुत्या (५, ८५[६]) सूर्यशक्तिसम्पादिता बाष्पीकरणक्रियानेन कृतैव भवति । अतस्तत्र विद्यमाना तापशक्ति: वरुणस्यैवास्ति। इह लोके सूर्यशक्तिरेव प्रधाना प्रभावदृष्ट्या , सत्यप्यन्येषां नक्षत्राणां तदपेक्षागुरुतरे ।

## वरुणस्य आदित्यत्वम्

अत एव द्वादशमासेषु एकस्मिन्मासे स्थितिभेदेन सम्वत्सरादौ वरुणतत्त्वप्राधान्ये सति सूर्य एव तत्प्रतीकत्वेन वरुणादित्येत्युच्यते । एवं देशदृष्ट्या

पुराणेषु आषाढ्यां वरुणादित्येति नाम्ना श्रूयते । आषाढस्य प्रथमदिवसे इत्यनेन कविकाव्येन भवति भारते तदानीं मेघागमनम् ।( पूर्वमेघ०२)। अत उचितैवास्य सूर्यस्य वरुणसंज्ञा । " अवनीरहम्य " इत्यादीनां वचनानां प्रतिपादनमपि वरुणादित्येनैव सम्भवति, नान्यैरादित्यैः । अतो यत् आषाढार्यं एव वरुणादित्योपाधिमर्हति नान्यः । तथा हि-- अवनीरहम्यः , वारुणी रात्रिः, इत्यादिभिर्वाक्यैः अतः परं रात्रीणां वृद्धिः विज्ञेया । अन्येषु मासेषु दैर्ध्यसीमां गतासु रात्रिषु आधिवृद्धिजनकत्वात् सा " वारुणीति श्रूयते । अत एवाम्नायते दापालिङ्गनमभिमानित्वं वा । अस्मादेव माषाढ्राद्यो वर्धन्ते दिवसाश्च क्षीयन्त इति विज्ञानसिद्धम् । अथवा वरुणशक्तिभासितसूर्ये गते जनके जायन्ते रात्रयः। कारणप्राबल्यात् यामिनीजनकत्वं वरुणस्य भवति । यद्वा तम इवाच्छादको वरुण इति श्रीसायणस्तैत्तरीये भाष्ये ( तै०ब्रा० २।१[४]।७ )। नार्हत्यनेन कथनेन एवं विधावरकत्वमयं देवो येन सिध्येदस्य रात्रिदेवत्वम् । वस्तुतः मेघैः आकाशमापूर्यान्धकारं जनयन् (तम इव) आच्छादयति विश्वम् ।

( १३,३[१३] ) अत्र अथर्ववेदे स एव वरुणः सायमग्निः भवति । स मित्रो भवति प्रातरुद्यन् । स सविता भूत्वान्तरिक्षेण याति। स इन्द्रो भूत्वा तपति मध्यतो दिवम् । अनया श्रुत्या एकस्यैव सूर्यस्य भिन्नदैनिकस्थितिषु मित्रादिरूपत्वा भिन्ननामानि श्रूयन्ते । द्वादशमासेषु स्थितिभेदेन एकस्यैव सूर्यस्य पुराणेषु यानि द्वादशादित्यनामानि श्रूयन्ते तेषामुत्पत्तिस्थानं यमेवास्ति । अग्निर्भवतीति वचनेनास्य तेजो रात्रौ अग्नौ प्रविशतीति श्रूयते --- तदानीं तस्यैव प्रकाशसाधनत्वात् । अन्यत्र जायमानोऽग्निरेव वरुणः प्रज्वलितश्च मित्र इति श्रूयते (३।५[४],५।३[१])।अत्र तत्तदवस्थां गतमग्निं क्रमशः अनयोः देवयोः गुणैः वर्णितं मन्तव्यम्, न पुनः मित्रावरुणरूप एव । तथा हि----- प्रज्वलनात् प्रागग्निः सर्वाण्धूमेनावृणोति एवान्मतस्तत्र वरुणतत्त्वप्राधान्यात् सो वरुणरूप इति श्रूयते । अनन्तरञ्च प्रज्वलिते सति तापप्रकाशनाभ्यां मित्रत्वं गतोऽयं मित्र इत्युच्यते न तद्रूपत्वात् । गुणानुरूपनामकरणे न काचिदापत्तिः ।

## मित्रस्य आदित्यत्वम्

द्वादशादित्येषु एको मित्रो ज्येष्ठपूर्वं इति श्रूयते ( विष्णु०२,१०,७ )। यद्यपि प्रतिदिनं रविः समानरूपेणैव भूमण्डलस्य जलानि शोषयति उत्कृष्टम् तथापि आर्याणां लाभाय असौ रविरेव भवति--प्रकृष्टतापैः बहुमेघजनकत्वात् । अपि चास्मिन्मासे दिनानि दीर्घतमानि भवन्ति येषु क्रियाशीलाः अधिकाधिककार्याणि कृत्वा कृतकृत्याः भवन्ति, सूर्याय च मित्र इति नाम्ना साधुवादं समर्पयन्ति । पाश्चात्यास्तु स्थूल-दृष्ट्या एनं सूर्यो यद्वा विशेषेण सूर्यसम्बद्धप्रकाशस्य देवतेति मन्यन्ते ( रुपी० डी०पी०पृ० १८३, एग्गर्स ६-१३, ओ० वे० ४८,१६०)। न चलिता तेषां दृष्टिस्तस्य स्थितिभेदे । मैत्रं वा अहः येषा श्रुतिस्तया शेषसम्बत्सरापेक्षया अस्मिन्मासे एव दिवसाः दीर्घतमाः भवन्तीति ज्ञायते ( तै०ब्रा०१।७।१०।१)।

उपर्युक्तेन मित्रावरुणयोः ज्येष्ठाषाढयोः सूर्यत्वं भवति स्पष्टम् । परं सूर्यस्य दैनिकी स्थितिभेदेन उद्यन् मित्रः, अस्तं गच्छन् च वरुणो भवति--यः आत्मनः प्रतीकरूपेण पश्चात् सायमग्निं प्रज्वालयति तमो वारणाय । अत्र अस्तं गच्छन् सूर्ये वरुणत्वारोपणं युक्तमेवास्ति----- तदानीं तत्र दिवादाकृष्टवाष्पराशेः आधिक्यात् । अत्र अस्तं गच्छतो यद्वा आषाढसूर्यस्य वरुणत्वं न बाधते उदजनतत्त्व-स्य वरुणत्वेन------- रूपभेदे तात्त्विकभेदाभावात् । सन्ति तत्र चतुर्विधानि वरुण शरीराणीति वक्तुं शक्यते । तथा हि ---- सूर्यादिषु स्थितमुदजनतत्त्वं भवत्यस्य कारणशरीरम्, रश्मिषु व्याप्तं जलं लिङ्गशरीरम्, वाष्पधूमादिरूपेषु दृश्यादृश्यजलं सूक्ष्मशरीरम्, सरः सरितासागरादीनाञ्च जलं स्थूलशरीरमिति । वैदिकोत्तरसाहित्ये समुद्रो वरुणालय इत्युच्यते ----- सर्वविधमौमिकापां हेतुत्वात् स्वयञ्च अगाधजलराशिमयत्वात् ।

## मित्रपदस्य व्युत्पत्तिः

केचित् पाश्चात्याः " मित्र " इत्यस्य पदस्य व्युत्पत्तिम् अनिश्चितमिति मन्यन्ते ( हिले० ११३-४, एग्गर्स ७०)। परं देवभाषायां नानिश्चिता शब्दव्युत्पत्तिः कस्यापि शब्दस्य, अपितु मतिभेदो विग्रहादिषु भेदाञ्जनयति। तथाहि---- मेद्यति स्निह्यतीति ( मिद् + त्र ) । यद्वा मिनोति मानं करोतीति मित्रः । चराचराणामजीवानाञ्च मानमाकारप्रकारं करोति निर्मातीति मित्रः ।( मि + क्त्र = मित्रः )।

यद्वा प्रमीतेः मृत्योः ज्ञानस्य वा त्रायक इति मित्रः । अस्य योगाभावे सम्भवा जीवस्थितिः ज्ञानस्थितिः वा । अवेस्तायां मिथ्रो नैतिकपदासम्बद्धो विश्वसनीयतायाश्च रक्षकोऽस्ति , मित्रश्च क्वाहुः शान्तिदेवता , बहुशो मित्रार्थे प्रयुक्तश्च वेदेषु अत स्वार्य मूलतः सहायवाचको भविष्यति पुर्याय व्यवहृत इति वदन्ति केचित् प्रतीच्यविद्वांसः ( एग्गर्स: ५३-६; विन्डिशः मिथ्रः; लिपिजिग १८५६; ओल्डनबूव्य०पु० ४६,२४१। २८७ ; बौनेम ८५; वेन्ट० कोशः;ब्रुगेन ७०रि०व्ये०;वाठेनः ली०गे०४ १; ५०३-४; वेबर बी० १७)। परन्तु सहायवाचकं पदं ` मित्रम् ` इति नित्य नपुंसकलिङ्गम् । मित्र इति कृत्वा तन्न पठ्यते ।

## वरुणस्य व्युत्पत्तिः

वरुणपदं पाश्चात्याः बहुशो वृ ( आच्छादने) धातुनिष्पन्नं मन्यन्ते ( हा०: ह० ६६,५७७०; लु० की० शौन्नेः कु० ली० १२,३६४-६; वाठेन०: ली०गे० ४१,५०४; गेल्ड०,वी० ११, ३२६; मैक्ड० विष्ण ४[२] , २३)। परन्तु वर धातुः( चुरादि०, उभ० सक०) याचने वरणे वा भवति, नाच्छादने--- यस्मात् कारणात् इदं पदं निष्पन्नं मन्यन्ते। एतन्नाम त्वत्र वर वरणार्थे भावनीयः। व्रियते सर्वैः वारयिता[३] इति वरुणः। पापकृतः स्वकीयैः पाशैः आवृणोतीति श्रीसायणीस्य ( १,६६ ) भाष्ये । अथवा तैत्तरीयभाष्ये ( तै०सं० २,१,७ ) तम इवाच्छादको वरुण इत्यपि । अनेनाचार्यकथनेन आच्छादनार्थकात् वृ० धातोः अस्य निष्पत्तिः ज्ञेया भवति । यद्वा ( वृ० + उनन् , भ्वा० पर० सक०)। स्वतेजसा सर्वेषां तेजांसि आवृणोतीति वरुणः अ श्रीहुगमैनमतानुसारं सत्यपि ध्वन्यात्मकावरोधे केचित् भाषाविदो वरुणयूरेनसशब्दयोः साम्यं सर्वथा नास्वीकुर्वन्तीति उक्तं भवति ( हुन्क्ला २।१५४,प्रै० )।

---

## इन्द्र:

### मन्त्रसूक्तसंख्या :

आर्यजनरक्षक:, सततोऽनपच्युतो वृत्रहन्ता, जगत्प्रभु: इन्द्र: ( ३।३४[८-६], ४।१७[४], १०।१०२[१२] ) । ऋग्वेदस्य द्वात्रिंशदुत्तरद्विशतसूक्तेषु अष्टोत्तरत्रिशत-मन्त्रेषु च स्वतन्त्ररूपेण, त्र्यशीत्यधिकत्रिशतमन्त्रेषु च सोमाग्निवरुणादिभि: सह प्रख्यातो दृश्यते सर्वाधिकाश्च अग्निना सह--पञ्चाधिकशतमन्त्रेषु । एतत्तुल्ना साकमन्येषां देवानां मन्त्रसङ्ख्या एवमस्ति वरुण: षाष्टिमन्त्रेषु, वायु: सप्त-विंशतिमन्त्रेषु, सोमो मन्त्राणां त्रिंशत्याम्, एकादशसु बृहस्पति: एतावत्स्वेव च विष्णु: , त्रिषु क्रमश: द्यौ: द्यौ: पूषन् ब्रह्मणस्पतिश्च , एकैके च मन्त्रे वसु: कुत्सपर्वताऽऽदित्याश्च । तदतिरिक्तम् अस्मै अजातशत्रवे ( ६।१८[१२] ) अथर्ववेदे एकपञ्चाशदुत्तराष्टशतमन्त्रा: यजुर्वेदे च त्रिशतमन्त्रा: समर्पिता: सन्ति। सर्वेष्वपि वेदेषु अन्येभ्यो देवेभ्योऽपेक्षाऽधिकास्तीयमिन्द्रस्य मन्त्रसूक्तसंख्या।

### विद्युत्त्वमादित्यत्वञ्च

अस्मिन् विश्वरूपे देवे (३।३८[४]) मानवत्वारोपणमन्येभ्यो देवेभ्योऽधिकं दृश्यते सम्भवत: वर्णनाऽऽधिक्यं वृष्टिशक्तिदेवत्वं वा न कारणं भवितुमर्हति । हवि: स्वीकरणार्थम् अङ्गिराभि: कुशे स्थापितोऽयम् ( ३।३१[१२] ) अन्तरिक्षीयो देवो ( १।५५[२] , नैघण्टुक ५।४ ) भौतिकपर्यवेक्षणदृष्ट्या विद्युद्देवो भवति। घन-श्यामवेश: अर्हन्त्यस्य भवितुं विशालं हरिद्वर्णं शरीरम् ---- शरीरपदो नामकरणस्य अभावत्वात् नाऽत्र कश्चिद्विरोधाभास: ( १०।१०५[६] , अथर्व० २०, ३०[३] ) । परं भारतीयेभ्योऽग्नीन्द्रवरुणादयो देवा: मात्र प्रकृतिप्रतीकरूपा एव, पाश्चात्यानामिव, न सन्ति अपितु योगेन अनुभवगम्यत्वात् देवयोनिषु तेषां शरीरिकी सत्ताप्यस्तीति । एवञ्च भवतीन्द्रोऽदितिकश्यपयो: पुत्रा ( ७।२०[५], ४।१८[४], विष्णु० १।१५[१३१] ) द्वादशा-दित्येषु एक: ।

## पितरौ

देवज्येष्ठस्य ( ८,९३ [६] ) । अस्य यजुर्वेदे ( १६।६४) सरस्वती जननी स्मृता या अश्विभ्यां सह एनं धारयति । प्रजापते: दुहिता एकाष्टकाऽपि महिमानमिन्द्रं जनयति ( अथर्व० ३।१० [१२-१३] ) द्यावापृथिव्यौ अपि बहुश: अस्य पितरौ स्मृतौ ( अथर्व० २०।३४-९२ [१६, १२] ) । अग्नीन्द्रौ ( ३।३६ [७] ) रात्रिगर्भोत्पन्न: प्रकाशधारक: प्रोक्त:। परं बहुधा अदितिरेव अस्य जननी विख्याता वर्तते ( ३।४८ [२], ४।१८ [८], १०।१३४ [१] )। माता दिति इन्द्रं बहून् मासान् बह्वी: शरदश्च गर्भे बभार ( ४,१८ [४] )। सं माता गृष्ट्या उपमीयतेऽस्य प्रथमजातत्वात् । ( ४।१८ [१०], १०।१२० [१] )। एकस्मिन् स्थले इयं 'निष्टिग्री' पदेनाऽपि ( १०,१०१ [१२] ) वाच्या भवति । योनिदेशादनिर्गतोऽयं मातु: पार्श्वं भित्त्वा निर्गच्छति ( ४।१८ [२] ) ।

त्रिभुवना जगदाधिपत्ये स्थापितस्येन्द्रस्य एकत्रैव द्यावापृथिव्यौ देवगणाश्च जनका: उक्ता: ( ३।४९ [१] ) । अन्यत्र गौतम: ( ८। ८८ [४] ), आदित्यगण: (१०।७३ [१०]), मनु: ( ८।१३ [१]), प्रजापति: ( ४।२१ , तै०ब्रा० २।२।१० [१], श०ब्रा० ११,१,६ [१४] ), कुशिक: ( ३।१० [११]) , कश्यपश्च ( ७।२० [५], विष्णु० ३।१५ [१३१] ) जनका: मता:। एतदतिरिक्तं विराट् पुरुषस्य मुखादपि अग्नीन्द्रयोरुत्पत्ति: श्रूयते ( १०।९० [१३] ) । अस्त्या काशो यद्यपि पितृस्थानीय: ( अथर्व० २०।३४ [१६] ) तथापि आकाशोऽस्य पौत्र: प्रोक्त: ( ३।३८ [५] ) । एकदा वृषाकपिना इन्द्रो हरितो मृग:कृत:( अथर्व०२०।१२६ [३])। यज्ञाय पुनरपोऽयं वृषभो ( १,४८ [१], ८,६९ [४] ) नैकश: अग्निरिव सत्पुत्र: ( ४।२४ [१], १०।७३ [१०], यजु: १७।३७)+ कथित: । यतो हि मेघसङ्घट्टनेन भवति विद्युदुत्पत्ति:। तप्ता शत्रू-त्पन्न इन्द्रस्तेषामेव स्वजनकानां जायते शत्रु:( अथर्व २०। १३७ [१०] )। अत्र तप्तावा भानुमानसौ ----- बाष्पीकरणेन तेषु मेघजनकत्वात् ---- भवन्ति विद्युदिन्द्रस्य आदौ जनका: अनन्तरञ्च शरीरै: तेषामेव आवरकत्वात् वृष्ट्या वा तापनाशकत्वात् शत्रु: भवति । पिता प्रजापति उत्कृष्टवेग: स्वबाहुभ्यामिन्द्रमकरोत् ( १।२७ [६] )।

## आविर्भाव:

द्यावापृथिवीभ्यां स्तुत इन्द्रो देव: अश्वान् रथे योजयित्वाऽऽत्मानं त्रिष्वपि लोकेषु प्रकटयति ( ६।३७ [१६] ) । स्तोतगणो यज्ञे पूर्यस्थिकमिन्द्रं जनयति

( ८।९[१०] )। गिरीणामुपह्वरेषु प्रान्ते सरिताञ्च संगमने देवै क्रियमाणया याग-क्रियया पि तत्र तत्र प्रादुर्भवतीन्द्रः ( ८।६[२७] )। तथापि नास्ति कोऽप्यस्य गन्धर्वः। अस्य प्राप्तौ साधनानि पिता मनुना अन्विष्यन्ते ( ८।६३[१] )।

## इन्द्रापुर्णान्द्रे मानवत्वारोपणम्

इन्द्रो मायया इच्छानुरूपं रूपं धत्ते ( ३।५३[८], ८।२१[१] )। आत्मीयैः बहुकल्पैः बहुविधशरीरः सन् एकस्मिन् एव काले बहून् यजमानान् गच्छति ( ६।४७[१८] )। मेघानां कामरूपत्वाद् अनेन- स्थूलदृष्ट्या---- इन्द्रस्य मेघदेहत्वं सिद्ध्यति। काम-रूपत्वादेव सम्भवतः अप्रकटदेहोऽयमिति प्रोक्तः ( १०।५५[२] )। वेदेषु अस्य त्रीणि रूपाणि दृश्यन्ते। ६।४७[१८]। यजुः ८।३६)। अग्निवर्णैः सूर्याग्निवायूनां या त्रयी उक्ता तामिन्द्रः तरणम ( यजुः ८।३६)। अत्र ( ६।४७[१८]) च स्वमहिम्ना तत्तद्रूपो भवति। तत्त्वस्येवम् अनिश्चिते तस्य रूपे मानवोचिताङ्गानां विवरणम् अत्र अन्येषां देवानामपेक्षा बहुस्पष्टं प्राप्यते। तथा हि------

अस्य दौ वृहद्भिरपूर्वाहू[६] वज्रेण तुल्यौ कठिनौ स्तः ( १।८०[८], ७।३४[४], ८,८१[१], अथर्व० १९।१३[६] )। तौ भुजौ कल्याणकारकौ अनायधनयुतौ च स्तः, तत्र वामेन शत्रून् वारयति दक्षिणेन च सादति ( १।५५[८],४।२१[९] )। चिरकालादारभ्य समानस्थानस्थाना:, निरालस्या:, गमनरहिताश्च अङ्गुल्यः कुर्वन्ति इन्द्रसम्बन्धीनि कर्माणि ( १।६२[१०] )। अग्निः वै अस्य जिह्वाऽस्ति ( ३।३५[९-१०] )। अस्य हनुनासिके शोभने स्तः ते च बहुधा सुशिप्रः मदेन व्यञ्जिते भवतः ( १।२९[२], ३।५०[२], अथर्व० २०।४[१] )। सोमपाना-वसरे विवृणोत्यस्यमुपजिह्विके ( १०। १०९[१०] ) एजति चास्य हरितं विवृतम् ( अथर्व० २०।३१[४] ) श्मश्रुस्तथा ( १०।२३[४] -१०५[७] )। हर्यो: बाह्वो: बलेन पर्वतेषु अटन् गाः अन्विष्यति ददाति वा ह्विभ्यरेभ्यः ( ३।३९[५], अथर्व० २०।३१[३] )। चारुनेत्रो ( १०।४७[२], अथर्व २०।८७, यजुः १९।८६[६] ) तौविद्धा इभः इन्द्रः(२।१२[१३],१०।९६[८]) शीर्षाणि धां धत्ते ( २।१७[२] )। उच्चशोभनशिरस्कोऽयमपि कुलयुदरस्कन्ध्युतः

( ८।९७[८], अथर्व २०।४-५-७१[२ २ ३] ) । तत्र उदरं सरोवरेणोपमीयते ( ३।३६[५ ३ ८] )। स्थिर-विस्तीर्णमनरूौ देवदेव इन्द्रः ( १।१०२,५,३६ ) अधोमुखो भूत्वा सागरं पश्यति ( ८।६[२६] )। महान्तावस्य पादौ स्तः ( १०।७३[३] )। केशाः हरिद्वर्णाः सन्ति ( १०।९६[५], अथर्व० २०।३१[३] )। आकाशोऽस्य शीर्षमस्ति ( अथर्व २०,१०६[२] )। अन्तरिक्षे पृष्ठं स्तनयित्नुशब्दं करोति ( ८।६[४०] )। पृथिवीमिन्द्रः ( तस्याः वनस्पतीन् ) शिरोरुहाणामिव, आकाशञ्च मुकुटमिव शिरसि धत्ते ( १।१७३[६] )। नृसमादनोऽयं श्रेष्ठबुद्धि-समन्वितोऽस्ति ( ५।३३[६], अथर्व० २०।६८[७] ) ।

सौन्दर्यसम्पन्नस्य अस्य सम्पूर्णं शरीरं हरिद्वर्णमस्ति ( १०, १०५[६], अथर्व० २०।३०[३] )। कैः अग्रण्यः कृतोऽयं ( १।१३१[१] ) स्वेच्छानुरूपं आत्मनो देहं विस्तारयति ( ८।१२[१२] )। आकारेण आकाशस्पर्शीन्द्रः ( १।२३[२] ) त्रिलोकेभ्योऽपि विशालः उत्कृष्टश्च भवति ( ३।४६[३] )। क्वचिदयं पर्वताकारो भवति ( ४।२०[६] ) क्वचिच्च द्यावापृथिव्योः आकार इन्द्रस्य अर्धांशेन समा ( ६।३०[१] ) एव भवति तथापि तस्य आकारः स्तुतिपरिमितोऽस्ति ( ८। ६८[६] )। द्यावापृथिव्यौ अस्य एकस्यापि पार्श्वस्य समतां न भजेते ( १०।११९[७] )। तस्य एकः पार्श्वः स्वर्गे अपरश्च भूमौ अस्ति ( १०।११९[११] )। द्यावापृथिव्यौ नाऽलमस्य कटिदेशमप्यावेष्टुम् ( १।१७३[६] )। एते द्वे इन्द्रस्य मुष्टिगते भवतः ( ३।३०[५] )। अपि च नाऽर्हत्यस्य समतां भजितुं दशगुणिता पृथिवी ( १,५२[११] )।

एतदतिरिक्तं मृगहस्त्युक्षराहसोऽश्वप्रभृत्यस्य वर्णनमायाति (२।१२[१२], ४।१६[१०,१४], ८।२-६[३६ ३०], अथर्व० २०।१३७-१२६[१३ ३] )। हरितेजो विकराल रूपो वा इन्द्रो बहुशः रूपानुरूपरूपधारकोऽपि अस्ति ( ३।४८[५], ८।२१[२], १०।११२[३], अथर्व २०।३५[१] )। वस्तु, नास्ति कोऽपि इन्द्रेण समा त्रिषु लोकेषु ( ८।६०[५], १०।८९[११] )

अतावात्मानं शरदृतुष्वपि प्रकटयति( अथर्व २०।७५[२] )। पक्षेषु श्येन एनं कान्त्या पूरयति ( यजुः २१।३५ )। कम्भोऽस्मिन् श्रियं, एक देवः, वयो दधुः ( यजुः २१।२६ )। नमुचिः अस्मिन् इन्द्रियसामर्थ्यं दधौ ( यजुः २०।७१ )।

## देवै: रूपपुष्टि:

यजुर्वेदस्य एकोनविंशतितमे अध्याये यज्ञेन्द्रविग्रहवर्णनं विस्तरेण वर्तते ( यजु० १०। ८०-९४)। अश्विनया दर्शोऽस्य रूपमौषधेन पाचयन्ति। शचीभि: सह त्रयो देवा: अश्विनौ च शष्पै: लोमानि, तोक्मभिस्त्वचम्, लाजैश्च मांसं कृतवन्त:। एता एव देवता: मासरै: कारोतरेण च अस्थिमज्जानौ कुर्वन्ति। निर्मीति एषा एव देवत्रयी अस्य पेशलं मधुवर्णं कुवपु:, रूपनार्थञ्च परिस्रुतसुरारसेनापूरितं रोहितम्। अनयैव पयसा नग्नहमपूतञ्च शुक्रम्, सुरया च मूत्रमेतौ जनित:। इन्द्रस्य चिकित्सां कुर्वन् वरुणोऽस्मै शतवलोमानौ प्रकटयति। वायव्यै: पित्तं हृदयपार्श्वौ स्थयश्च कल्पिता:। मधुस्थाली आन्त्राणाम्, सुधा धेनु: पात्राणि च गुदस्य, श्येनपत्रं प्लीहन:, नाभ्युदरयो: आसन्दी, कुम्भी वनिष्ठु:, सदस्य मुखस्य, पवित्रे जिह्वाया:, चष्यं पायो:, वस्तिकीर्यै जननेन्द्रियस्य च सम्पादके बभूवतु:। अश्विभ्यां ग्रहाभ्याममृते चक्षुषी कल्पिते अजादुग्ध ह्लादविषा च तयैव:। गोधूमकुवलै: नेत्रयो: कृतानि पक्ष्माणि ताभ्यामेव। अविमेषौ नासिकायै: बलप्रदौ अभवताम्। ग्रहाभ्यां प्राणस्य पन्था मृतौ बभूव। प्रकटयति यथा इन्दुरै: व्यानं सरस्वती बर्हिश्च बदरै: नस्यानि। कर्णाभ्यां ग्रहाभ्याममृतं श्रोत्रम्, यवबर्हिभि: कुवलराणि, कर्कन्धुना च सारघं वर्तो। तत्र उपस्थलोमानि वृकलोमै: श्मश्रूणि व्याघ्रलोमै:, शिरोरुहाणि च सिंहलोमै: समाचितानि भवन्ति।

## अर्चनद्रव्याणि

इन्द्रे हविर्लक्षणान्यन्नानि उक्थानि च तथैव शोभन्ते यथा सिन्धौ उर्मय: ( ३ ८।१६ २ )। अस्य माध्यन्दिनस्य सवने इन्द्राय दधिधर्मा ख्यं हवि: दीयते ( १०।१७६, ३ अथर्व० ७।७२ २ )। अस्य कृते हविषां सम्पादने उषसोऽपि नियोजनं दृश्यते ( १,५७ ३ )। सरस्वत्या अश्विभ्याञ्च पूजिता: वनस्पतिदेवता: भवन्ति मधुफला-न्विता: इन्द्राय ( यजु: २१।५६ ) अथवा हिरण्यवर्णो मधुशाख: सुपिप्पलो वनस्पति-देव: इन्द्रमवर्धयत् ( यजु: २८।२० )। एतासां नेतुमिन्द्र: पाटां खादति यथा शकन: शुष्ककण्ठा: निरुत्तरास्तत्क्रियन्ते ( अथर्व० २।२७ ४-५ )। स्वसमृद्धये यजमान: इन्द्राय चरुमर्पयति ( अथर्व० २०।७० १२ )। सरस्वतीन्द्रा दिभ्यः कृते सम्पादिते यज्ञे तेभ्योऽर्पिता अजक्षीरगोधूमबदरीकेन्द्रयवमिश्रिता औषधि: या भवतीन्द्राय बलप्रदा ( यजु: १९।३०,३२ )।

(१०।४४[१०]) अत्र यज्ञेष्वेव कुशासनाय इन्द्र आहूतः । इन्द्राण्या प्रेरिताः यष्टारः अस्मै पंचदशसंख्याकान् विंशतिसंख्याकांश्च वृषभान् पचन्ति (१०।८६[१४])। क्वचित्तु शतमहिषाणां (६।१७[११], ८, ७७[१०]) त्रिशतानां वा (५।२९[७-८]) अग्निपक्वं मांसमपि । मरुदादिभिः सह करम्भा पूपकाणार्थं आमन्त्र्यते इन्द्रः (३।५२[७])।

यजुर्वेदे (२८।३, ६) इन्द्रो मरुद्भिर्दिव्यैः सह कुशासनेषु विराजते भजते च तुष्टिं पुष्टिं वा घृतपानेन । अत्र (२८।१६) द्वे देवते एनं दुग्धदानेनवर्धताम् । अग्निः, अनुयाजदेवता, वनस्पतिदेवताश्च पुरोडाशेन एनं वर्धयन्ति (२८।२१-२३, ऋ० ७।३२[८])। यतो आज्यक्षिप्रधान्यसेवनाय अप्यामन्त्रयत इन्द्रः (१।१६[२])। सुराश्च (अथर्व०२०।११४[२])। जलम् (यजुः ३३।१८), मरुद्गणः (१०।७३[१]), वह्निदेवता (यजुः २८।१२), वरुणौ द्यावापृथिव्यौ च (यजुः १६।६। २१।५१, ऋ० ५।३६[५]), सप्तर्षयो देवाश्च (६।२२[२], १०, ११३[१]) एनं मन्त्रैः स्तोत्रैः सामगानैः वा वर्धयन्ति पोषयन्ति च (८।६[३५]-८६[७]) । अपि च वर्धयन्त्येनम् उषसो नक्तो मासाः, शरदश्च (६।३८[४]) । नद्यश्च जलमिव स्तुतय एनमधिगच्छन्ति (१।५२[७]) । युद्धायास्य बलं कुर्वन्ति मानवाः वर्धयन्ति (१।८१[१]) । यथा गावो वत्सान् लिहन्ति तथैव इन्द्रं स्तुतयः (३।४१[५])। हविर्भिः नदीव वर्धमानमिन्द्रं यजमानोऽन्नलाभाय युद्धार्थे उत्साहेन संवर्धयति (२।११[१], ३।३५[११]-३६[६])।(आत्मबलप्रदानेन उशनास्य बलं परिवर्धयति (१।५१[१०])।

अन्येषामिव अस्यापि प्रियपेयपदार्थेषु सोम एव भवति । सोममादितोऽयं वृत्रशत्रुवधकार्येषु आत्मानं योजयति अवाप्नोति च साफल्यम् (२।१५[१], ७।२२[२], ८।८१[६]) आवश्यके सति चोरयति अपि सोममिमम् (३।४८[४], ८।४[४]) । आह्लादकारी, मदसाधनो, वाजी, यस्मात्सोऽयम् अद्रिदुग्धो दशापवित्रेण पूतोऽथवा शार्यणे शोधितो भवति (१।५१[१२]-५४[६], ८।१[१५])। वृत्रवधाय प्राक् इन्द्रस्त्रीणि सरांसि (५।२९[७-८]) पिबति । अति पानेन रुग्णस्य इन्द्रस्य उपचारार्थं देवाः सौत्रामणि यज्ञमतन्वत (यजुः १६।१२) अश्वी प्रणेतारौ हविषा एनमुपचरतः (यजुः २८।७)। बालोऽस्मै वस्तिः क्रियते (यजु१६।८८)। पुरातनो यं पञ्चजनेशः (१।७[६], ६।२२[७], १०।५५[३]) कुष्ठपरुडरुणादिभिः साकं (४।३४[६-७]) चमसस्थ कलशस्थं वा (३।४२[२]-४८[४]) चन्द्रोज्ज्वलं (८।८२[८]) सूर्याग्निवायु-जलशोधितं (२।१४[६], ३।३१[१६]) पीतहरिद्वर्णं (८।१[२३]-२[२], १०।२३[४]) बलवीर्यवर्धकं सोमं (८।३[८]) पिबति । श्येनो गायत्री, अश्विनौ अस्मै सोममाहरतः (३।४३[७], ८, ८२[६], यजुः २०।५९)।

## अजरोऽमरश्च

अस्या द्यौः कोऽपि ज्ञाता नास्ति ( ७।२३[२] )। असौ अमरो जराहीनश्चास्ति ( अथर्व० २०।१२६[११] )। विश्वकर्मणायं देवो जगत्राता अध्यक्षश्च क्रियते ( यजुः ८।४६ )। अष्टावसवोऽस्मिन् वायुः संस्थापयन्ति ( यजुः २१।२३-२५ )। यदायं नवं रथमधिरोहति तदा कुमारक इति पदेन अभिधीयते ( अथर्व २०।९२[१२] )।

## उग्रोऽयं शान्तश्च:

अस्ति यद्यपि इन्द्र उग्रो विकरालो वा तथापि प्रकृत्या शान्तः सौम्यश्च उक्तः ( ३।३१[१६], ८।१-२१[२०], अथर्व०२०।१३७[२] )। पक्वफलशाखेव अस्य वाणी मधुरा सत्यसमन्विता च भवति ( १।८[१३] )। विश्वरूपत्वात् तुल्यपेणायं बहुविध शब्दवान् अस्ति ( ४।१७[२०] )। लोकानुकम्पया इन्द्रो गर्जनलक्षणां वाचं वदति ( ४।२१[५] )। यज्ञमण्डपेऽपि सशब्दमिन्द्रश्च आहूयते ( ८।६४[४] )।

जागरणशीलमिन्द्रम् उषाकाले स्तुतयः प्रबोधयन्ति ( ८।९२[२३], १०,४२[२] )। त्रिवारं दिवसे, रात्रौ च अर्पयन्त्यस्मै जनाः स्तोत्राणि ( ४।१७[१५], ८।१[२६] )। सन्ति सर्वेऽस्यैवोपासकाः ( ८।१[२०] ), ये च अन्यान् देवान् समुपासन्तो भवन्ति ते दण्ड्याः उपेक्षणीया: वा ( ८।१[१] )। स्तुतोऽसौ अन्नलाभाय ( १।५२[३] ) पुत्रादीनां दीर्घजीवनाय ( ३।३६-५३[१०, १८] ), शरदः शतं वा जीवनाय ( ३।३६[१०] )। अस्य स्तुतिकर्तृषु मनुदध्यङ-थर्वाः ( १।८०[१६] ), ऋभुरुक्मरुद्गणाः ( ५।२९-३०[६], ८।३[६], अथर्व०२०।९९[७] ), त्रिमदः ( १०।२४[४] ), प्रियमेधः ( ८।३[१६] ), ऋषिः गौरिवीति ( ५।२९[११] ), मातरः ( ८।१२[१४] ), अङ्गिरसः ( १।६२[२-३], ६।१७[१] ), गोतमभरद्वाजौ च प्रमुखौ स्तः ( १।६२[६], ६।३७[१], १०।२४[४] )।

## यशस्वी

अस्यैव महिम्ना द्यावापृथिव्यौ व्याप्तौ स्तः ( ७।२३[३], अथर्व २०।३५[६] )। पृथिवी तु अस्य महिम्नोऽनुगामिनी अस्ति ( ८।३[१०] )। नवो लोका इन्द्रस्य बलयशोवर्धकाः भवन्ति ( ८।१५[८] )। वरुणेव महिमावानिन्द्रः पृथिव्याः अप्यधिकं महिमान्वितो वर्तते ( १०।६६[१०], यजुः०२३।४८ )। अन्तरिक्षोऽस्य यशगायक उच्यते ( अथर्व०२०।८७-१०६[३, ३] )।

## आवासस्थानानि

दृश्यतेऽस्य ऋग्वेदाद् आवासस्थानभेदः। तथाहि---- अङ्गिरोभिः यजमानैः वा स्वर्गे प्रतिष्ठापितस्य ( ३।३१[१२],८।१००[५] ) अस्य दिव्यलोको द्यावापृथिव्यौ वा (१०।५५[४]-८९[१०], अथर्व२०।७०[५-६] ) प्रमुखावासौ आख्यातौ । सूर्यात्मकेन्द्रश्चन्द्रमसो गृहे रश्मिरूपे विचरते ( अथर्व २०।४१[३] )। सिद्ध्यत्यनेन सूर्येण चन्द्रमसो ज्योतिमत्त्वमिति । तस्मा न्तरिक्षस्थम् एनं जिह्मगाः कृष्णमेघाः आविष्कुर्वन्ति ( ४।१७[१४] )। सन्ति यद्यप्यस्य आवासदेशाः नद्यो निम्नोन्नताश्च भूम्योऽपि ( १०।२८[२], अथर्व २०।७५[३]) तथापि एकदा कर्णेन्द्रियसंस्थापितोऽयं ( यजु: २१।५१) निश्चितस्थानरहितः नरत्व प्रोक्तः ( १०।५५[६] )। अन्यत्र जगद्व्याप्तः ( १।६१[७] ), अन्तरिक्षव्याप्तः (१।५५[२]) त्रिलोकगतः सर्वलोकततो वाऽऽख्यातः ( ३।४६[४], ६।२२[८]) । पर्वतेभ्यः, सूर्यमण्डलाद्, अन्तरिक्षस्य विष्टपाद्वा ध्यागन्तु प्रार्थितोऽयम् ( ८।३४[१३]-९७[५] )। परन्तु सर्वपदार्थततमेनं भुवनौ व्याप्नुवन्ति ( ८।३[१५]-५०[८])। सत्यमेतद् तथापि सर्वमेव परिव्याप्नोतीन्द्रः ( ३।४६[४] )।

## अस्य गतिः

वेगवाननुप्रवेशोऽस्ति जिह्मगस्तथापि वृषाकपेः अपेक्षा वेगेन धावति ( ३।३१[१२], ७।३७[४], अथर्व० २०।१२६[२], यजु: १८।७१ )। स्तोत्रगाने सति गन्धर्वादीन् पञ्चजनान् उल्लङ्घ्य आयाति ( ८।३[२२]२) द्यावापृथिव्योर्मध्ये विरणशील इन्द्रः ( ३।४४[३] )।

## वैविकाः

गावः ( १।१७३[१] ), सरस्वती ( यजु: २०।४३) नक्तोषासौ ( यजु: २८।२६) अस्य वैविके स्तः, दौत्यकर्मे च सरमा नियोजिता दृश्यते ( १०।१०८[२])। अश्विनौ पितृभ्यां समा रक्षा- ौ स्तः यजु: २०।६२,७७)।

## सम्बन्धाः

सौभाग्यवती, पुत्रवती, पृथुजघना ( १०।८६[६,८,१०] ) शची(४।१९[१०]-३०[१७]) अस्य पत्नी कथिता । अस्याः पुनरङ्गल्या नुकैव तिष्ठति ( १०।६६[२]) सर्वत्र ।

ऐतरेय ब्राह्मणे ( ३।२२[७] ) सेनाप्रासहे अपि पत्न्यौ कथिते। ब्लूमफील्डमहाशय एते शच्या सह समीकृते मन्यते ( तै०ब्रा० २।४।२[७-८], मै०सं० ३।८[४], ४।१२[१])। मैकडानल महानुभाव आसुरीमपि इन्द्रस्य पत्नीं स्वीकरोति( वै०मा० अनु०रा०कृ० पृ० १०७) । परमत्र ( अथर्व० ७।३८[२]) अयं शब्द: कृष्णसर्पार्थे प्रयुक्तोऽवगन्तव्यो वशीकरणप्रसङ्गे प्रयुक्तत्वात् । काठके ( इ०स्टू० ३।४७९) विलिस्तेन्गेति नामधेयायां दानव्याम् अनुरक्त इन्द्र: स्त्रीषु स्त्रीत्वं पुंसु पुंस्त्वमापन्नोऽसुरेषु चरितुं स्वेच्छया गत:। पृथ्वी अपि अस्मै पत्नीत्वेन समर्पिता संदृश्यते ( ५।३२[१०] )। नमुचे: स्त्रीरूपा: सेना यद् इन्द्रं प्रहर्तुं समागता तस्या: मध्ये सुरूपे उभे स्त्रियौ अयं स्वगृहे निदधे ( ५।३०[९]) । सम्भवत: ते एव सेनाप्रासहे उक्ते भवतस्तत्र ( ऐ०ब्रा० ३।२२[७] )।

दीप्यमान इन्द्रो मरुद्भि: सह पूर्वोऽस्य पृथ्वी: अजीजनत् ( ३,३१[१५]-३२[८],८।९६[२],१०।१२०[१])। प्रजापतीन्द्रस्य शव: कायात् सप्त सङ्ख्याका: विश्वामित्रादय:, उपरकायदेशात् अष्टसङ्ख्याका: वालखिल्यादय:, पृष्ठतो नवसङ्ख्याका भृगवोऽस्रात्तु दशसङ्ख्याका: अङ्गिरस उत्पन्ना: बभूवु: ( १०।२७[१५] )। वसुक्रपत्न्या: इन्द्र: श्वशुरो भवति ( १०।२८[१] ) वसुक्रस्य पुत्र: । प्रकृतिरस्य दुहिता भवति ( १०।२७[११])। यजमानानां इन्द्रस्तेषां पिताप्यस्ति ( १०।४४[११], अथर्व २०।१०८[२])। आदित्यभ्रातुरस्य ( १०।९९[२] ) अश्विनौ मित्रे स्त: ( १०।७३[४] )।

## सहायका:

अस्य सहायकेषु मरुद्गण:( १।३३[४],१०।९९[२]) प्रमुख उक्त:। एतदतिरिक्तं विष्णु: ( ६।२०[२] ), बृहस्पति: ( ८।९६[१५],१०।१०३[८] ), सूर्य: ( १।३३[८]), पूषन् ( ३।५२), पर्वता: ( ८।३६[६]-७०[११] ), जलम् ( यजु: १।१३) सोमवरुणादिदेवा: ( अथर्व १०।१३[६] ) , देवाश्च ( १०।५५[३] ) प्रमुखा सन्ति ।

## देवाधिपतित्वम्

जायमान एव सर्वलोकप्रकाशक: ( ३।४४[४] ) , दुर्गसागररक्षकश्च (८।१२[२]-२७[१४]) इन्द्र: आदौ कनिष्ठ आसीत् ( ८।६[४१], अथर्व २०।१२६[१]) , अनन्तरं स्वकीयै: महद्भि:

कर्मभि: देवाधिपति: जात: । अङ्गिरसामग्रियं गृहपतिमेनं स्तुतयोऽलङ्कुर्वन्ति (८।९७, अथर्व० २०।४७)। अद्भुतवेशस्य अस्य सज्जा हरिद्वर्णा प्रोक्ता ( ८।१३, अथर्व २०।३०)। वज्रे दक्षिणबाहौ धारयति असुराणां विनाशाय ( २।२७ ) । युद्धाय आयुधसज्जितोऽयं कवचमपि परिधत्ते शिरसि च मुकुटम् ( ८।१७-२१-३३, अथर्व १०। २०) शिरस्त्राणं वा ( ३।३० -३२ )। रथस्थमेनं कवय: सज्जीं कुर्वन्ति ( ३।३८)।

यज्ञे अस्मै सोमपानाय कुशासनं दीयते ( १।१७७, ३।३५ )। यज्ञभूमावयं वस्वादित्यै: सह ( यजु: २०।३६,४२) सूर्येण समागत्या ( १।११० ) । यज्ञे चक्रमिवागच्छति ( ४।३०)। परावरौ, शत्रुमित्रे वा सर्व एव समानरूपेण अस्मै यजन्ते ( २।१२ )। यजमानै: सम्पादिता: कर्मस्तुतय इन्द्रस्य अनन्तरं सूर्यं संगच्छन्ति ( ४।३१)--- अन्तरिक्षाकाशमतिक्रम्यैव तासां सूर्यं प्रति गमनं सम्भवत्वात् ।

## रक्षासाधनानि

पञ्चविंशतीश इन्द्र: पञ्चशो रक्षासाधनै: सज्जितोऽस्ति( ४,३१, अथर्व २०,७०)। मरुतो वै अस्य सैनिका: सन्ति ( ३।३५, ८।४६) । इषुहस्तै: निषङ्गिभिश्च वीरै: परिवृत उग्रधन्वा इन्द्र: शत्रुविध्वातको भवति ( अथर्व० १६।१३) । अस्य केतवो यजमानेभ्य: शुभा इति श्रूयते ( ८।१२ )।

शस्त्रास्त्रेषु वज्र एवास्य प्रियमायुधं स्मृतम्। गिरा वज्रो न संभृत: सबल: ( अथर्व २०। १३७ ) इन्द्रो दीप्तिवन्तं, शब्दकारिणं त्वष्टा निर्मितं वज्रं बिभर्ति( १।३२-३३, ५।३१)। अयं वज्र उशनाप्रदत्त:, स्तोतादत्तो देवदत्तो वाप्यस्ति ( १।१२१-६३, २,११, ऐत्रा० ४।१) । एकदाऽसौ स्वयमपि वज्रं प्रकटयति निरावृतञ्च कृत्वा गोशृङ्गेणेव तं तीक्ष्णयति ( १।१३१, २।१३ )। त्वष्टापि एनं निशितं करोति ( ५।३१ )। अयं हिरण्ययो हरिद्वर्णो वज्रोऽस्थिभि: ( दधीचे:) निर्मितो लौहनिर्मितो वा भवति ( १,५२-८०-८४, ८, ६८, १०, ६६, अथर्व २०।३०) । अयं जलशायी अविनाशी चास्ति ( ८।१००, १०।६६, अथर्व २०।३० ) । नवत्या नदीभि: समा विस्तृतेनानेन इन्द्रो वायुयोगेन युज्यते ( १।८०-१७५)। तेजसा चालितमेनमिन्द्रोऽङ्गिरसां साहाय्येन चालयति ( २।११ )। पूर्वेव

अन्तरिक्षस्थो वज्रः ( अथर्व २०।३०[४] ) आकारेण त्रिकोणः ( १।१२१[४,६] ) चतुष्कोणो ( ४।२२[२] ) , शतपर्वसमन्वितो भवति ( १।८०[६],८।६[६] ), । अयमेव सहस्रभृष्टिः वज्रो वृत्राऽऽदीनामसुराणां विनाशाया एव प्रयुक्ततमो भवति ( १।८०[१२] )।

गदाय अङ्कुशेन शत्रुनाशायेन्द्रः शक्तिं बिभर्ति तया च शाखा कृष्टशाखेव शत्रूनाकृष्य हन्ति ( १०।१३४[६] )। विद्योतमानेन विद्युद्रूपा युधेन सह अयं पृथुफलोत्पादकं यशं संगतो भवति ( १०।९९[२] ) प्रचण्डकोदण्डधरोऽयं सहस्रपर्णः संयुक्तान् हरिन्विभूत निषङ्गे धत्ते ( ८।७७[७], अथर्व १९।१३[४],२०।३०[३] )। मरुत्येन चक्रेण रथचक्रेण वा शत्रुवराज्ञ विंशति राज्ञः विद्रावयतीन्द्रः ( १।५३[९],८।९६[९],१०।७३[९] )। सूर्यरथचक्रोऽप्यनेन आयुधी क्रियते असुराणां विनाशाय ( ५।३१[११] )। जायमान एव इन्द्रः शस्त्राणि गृह्णाति( ८।४५[४] )। अस्य सर्वाणि शस्त्रास्त्राणि हरितानि सन्ति ( ३।४४[४] )। एतदतिरिक्तं मन्त्रैरपि शत्रून् हिनस्तीन्द्रः ( १।३३[६] )। अस्य वृहज्जालमपि शत्रुहत्तुसाधनं जायते। अत्रा सीदन्तरिक्षं जालम् , दिशो जालदण्डाः। अनेनैव अयुतं न्यर्बुदं वा दस्यून् हन्तीन्द्रः। अत्रैव एवं लोकमपि शक्रस्य महज्जालमित्युच्यते। यजमानः इन्द्रजालेन सर्वान् शत्रून् तमसा भिदधाति ( अथर्व ८।८।[५-८] )।

## रथाश्वगजाः

रथाश्वगजाः अस्य वाहनानि सन्ति। तत्र युद्धाय , यज्ञागमनाय वा तेषु अस्य रथो मुख्यतमो वाहनः प्रोक्तम्। एनमश्वयोर्ध्यं रथमृभवो हिरण्येन निर्मान्ति ( ५।३१[४], अथर्व २०।१२[१३] )। हिरण्यबन्धुरं कोशस्पर्शिनमेनं जनाः विकरालोऽभीष्टवर्षकः सुखप्रदश्च कथयन्ति ( १।१७७[३], ३।३५[४], ४।४६[४],६।३१[५] )। वनपूर्णस्य अस्य गतिः अबाधाऽमन्दा च भवति ( २।१६[३],५।३५[५],६।३६[४],८।३३[४] )। सध्वजोऽयं रथः सागराचलेष्वप्यबाधगत्या धावति ( २।११-१६[६,३] )। अस्मिन् रथे हिरण्यकेश्यौ, कामानां सेवकौ, कमनीयपृष्ठभागौ, शीघ्रगमनशीलौ हरिनामकावश्वौ युज्येते ( ३।३५[२,५],८।३२[२९] )। वीतपृष्ठाः, शतकुण्ड्याकाः, सहस्रकुण्ड्याकाः वा अश्वाः अपि इन्द्रम् आवहन्ति ( ६।४७[१८],८।६[४२] )। एते मेघनादाः ( २।११[७] ) अरिनाशकाः (३।४३[६]), वायुरिव वेगवन्तो मनोजवाः वा अश्वाः मनोयुजो मन्त्रयुजो वा सन्ति ( १०।११२[२], १,५१-८२[१०,६], २।१८[३], अथर्व २०,३८[५] )। मरुतोऽप्येतेषां योजकाः स्मृताः (८।१७[२])। यजुर्वेदे

(८।३३-३४) वैदश्वी तयोः योजिता स्मृता ।

अत्र द्वादशाख्याका ऋतवो हेमन्तशिशिरयोः समासेन पञ्च - पञ्च युक्ताः सन्तः कालात्मकमिन्द्रम् आवहन्ति ( ३।५५[१८] ) । उच्चैः श्रवा श्वोऽप्यस्य वाहनत्वं भजते ( अथर्व० २०।१२८[१५] )।

इन्द्रो हरिवर्णयोः द्यावापृथिव्योर्मध्ये आत्मनोऽश्वाभ्यां भूरि भोजनं लभते ( ३।४४[३] )अथवा अस्य अश्वौ अरण्ये यवतृणं खाद लभेते (१०।२३[२]) ।केवलमिन्द्रा श्वाः प्रायो हरिवर्णाः प्रोक्ता ( १०।९६[१] )। अन्यत्र रथयोजितौ तौ श्यामलोहितौ ( १।१००[१६] ), रक्तवर्णौ ८।७०,१०,४७[७, ७]) , बभ्रुवर्णौ वा स्मृतौ (४।३२[२२, २४] ) भवतः । एतौ मयूरलोमपक्ष्मलोमैः युक्तौ रज्जुनिबद्धौ भवतः ( ५।३३[२], अथर्व २०।७३[४], ऋ० ३।४५[१], यजु० २०।५३)। हिरण्यकैरैः शोभिता एते आकाशमार्गेण गच्छन्तः ( १।१६[४],३।४३[६],८।३२[२६] ) सस्वेदाः भवन्ति ( ३।४१[६], अथर्व २०।२३[६] ), प्राप्ते च यज्ञकाले अहोरात्रं रथमावहन्ति ( १।१०४[१] )। मयूर वर्णशिपोस्तयोः पृष्ठौ श्वेतौ स्तः ( ८।१[२५] ) । एतेषामश्वानां निर्माता ऋभवः सन्ति ( १।१११[१], ४।३५[५],५।३१[४] )।

## सारथिः

इन्द्रस्य सारथ्योऽश्वानियमनकुशलाः सन्ति ( १।५५[७] ) । अस्य सारथयो हयान् रथे योजयन्ति ( अथर्व २०।२६-६६[५, १०] )। यदा कदा इन्द्रः स्वयमपि सारथीकर्म करोति ( ५।३३[२], ६।२१[१] )। शुष्णासुरस्य हननकाले कुत्सोऽपि सारथीकर्म स्वीकरोति ( २।१६[६] )। अथर्ववेदे इन्द्रो रथिनां रथीः इति कथितः ( अथर्व० २०।७१[१४] )।

एकनासम इन्द्रस्य गजोऽपि रणक्षेत्रे शत्रून् पादप्रहारैः विनाशयति (१।१३३[२])। तस्य नियमनार्थम् एको दीर्घोऽङ्कुशोऽस्ति येन सोमाभिषवं कुर्वते यजमानाय वसूनि बाहुल्य ददातीन्द्रः ( ८।१७[१०] ) । स्तुतिलक्षणाऽङ्कुशेना पिरेरावतादीन् गजान् पीडयति वयं देवदेव: ( १०।४४[६] )। नास्ति कोऽप्यन्योऽनेन समा अश्ववान् ( १।८४[६] )। अस्य कशा स्वर्णनिर्मिता अस्ति ( ८।३३[११] )।

## कर्मविवेचनम्

अथेन्द्रकर्माणि । कायाभिवर्षकेषु पञ्चदेवेष्वेक इन्द्रः ( १।१०५[१०] )

अपूनामर्णवः (१।५१[१]), वज्रबुधनः (१।५२[३]), शिप्रानरः पुराणश्च (१।५३[२]) अस्ति। लोकहिताय अस्य त्रीणि मुख्यकर्माणि भवन्ति। तथा हि---- वृत्राऽऽदीनां दुष्टासुराणां रणक्षेत्रे वधः, जलवृष्टिः, गवाश्वधनदानञ्च। एतेषामेव कर्मणामस्य सूक्तेषु प्राप्यते बहुशो वर्णनम्। तत्र वृष्टिकर्म बहुधा वृत्रा–दीनां वधेन सम्बद्धं भवति। अत्र तेषां जीवनान्ते भवति प्रायो महती वृष्टिः अथवा गोधनं प्राकाश्यं भजते।

यत्र यजमानेभ्यस्ताः याच्यन्ते भवति तत्र गोवंशवृद्धिः अभीष्टेति (१।८३[१]) तस्याः उद्भूतं वा दुग्धम् (१।५१[३], ५।२६[३])। वृत्रवधप्रकरणे तु गोशब्दस्य प्रयोगः किरणानामर्थे एव प्रायो दृश्यते (१।५१[४]-१७३[१], ६।१७[५])। अत्र (८।५६[४]) गावो गर्जनशीलानां मेघानां प्रतीकत्वमर्हन्ति। अन्यत्र (१।६३[६]-८४[१०-१२]) मेघानामेव, न च वृष्टिजलानाम्, यथा भावयति मैकडानलमहोदयः (वै०मा० अनु०रा०शु० पृ० ११२) एतज्जलन्तु मेघगवां दुग्धं स्मृतम् (१।६२[६]), संस्थापितं यदिन्द्रेण तासु। अत उन्मुक्तगावस्तु (१।१३२[४]) मात्र प्रतीकत्वं भजन्ते न पुनः वृष्टिजलानाम्।

शत्रुभिर्न्यमन्यको वीरपुरन्दरः (१।६१[५], अथर्व ८।८[१]) हस्तपादविहीनस्य जलावरकस्य (१।३२[७]-८०[५]) सानौ, आनने (१।५२[१५]) वा वज्रेण प्रहृत्य व्यच्छिनत् (१।६१[१०])। एकदा (४।१६[८]) वृत्रं हत्वा उग्रसः शरदश्च व्यसृज्य तेना वृताः सिन्धूश्च व्यसृजत्। अपि च एकवारम् एनमसुरम् इन्द्रो द्युलोकादानीय ददाह (१।३३[७])।

मायाविन्, वीरः, सिन्धुमाश्यानो गुहागुह्यो वृत्रो त्रिविधः प्रोक्तः (२।११[५,६], ५।३०[६]) रुदतो बलातश्च (१।३३[४,७])। तथ्यमतः अतिमन्दबिन्दुभिः वर्षन् प्रथममेघो रुदतो वृत्रः (१।३२[४]), तमो रूपश्च (१।३२[५], ३।३१[४], ४।३०[७]) जातो वृत्रो भवत्यत्र। अनुक्ता वृत्राणां संख्या (७।१६[५])। अस्य अनुचराः मणिरत्नाभरणभूषिताः भवन्ति (१।३३[८])। छायाः बिले शयानो वृत्रो जलेषु वृद्धिमधिगच्छति (१।३३[११])। मायया मृगरूपधृतोऽयम् (१।८०[७]) आत्मानममरं मन्यमानो वृष्टिकाले इन्द्रमाक्रामति (२।११[२])। परं हस्तपादहीनो भूत्वा अपगतासुः वृत्रो यदा भूमौ पतति तदा तस्योपरि इन्द्रहता तस्य माता अपि पतति (१।३२[९])।

अद्भिः विरचितशरीरस्य (वाष्पविरचितदेहस्य) अस्य वृष्टिकर्म एव वृत्ति श्रूयते (१।३२[६,१०])। अस्ति तापमयी विद्युत् तापोत्पन्नस्य प्रथममेवास्यो वृत्रः। अभेदः सर्वत्र तापेषु। अतो युक्तियुक्तमेव साधु यदुच्यते वृत्रमाता विद्युत्। सैव वृत्रवधस्योपरि तिर्यग्भूत्वा पतति--३---- वृष्टिकाले एव विद्युत्सातत्यात् जलेषु च अन्तर्लीनत्वात्। तमो वृद्धस्य अस्य क्रोधाज्जायते शुष्णः (५।३२[४,५])।

अनेन प्रयुक्तानि विद्युदादीनि अस्त्राणि इन्द्रं प्राप्तुमशक्तानि भवन्ति (१।३२[१३]-८०[१३])। गर्जन्तं वृत्रमपादहस्तं कृत्वा (१।३०[८]) घनेभ्यो हन्ति पर्वतेषु (१।५१[४])। अनेन सार्धं युद्धे सदाधिकारी मरुतो हैनं नाजहुः (ऐत्रा० ३। २०, ऋ० १।५१[२])। चित्ततमोऽयम् अक्रुकोऽपि भूत्वा दुर्धर्षत्वात् (४।१६[१८], ६।३८[१],७,२०[३]) शुष्णशम्बरौ दैत्योपकपिप्रुथा दीन् असुरान् हन्ति (१।५४[४], २।११[२०], ३।३०[१८],५।३४[२])। पिप्रुशुष्णनमुचयः (१।५१-५३[५ ७,८]), करञ्जपर्णयौ (१।५३[८]), , अतिथिग्वप्रभृत्युपनाचाः (१,१०१[२]-१७४[७]) क्रिव्यश्नमृगयाः (२।१७[६]-२०[५],४।१६[१३]), अह्युरणरौहिणकुयवविश्वरूपाः (१।१०३[२,८], २।१४[४]-११[१९],४।१६[१२]), तुग्रवर्चिनववास्त्याऽऽख्याऽसुराः अप्यनेनैव निष्प्राणाः क्रियन्ते। २।१४[६], ४।३०[१५,१८] ६।२०[११]-२६[४])। एतेषु कुलितरः शम्बर एव प्रमुखतां भजते (४।३०[१४])। उक्तान्यस्य शतपुराणि (६।३१[४],७।१९[५])। पुरभेदनसमये विद्धोनः इन्द्रो गिरेः सकाशात् बलादाकृष्य हतवान् (१।१३०[७])। चत्वारिंशद्वर्षाणि अयं शम्बरः पर्वतेषु अटति भूत्वा प्राक् (अथर्व० २०।३४[११])।

दैत्यानां पुरसङ्ख्या प्रायो नवतिः नवतिः, नवनवतिः, शतं वा कथ्यते (२।१४[६]-१९[६],८।१७[१४]-८७[६])। एते गतिशीलाः, शारदीयाः (८।१[२८],१।१३१[४]-१७४[२],६।२०[१०]) पुरः धातुनिर्मिताः, पाषाणनिर्मिताः वा सन्ति (२।२०[८],४।३०[२०])।

पुरुषकुत्सतुर्वशतुर्वीतिविमदविवोदासा दिभ्यो धनानि प्रदातुम् एतान् असुरान् इन्द्रो हन्ति (१।६३[७]-५१[३]-५४[६],२।१३[१२],४।२६[३])। युद्धे नवनवत्युत्तरषष्टिसहस्रैः अनुचरैः परिवृतान् विंशति सङ्ख्यकान् राजचक्रेण इन्द्रोऽजैषीत् (१।५३[९])। एकदा सेनानां सार्धं तमपि अभिगम्य विनाशयति (१।१३३[४])। दधीचेः अस्थिभिः प्रतिकूलशब्दरहितः इन्द्रो दशोत्तरा ष्टशतसङ्ख्याकाः वृत्राणि जघान (-१।८४[१३])। वराहवत् वृत्रहन्ता सौ तस्य असुरस्य जठरगतं मेघं निम्नभू प्रदेशेषु अभिगमयति (१।५४[१०]-१२१[११] )[६] अथवा महान्तं मेघं वज्रेण शकली करोति, आवृतास्य अपः सरणाय अवसृजते (१।५७)।

वृत्रवधकर्षकः ( १।१३०[४]) ज्योतिषा वज्रेण मेघावृतकानि निःशेषेण दुग्धवान् (१।३३[१०])। श्मावन्तं सुजिर्णं वा मेघं सूर्यात्मकेन्द्रो रश्मिभिः विदारयति ( ८,६४[५],अथर्व०२०,३८[६] )। इन्द्राग्नी व्याघ्र श्येन्द्रः पुराऽऽस्मशवता अविध्यं प्रति आवृतानि भ्रतानि मुणीव वाचद्भिरर्भिः अयं न पूर्वले एव ( १।७४[६],८।३[१०]-५५[१])। धरणीवक्षं दुग्धं स्वता संपिष्ट्य इन्द्रो मेघानां फलानमेत्तीव ( ४।१६[४]) ,इमाभ्या - न्नोऽर्धकेन पूरितवान् ( ४।१६[६], अथर्व २०।१२४[५])। अपां नरुको मघवा एव(३।३१[१६]-३८[५]) मेघेषु अग्निं ( विद्युतं ) जनयति ( २।१२[३]) । अस्माद् भीताः मेघा उदकानि व्यावयन्ते ( ६।३१[१]) ।

अन्नोत्पादिन्यो नद्यो स्निग्धशीता एव वहन्ति ( ४।१९[७]-२२[६])। जनेन प्रवाहिताः नद्यो दायं धनं[१] सम्पादयन्ति ( १,१३०[५]) । अतः एव नदीनां तासाञ्च पथानां निर्माता श्रूयते ( २।१३[५], ४।१९[२])। नदीः तरणीयाः करोति ( ७। १८[५])।

एकवारमेव शतान्यकेता सुक्रतुः जायमान एव सूर्यस्य तेजसा दस्यूनपाकरोति ( १०। १४८[२], यजु:१७।३३)। ऐन्द्रमेरको गोत्रभिदिन्द्रो ( ५।३१[१], ६।१७[२]) बलीवर्द इव, अपनवघट इव वा अरिनाशकः ( ८।१[२], अथर्व ८।४[२१]) रश्मिभिः अरीन् भस्मी[२] करोति ( ८, १२[६])। भूम्या सम वर्धनशील इन्द्रः कृत्रिमाणि असुरसदनानि ओजसा विनाशयति करोति च वृष्टिम् ( १।५६[६])। रणवीरे गर्जतः ( ५।३०[११]) पुरन्दरस्य ( ६।४५[६]-४७[२]) सर्वलौकिकव्याप्तानि रक्षासाधनानि कुशाशरवेव वर्धन्ते ( ५। ३५[२],६।२४[३])। रक्षकं मौलिकं भयप्रदश्च ( अथर्व ८।४,२०।[२४] ~~७७~~ ३७[१] ) शक्रतुः सूर्येण अपि योद्धुं गच्छति ( ८।१[११]) । पापनाशकं व्याधिरक्षकत्वेन समराङ्गणे द्यावापृथिव्यौ[२] रक्षतः ( ६।३७[४],७।२०[१],८।७६[११], अथर्व २०।७६[२])। अथवा अग्निश्च अमरे यजमानाः

---

१ सेचनसाधनत्वेन नदीनां प्रयोगोऽनेन कथनेन सूचितं भवतीति ।

२ विद्युद्रश्मिभिः वायुव्याप्तकीटरक्षसां रोगाणूनाञ्च विनाशो भवति आसीच्च प्रचलिता वैदिकयुगे विद्युच्चिकित्सापद्धतिरपीति ज्ञायते नेन ।

१
जस्य पुरस्तादभिगच्छन्ति देवास्च पश्चात् ( ८।१००)। मायया स्त्रियोऽस्याप्त:
१४ ३
( ८।१४,१०।५५ ),, सर्वकर्मणो भुवे: कोलवदारणाय प्रवृद्धान् पर्वतान् करोति
२ ६
(३।४७, ८।७७) । विस्तारयति च तान् एव विशेषेण ( १।६२)। अपि च पर्वता:
५
जस्य युद्धस्थला: भवन्ति ( ८।४५ )। प्रकुपितान् पर्वतान् चलन्तीन्च महीमिन्द्र एव
२,६ ५ २ २
नियमितवान् ( २।१२- १७, ६।३२, अथर्व २०।३४)।

५ ३०
रात्रिदिवसयो: जनकोऽयं सूर्यसंस्थापक: ( ६,१७,८।१२ , अथर्व० २०,
१६ ६ ६ २ ६
४७-७०) तस्य उद्भासको वा प्रोक्त: ( ८।३-६८, अथर्व २०।६२)। सूर्यमण्डलम्
२ ५ ११
अवरुध्य रोदसी प्रकाशयति ( २।१५ )। सूर्यो स्वा परोधक इन्द्र: ( ५।२६-३१)
१ २ ४ १० ३
सुत्वाप्य तस्के चक्रमपुष्टवान् ( ४।२८-३०,५।२६,६।३१)। लोकान् विस्तारयति
२ ६ ४ ७
( ३।३०,८।३) । सूर्योषसौ जनयति ( २।२१, अथर्व २०,३४) अनन्तान् उग्रपाऽयं
२ ७ १०,११ २ २
पीडयत्यपि (४।२३-३० )। मरुतां विद्युतां वा प्रेरक: ( १०,६६,अथर्व१६।१३)
१२ ३
समुद्रोल्लङ्घनेऽपि समर्थोऽस्ति ( ६।२०)। दायकामिनाशोऽयं यजमानेभ्य: आयूंषि
१ २ १६
ददाति ( अथर्व० ५।२३,७।८४, यजु: २८।२७)। तेभ्यो भवोद्धपल्पोऽसौ( अथर्व २०।९७)
१ ४
स्वर्ग ददाति ( १।५२, ३।३३) अपाकरोति अन्धकारं यजमानान्त:करणानाम्
६ १ ४
(५।३१, ६।३०) । स्वरोचि: विश्वरूपोऽयं ( ३।३८) पशुपालकोऽनन्तधनेशश्च
६ ११ ८
भवति ( १।८१,२।१४,४।२७) । स्वजनेभ्यो गवा स्वधनधान्यै: सार्धम् इन्द्रो
१३ १२ २
यशस्पुष्टिप्रचा दीनां दाता प्यस्ति ( २।११, ६।४६, अथर्व २०।२१,यजु: २०।७२,
३२।१५)। अयाचितोऽप्यमीष्टधनदाता इन्द्रो नष्टपुत्रा दीनां प्रदानेन तोषयति
१४ १ ५ ५ ३
यजमानान् ( ६।१७-२०, ७।२५,१०।६६, अथर्व २०।९७)गिरिगूढं गोधनं प्रकाश्य
७ २४ ७
( ३।३१ ) इन्द्रदेवस्ता: उन्मोचितवान् ( ६।४५, ७।१८)।

लोहदुर्गभेदको महिम्ना द्यावापृथिव्यो: विस्तारको वा मनवे देवलोकं
८ ७ ४
प्रति गन्तुं मार्गं करोति ( ३।२०,१०।७३ अथर्व २०।११८)। सूर्यपथप्रशस्तकर्तासौ

---

१ एव शल्यां विद्युतं तस्मै अपहरति वृष्ट्यर्थमित्यर्थ: ।

२ आत्मदर्शनस्ताम् अपगमयतीति भाव: ।

३ सूर्येन्द्रौ रश्मिभि: दायकामिनाशक इति सुप्रसिद्धमेव ।

सप्ततत्त्वनियोजको भवति ( १०।५५-१११) यो रोहिणीमुखमपि वितनोति ( अथर्व० २०।१२८ ) । अपि च यदपीन्द्रो व्याकाशान्तरिक्षाणां धारको ( १।६३, ३।४६, ६।१७) द्यावापृथिव्यौ नक्षत्राणि च स्थिरीकरोति (६। २४, ८।१४, अथर्व २०।२८) रोदसी महोभिः आपूरयति ( ६।४६)।

अस्य कुपिते सति त्वष्टा, चराचरजगत्, द्यावापृथिव्यौ च भीत्या प्रकम्पन्ते ( १।६३,४।१७, अथर्व०२०।३५) । संलग्ने द्यावापृथिव्यौ द्विधा विभक्ते अकरोत् ( १।६२)। भूमिं कृत्वा तां विस्तारयति ( १।१०३,२।१३)। शत्रुवर्गं कुर्वन्त इन्द्रस्य महिमानं रोदसी व्याप्तुम् अशक्ते भवतः ( १।१०)। अनेन प्रेरिताः वायवोऽन्तरिक्षे शब्दायन्ते ( ४।२२)। यस्य चन्द्रस्य कार्याणि आनुषङ्गिकं प्रशस्यानि सन्ति ( २।२२ ) तं यजमानो यशधनसुखशक्तिसन्तत्यर्थम् उपासते ( १।५४-५७ )। स्यन्दनदारुं दृढीकर्तुम् ( ३।५३), जनगोपनतामश्वार्थम्, अश्वायधनप्राप्त्ये, शतायुषे ( अथर्व २०।१२६) ऋषिराजत्वञ्चाधिगन्तुम् अपि एनमर्चन्ति ते ( ३।४३ )।

वर्णिनां रायः दायस्य च पर्यन्तकोऽसुरेभ्यो गवाम् अपहारक इन्द्रः कृष्णानां शासको भवति ( ४।२०) । सर्वांश्च प्रजाः आत्मनो बलमाधाय तेभ्यो मार्गान् सुगमीकरोति ( ५।३२, ८।९३) । अस्य अवक्रिया ये पन्थानः सन्ति तैभिः( तैः) प्राणिजातं प्रेरयन् ( अथर्व ७।५५)। अपि च अकर्मण्यान् जनान् कर्मसु नियोजयति ( २।२०, ६,२२)। पावकनुहीनं परावृत्तैः अश्वैर्न प्रसादात् सदानुकूलः भवति ( २।१५ )। एतशेन स्पर्धमानं सूर्यं बलेना रेचयदिन्द्रः ( २।१९) । शत्रुभया ज्वलमग्नाय शैवैसाय जले स्थित्वा चिरं युयुधे, अरिवंशञ्च ननाश ( १।३३)। यजमानानां विश्वानि एनांसि अपकृत्य तान् पालयति ( १।१२९) । ( १।२९ ) अत्र प्रतिकूलं कुटिलञ्च वायुं वनादप्यधिकं दूरदेशं प्रति प्रेषितुं प्रार्थितोऽयं यजमानैः । यदा यजमानाश्चिन्तिता भवति तदा यजमानं धनान्नैः सार्धं प्रकटयति ( अथर्व २०।९९)। न कदाचिदपि अस्य सता हिंस्यते क्षीयते वा शत्रुभिः ( १०।१५२) । कृतकर्मणोऽस्य ( अथर्व०१९।१३ ) सत्ययुतानि कर्माणि गोमार्गं इव सर्वत्र सञ्चरन्ति (४।२२, ६।२४)।

सत्ययोनेः शितानरस्य तेजसो बलानम् अपोऽपि नाऽऽपुः (१।५२, ४।१९-२०) । पृथ्वीमिह वान्तरिक्षे निदधातुं समर्थ शविष्ठमेनं देवाः सौत्रामण्या

१ यद्यपि व्याप्नुवन्ति आपो रश्मीन् सूर्यात्मकेन्द्रस्य परमशक्तास्ते केन्द्रमधिगन्तुम् ।

गायत्र्यादिभिश्छन्दोभिः तत्वं कुर्वन्ति ( १।८४[१],२०।११६[६], अथर्व० ३।३[२]) ।विश्वकर्मेन्द्र त्रातारमिन्द्रं हविषा वर्धयत् अवध्यं करोति ( यजु: ८।४६)। मरुद्भिश्च तेनाऽऽवनोऽ-स्य बलं मरुतो[१] वर्धयन्ति[३] ( ३।४७, अथर्व २०।७०[३]) । सूर्येण समानो ऽतितेजस्वी असौ स्वतेजसा सर्वाणि तेजांसि अभिभवति ( २।११[४], ३।३७[४], १०।८६[१]) । अश्विनौ, सविता, वरुणो मरुतश्च इन्द्रे इन्द्रियं दधु:( यजु: १०।१२[२], २०।६९-७०[७]) । मार्येरस्ये-न्द्रस्य बलं यजमानस्य हृदयगुहायां, कर्तुं च व्याप्य वर्तते ( ४।२१) ।

## कैश्चिद्गुणा:

अथ सत्येशस्य ( ८।३६[४]) कैश्चिद्गुणा: । इन्द्रो मघवा, विद्वान्, क्रान्तिकर्मा च अस्ति ( ७।१८[२]) । अस्य सदृशो पूर्वेषु न कोऽपि भूतो न वा भविष्यति ( ४।१८[४], यजु: २७।३६)।विश्वस्मादुत्तर इन्द्रो वृत्रवधं कृत्वा ब्रह्मवधेनसा संयुक्तो अनेन उत्सृष्टा: आपश्च फेनरूपेण अस्यैतत् पापं दधते कुर्वन्ति चैनं गतागः ( ४।१८[७], अथर्व०२०।१२६[१])। गिरिभ्रष्टिरिव भ्राजमान: सो मृगमहिषात् पदात् पित्रे मात्रे विभुक्तं पचति ( १।५६[३], अथर्व २०।९२[१२] )। उपजिह्विकाभि: शिथिलीकृतानि वभ्रुव: पुनरस्य पर्वाणि दिशीशेन इन्द्रेण समधीयन्ते । आसीदसौ पूर्वमन्धोऽ-नन्तरं अस्यैव प्रसादात् नेत्रे प्राप्नोति ( ४।१६[६], अथर्व ६,६८[३]) । एवमेव परावृक्णाय ददाति चक्षुपादौ[२] ( १।१५[७] )। अभिश्लेषणद्रव्यात्प्रागेव वस्रुभ्य: सकाशाद्रुधिरनि:स्रवणात् पूर्वमेव सन्धातव्यं तं विच्छिन्नं पुन: संयोजयति ( ८।१[१२])। वाचाऽसौ विवाचं जनं मधुवाचं करोति ( अथर्व २०।७३)। सूचितं मनस्यैनेनास्य देवस्य वै कर्मनैपुण्यम् ।

## महदाकार:

आकारदृष्ट्या कोऽप्यस्य समतां न भजते । शतं शतं द्यावापृथिव्यौ, अष्टरोदसी, सर्वं वा सूर्या: अस्य समताम् अधिगन्तुमशक्ता: दृश्यन्ते ( अथर्व २०।९२[२०])।

---

१ विद्युदिन्द्रस्य बलं मरुद्भि: मेघसङ्घट्टनेन वर्धितमिति सुस्पष्टमेव ।
२ सूच्यतेऽनेन शरीरविद्युद्विज्ञानस्य स्थितिस्तद्युगे ।
३ ज्ञायतेऽनेना युर्वेदस्थिति: ।

कर्माणि दाष्यश्च एनं बाधितुं न शक्नुवन्ति ( ६।३४[३] )। देवेभ्यः कृतानां यज्ञानां रक्षकोऽप्युपगूढम् अग्निं यजमानाय प्रावादीत् ( १०।३२[६] ) । दिवो बृहस्पतिः एनं ~~क्क~~ चमसेन उपानयीत् ( अथर्व० ७।११[३] )। पर्वता द्यावोऽप्यशक्ताः अस्य कर्माणि बाधितुम् । अस्य शब्दात् बधिरोऽपि बिभेति आदित्यश्च प्रकम्पते ( १०।२७[४-५] )। ऋग्वेदस्य त्रिष्टुभ्~~क्के~~ सूक्तेषु ( १०।२७-४८-४९ ) चतुर्षु च मन्त्रेषु ( ४।२६[१-३], ८।३२[२८] ) आत्मशंसको दृश्यते । तत्र च ( ८।३२[२८] ) अन्यत्र: सोमस्य मदे सञ्जाते इन्द्रः सर्वाणि देवेष्वभिवेतति । तथाहि---

महान्तं शत्रुं पादौ गृहीत्वा पर्वते प्रक्षिपति । आत्मना कृतस्य वृत्राऽऽदीनां दुष्टानां वधस्य, वृष्टिकर्मणो गवा स्वयनदानस्य च बहुशः कथनं करोति तत्र - तत्र ( १०।४८-४९[१,३,५] )। अस्य भक्ताः न भवन्ति मृत्युभाजः ( १०।४८[५] )। ऋ (१०।२७[१०-११] )+ अत्र आत्मानं चराचरात्मकस्य विश्वस्य स्रष्टा, महाप्रलये सति जगदादिदृक्षुः प्रकृत्याः आश्रयदाता ज्ञाता वा, एकमात्र वृत्रं प्रति वज्रप्रहर्ता वा कथयति ।

प्लायोगिप्रसङ्गेऽस्मिन् उपदेशवृत्तिरपि दृश्यते । तत्र ( ८।३३[१७-१९] ) यदा सौ पुमान् भूत्वा स्त्रीरूपो भवत् तदा मेध्यातिथये दानं ददाति । तस्मिन् एव अवसरे ताम् ( प्लायोगिम् ( एवम् उपदिशति ---

स्त्रिया मनः अचलत्वात् पुरुषेण शासितुमशक्यं भवति । अपि च स्त्रियाः प्रज्ञां लघुमाह । पुंस्त्वमिच्छन्तं प्लायोगिं स्त्रीधर्ममुपदिशन्--- त्वं स्त्री सत्यधः पश्यस्व। उपरि मा पश्यस्व। एष स्त्रीणां धर्मः । पादावपि संश्लिष्टौ यथा भवतस्तथा हर । अपि च कशप्लकौ पुरुषाः मा पश्यन्तु । अतः सुष्ठु वाससा परिधानं कुरु ।

## नानारूपाणि

### अथेन्द्ररूपाणि -

अस्य अग्न्याख्यं ज्योतिः क्षमायां वर्तते, सूर्याख्यञ्च दिवि ( १।१०३[१] ) । सूर्यात्मकेन्द्रस्य अन्यत्राप्युल्लेखो दृश्यते ( यजुः २०।३६, ३३।३५)। तथाहि --- अयमिन्द्रोऽन्तरिक्षैकदेशात् सूर्यात्मना जायमानस्तुल्यरूपाः कृष्णाः रात्रीः प्रतिदिवसं निवर्तयति ( ६।४७[२१] ) । यजुर्वेदेऽपि ( ८।३६) षोडशीन्द्रः प्रवाहेत्वे त्रीणि ज्योतींषि

वर्णन---- पठनीयः अत्र सूर्याग्निवायवः त्रिलोकव्याप्त्यभिव्यञ्जनार्थमस्य । यजुर्वेदे ( २०।३६) असौ सूर्यरूपेण सर्वदिक्षु प्रकाशक उच्यते । इन्द्रात्मकस्य आदित्यस्य सहस्रसंख्यकाः रश्मयः प्राणिनो नाशयन्तः आकाशे प्रचरन्ति ( ५।४८[३] )। अन्यत्र ईशानो ब्रह्मा वा उक्त इन्द्रः ( अथर्व २०।२[३] ) । अथवा स्वमाहात्म्येनायं तत्तद्देवरूपो भवति । क्वचिदग्निः, क्वचिद्विष्णुः, क्वचिद्रुद्रो वा भवति । मायाभिः पुरुरूपः सन् इन्द्रो बहून् यजमानान् युगपदेव गच्छति ( ६।४७[१८] ) । शत पथब्राह्मणे (१।६।४[१८]) सूर्येण समीकृतोऽयम् एकदा ( २।२६[१] ) आत्मानमेव मनुः, सूर्यः, कक्षीवान् ऋषिश्च कथयति ।

अग्नीन्द्रयोः द्वयोरपि सूर्याग्निवायुरूपत्वम् इत्यत्र नास्ति काचिद्विप्रतिपत्तिः । यथा पञ्चभूतानां संयोगजातेषु शरीरेषु जायते रूपभेदो न पुनः भूतभेदः, अथवा हिमनदीविवाष्पमेघोपलबुद्बुदेषु दृश्यते रूपभेदो न वारिभेदः, तथैव अत्रापि रूपभेदोऽवगन्तव्यः। विद्युद्रूपेन्द्रे अग्नौ वापि रूपभेदः शक्तिभेदो वास्ति न च तत्त्वभेदः । सिद्धा यथाग्नेः सूर्यादिषु व्याप्तिः मान्या तथैव इन्द्रस्यापि । अनेन वैदिकदेवेषु द्वैतबुद्धेः हानिरपि ( अभेदः) सुस्पष्टतया उक्ता भवति। तथा च उक्तम् ----

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः ।। ऋ० १।१६४।४६।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ।। यजुः ३२।१ ।।

अतोऽभेदस्तयोः एकस्य एव अङ्गिनोऽङ्गत्वात् ।

## केषुचिद्विषयेषु पाश्चात्यविचाराः

गैल्डनपिशलौ पाश्चात्यविद्वांसौ ( वे० स्टू० २।२४२-५३, मिथ, रि०ए० रि०१।१८३, २।११३ अनन्तरञ्च २४४) अत्र ( ४।१८[१-२]) इन्द्रं मातुः पार्श्वदेशादुत्पन्न-

मिति मन्यन्ते । परं सायणाचार्योऽस्मिन् सूक्ते इन्द्रादितिवामदेवानां संवाद इति भावयति । अत्र प्रथमे मन्त्रे तु पार्श्वभागादुत्पत्त्युल्लेखो नास्त्येव, द्वितीयेऽपि मन्त्रे च ऽहम्' इकारस्य प्रयोगो निरस्तो करोति एनामुत्पत्तिम्, प्रतिपादयति च वामदेवस्य इन्द्रं प्रति कथनमिति। तत्रैव तृतीये मन्त्रे परायतीं वामदेवस्य मातरं तुराषाडिन्द्रोऽब्रवीत् ( ४।३२[५] ) यदहमनयस्यैव पुराणं पन्थानमनुगच्छानीति । गर्भस्थोऽहं मातुः योनिमार्गादेव बहिरागमिष्यामि वृत्यर्थः। एवमेतैः मन्त्रैः न सिद्ध्यति इन्द्रस्य मातुः पार्श्वदेशादुत्पत्तिः। यदत्र द्वितीयं मन्त्रं मन्यामहे इन्द्रस्य स्वतन्त्रा उक्तिः, तर्हि भवति सत्यमोऽयं पाश्चात्यविचारः । परं सुस्पष्टोऽत्र इन्द्रादीनां सम्वादः, न च सिद्ध्यति कथञ्चिदपि औचित्यं स्वतन्त्रकथनस्य ।

बर्गेनपिशलौ ( ला॰रि॰ वे॰ ३,५८-६२ ,वे॰स्टू॰ १।३४ ) , मैकडानलश्च ( वै॰मा॰ वनु॰रा॰कु॰पृ॰ १०६) यं पितरं सोमाय इन्द्रोऽवधीत् तं ' त्वष्टृ ' मन्यन्ते ( ४।१८[१२] ) । अपि च अत्र ( २।१७[६] ) अस्य वज्रस्य निर्माता एनमेव पितरं कथयन्ति। परन्तु द्वयोरपि कथनयोः सर्वथा तत्त्वाभावो दृश्यते । अस्मिन् मन्त्रे ( ४।१८[१२] ) सोमापकपदस्य तु नामोऽपि नज्ञायते । अतो नैतत् पितृवधकारणम् । न वैयमार्याणां परम्परा तुच्छोदरपूर्त्यै गुरुवधस्वीकरणम् अथवा पित्रा पुत्रां शमदापणम् । अरञ्च त्वष्टा तु आसीदसुरोऽयमिन्द्रो हन्ति ( ३।४८[४] ), असुरत्वात् नैव सोऽर्हति कथमपि देवपतेः पितृपदम् ।

अस्मिन् प्रसङ्गे पितुः आदित्यस्य ~~कुकर~~ वधोऽभीष्टतां भजितुमर्हति तत्त्वैवम् ------

यदेन्द्रो वृष्टिकर्मणि समुद्यतो भवति तदा दित्यो मेघाच्छन्नत्वाददृश्यो जायते। एनमेवात्र ( ४।१८[१२] ) इन्द्रेण पितृवधः कृत इत्युच्यते । अदृश्यत्वाच्च हे रवेस्तदानीम् इन्द्रमाता पृथ्वी विधवा प्रोक्ता। यतो हि आदित्यतापो भूमौ जीववनस्पतीनाम् उत्पत्तिस्थितिहेतुः अतो भवति स एव तस्याः पतिः ।

## दैत्यपुरः
--------

उच्यन्ते बहुधा दैत्यानां पुरो मेघाः यतो हि उत्तास्ते गतिशीला इति ( ८।१[२८] ) । यत्रैते ' अयोमयीः प्रोक्ताः ( २।२०[८] ) तत्र अवर्षणशीलाः

कृष्णमेघाः[२०] अयोध्याः, अथवा मूलाविनाम् असुराणाम् अयोमयीः, पाषाणनिर्मिताः वा (४।३०) भवन्ति पुरः । महायशो मैकडानल: ( वैoभाo अनुo राoकुo११३)। काठको भा ( इंoस्टूo १२।१६१, ए० एलीo २७।१८१), लिमरश्च ( आoलेo४२) शारदीः पदं ( १।१३१-१७४[४], ६।२०[२, १०]) पुरां विशेषणमिति मन्यन्ते, दृश्यतेऽत्र स्पष्टतायाः अभाव इति वेदविषयः। परमत्र सायणाचार्यं एवं पदम् एतदाख्यस्य[१०] असुरस्य पुरा० ( ६।२० ) व्यञ्जकोऽथवा न्यत्र प्राकारपरिखाऽऽदीनां निर्माणैः आसम्वत्सरं दृढीकृतानां पुराणां विशेषणमिति ।

## कामुक इन्द्रः

यत्र तत्र अस्य चरित्रे कामवृत्तिरपि दृश्यते । तथा हि पुराणेषु गुरुतल्पगो गौतमस्य धर्मपत्न्याः अहिल्यायाः सतीत्वनाशकोऽपि भवति । ब्राह्मणेष्वपि कदाचिदेव दृश्यतेऽस्मिन् कामवृत्तिरिति वेबरमतम् ( हिoअoपृo६०३) । श्रीमद्भागवते ऐश्वर्यमदः इन्द्रो गुरुबृहस्पतेः सभायाम् उपस्थिते सति अभिनन्दनं न करोति येनाऽनेनानुभूयते ऐश्वर्यहानिः (६।७।७-८, १८-१६) ।ऋग्वेदेऽपि सूक्तेऽस्य कामवृत्तिः ( ५।३०[६] )। अत्र नमुचिनामकस्य असुरस्य स्त्रीसेनायाः मध्ये तस्य ( असुरस्य) प्रीणयित्र्यौ मुख्ये द्वे स्त्रियौ इन्द्रः स्वगृहमध्ये निदधे इति उक्तं भवति ।

## महत्त्वम्

अन्येषु देवेषु महत्त्वं प्रतिपादयद्भिः पाश्चात्यविद्वद्भिः एतत् स्वीक्रियते यत् ऋग्वैदिककाले एव वरुणस्य महत्ता क्रमशः इन्द्रे प्रतिरोपिता भवति स्म ( रौथः, त्सीoमौo ६।७३, दे पीoकोo ,तुoकीoश्रीo२७, ह्विटने - जoअoओoसोo ३।३२७)। अस्य मतस्य समर्थने प्रस्तूयते वरुणाय सूक्तानामभावो दशमे मण्डल इति । परं निःसारोऽयं मानदण्डो महत्त्वप्रदर्शने । यतो हि वस्तुतः कर्माण्येव महत्त्वप्रतिपादकानि भवन्ति। सुस्पष्टामेव इन्द्रवरुणयोः कर्मभेदः---- इन्द्रो मुख्यतया वृष्टिदेवता अस्ति वरुणश्च जीवकर्मद्रष्टा शासकश्च । यतो हि शासनात् प्राक् प्राणिनां सत्ता वश्यकी भवति या पुनः वृष्ट्यधीना एव । अत एव प्राणिनां

बहुशो वृद्धिसमृद्ध्यर्थं वृष्टिदेवता इन्द्रो वारं वारं प्रार्थित इति । जीवनानन्तरं जीवेषु शासकी व्यवस्था व्यपेक्षिता भवति । अस्याः अभावे विकासो विघ्नात् समाजश्च कष्टाननुभवति। दीर्घकालान्तरे जायते सङ्घर्षः प्राणापचितश्च । परं वृष्टिजलानान्तु पदे पदे अनुभूयते आवश्यकता ---- वनस्पतिभ्यः पानार्थञ्च। अत एवाहूतो बहुश इन्द्रो वृष्टिदेवतेति। शासकस्तु आपत्काले एव प्रार्थ्यते, न च पुनः पुनः । अपि च देवभक्तासु प्रजासु दृश्यते पापवृत्तेः अभाव एव । अतो वैदिकयुगे भक्तिप्रवणासु प्रजासु उच्छृङ्खलतायाः अभावे एव प्रतीयते शासकप्रार्थनाऽभाव इति सम्भवति, प्रार्थनासु च अप्रसङ्गदोषत्वात् । अपि च तयोः कर्मणोः महत्त्व-भेदस्तु भवत्येव, परं यत्र तयोः पूरकत्वगुणो वर्तते तत्र सत्यपि महत्त्वभेदस्य पूरकत्वाद् साम्यमेवाद्वर्तः, अथवा अन्योऽन्याभावे निःसारत्वात् । एवमुक्तं भवति यद् द्वावेव स्वे स्वे स्थाने प्रथमत्वं भजते , न न्यूनाधिको स्तः ।

अनन्तरं पुराणेषु विश्वस्य सृष्टिस्थितिप्रलयकेत्तारो भवन्ति ब्रह्माविष्णु-महेशाः। तत्र इन्द्रो मात्र अदितिकश्यपपुत्रो देवाधिपतिः वृष्टिदेवता भवति । परमत्र सो देवत्रयाणामधीनो स्ति। तथा हि----श्रीमद्भागवते अन्यत्र च नन्दनन्दन इन्द्र-मखस्थाने आत्मपूजां प्रतिपादयति गृह्णाति च । पराजित इन्द्रो याचते क्षमां श्रीकृष्णाय ( भा०स्क० १०अ० २४-२७, ब्र०वै०खं० ४अ०२१)।

## स्वरूपविषये पाश्चात्यविचाराः

ग्रीडरः, आल्डनवर्गः, मैकडानलश्च मन्यन्ते एवं गर्जनदेवता वी०भा० ६।२३०, औ०ब्रे० ३४, सू०१, १३४, वै०या०अनु०रा०कु०१०२)।ईशो देवतेति उच्यते । अतो भवति गर्जनस्य देवता विद्युद् यतो हि सैव तस्य हेतुः। वेदेषु पुनः विद्युदस्य वज्र इति श्रूयते ( ८।१००[६], १०,६६[२]) । परं नात्र कश्चिद् विरोधः । विद्युदस्त्र अत्र वृत्रशुष्णाशम्बरादयोऽसुराः अवर्षकमेघानां प्रतीकाः सन्ति। ते च यजमान प्रार्थितेन्द्रस्य प्रबलाः सन्ति । आत्मा वै प्रबलतमो स्त्रः सर्वेषाम्। अतः प्रबलशत्रवे स एव प्रयोजनीयो भवति। अत्रापि दृश्यते एष एव सत्यः। वृष्टेः प्राग् जायते विद्युद्वर्षकमेघेषु यथा उदधितारो वर्षणशीलाः भवन्ति । विद्युदिन्द्रस्य इयं विद्युदेव वज्ररूपा भवति शत्रूणां कृते । यो देव एकवारमेव बहून् यजमानान् प्रतिपक्षो

व्याप्नोति च चराचरम् ---- विद्युद्रूपेण वर्षितजलमाध्यमेन वा । अवश्यमेव परब्रह्म ( स्वकार्यार्थम् ) जनहिताय असुराणाञ्च विनाशाय तां देवोऽपि विद्युद्रूपिणीं स्वशक्तिम् आत्मनः पृथक्करणे समर्थो भविष्यति । अथवा नास्तिकेभ्यः --- आवश्यके सति स्वशरीरमपि आयुधी क्रियते प्राणिभिः। अतो नात्र विरोधः। विद्युदिन्द्रेण मेघाः वृष्ट्यर्थं घनीभूताः क्रियन्ते इत्याम्नायतेऽपि( ४।१७[२]) । वेदानामयं विरोधाभासः पुराणेषु शाम्यते तत्र दधीच्यस्थिकृतवज्रोऽस्या रूपो भवति (भा० ६।१०[२-१३] )।

अथेन्द्रकर्मसु सामान्यविज्ञानम् --------

१- रक्तासु कृष्णासु गोषु रुशद्दुग्धं संस्थापयति ( १।६२[६] ) । अत्र आमाः गावो परिपक्वमेघानां (वर्षकस्थितिरहितानाम् ) प्रतिनिधित्वं कुर्वन्ति, रक्तकृष्णवर्णाश्च गावस्तद्वर्णानां मेघानाम्। सर्वेषु जलदेषु समानरूपेण श्वेतवर्णा आप एव भवन्ति । अत उच्यते भवन्ति तासु रुशत्पयांसि । सूर्यात्मकत्वादिन्द्रस्य स सत्यमेव उक्तोऽत्र मेघगोषु दुग्धा धायकः ।

२- रविरश्मयो नभसि कम्पन्ते (१।६३[१] ) इत्यनेन सम्भवतः सूर्येऽनुदाणं भाविनो विस्फोटाः व्याख्याताः भवन्ति। विस्फोटैः स्वशक्तिभिः किरणेषु तीव्रता मन्दता वा उत्पाद्यते । आसां क्रियाणां सूर्ये प्रतिक्षणं घटितत्वात् तत्पदार्थस्य च सर्वदैव परिवर्तनशीलत्वात् भवति रश्मिगतिषु तीव्रवेगेन न्यूनता अधिकता वा। एवं प्रतीयतेऽनेन रश्मिषु कम्पनम् । यद्वा रश्मीणां वातावरणे प्रविष्टे सति जायते तेषु वक्रता । केन्द्रस्य पुनः अस्थिरत्वाज्जायते तत्र कम्पनम् ।

३- जलसृष्टा ( १।१६६[८], १०।१११[२] )------ यथा जगत्स्रष्टा स्वकृतिं निर्माय लोकाय विसृजति तथैव इन्द्रोऽपि स्वोद्भूतेभ्यो मेघेभ्यो जलानि वर्षयति । यत्र तौ ( १०।४४[८] ) ईजमानान् गतिशीलाञ्च मेघान् स्तम्भितवान् तत्रेन्द्रस्तान् एव सघनी करोति वृष्टेः प्रागिति अवधार्यः । अत्र ( ६।३२[५] ) इन्द्रो दक्षिणतः उदकानि विसृजति इत्युच्यते । सम्भवतोऽनेन दक्षिणतः उत्तरदेशं प्रति वृष्टेः आगमनमभीष्टम् अस्ति, अथवा दौ वर्षतीन्द्रो दक्षिणदेशेषु अनन्तरञ्च उत्तरा दिक्षु ।

अथवा जायन्ते मेघा: दक्षिणदेशेषु ( विषुवरेखाया: देशेषु) अनन्तरम् उत्तराद्
प्रचलन्ति आगच्छन्ति च वर्षन्ति अतो दक्षिणत उत्तरं प्रति वृष्टे: न्यूनतेत्यपि ज्ञेयो
भवति ।

अत्रैव पं० श्रीराम शर्मा सायणाचार्यस्य ' दक्षिणत: ' पदस्य ' दक्षिणायने '
अर्थे ' सूर्ये सति ' पदे योजयति । परं नैवं सम्भवत्यर्थस्य क्रियासिद्धि: । तत्र
' दक्षिणायने ' पदस्य ' दक्षिणदेशे ' इत्यर्थो न भवति आपत्तिजनक:। यदि स्वीकरोमि
श्री शर्मणोऽर्थम्, तर्हि सूर्ये दक्षिणायने सति भवति द्रविडदेशेष्वेव विशेषरूपेण
वृष्टि: । अत एव तत्रत्य देशेभ्यो भविष्यति अयं मन्त्र: । आपतिष्यत्यनेन मन्त्रार्थे
एकदेशीयतायाः दोषो यश्च सर्वथा परिहार्य एव । यदि अत्र ' सूर्ये दक्षिणायने
सति ' पदानि भवन्तु मेघेषु ईत्यार्थव्यञ्जकानि तर्हि शाम्यते एष: दोषो व्यवहार-
सिद्धत्वात् ।

४- सोमपुष्ट इन्द्रो दिव: सप्तरश्मयोऽजीजनत् ( ४।१६ )[३] --सोमै:
बुद्धि: सम्पुष्टो विद्युदिन्द्रो विद्योतमानो जनयति सप्तवर्णान् कान्तिमिति । सवित-
न्यामपि सप्तवर्णा रश्मयो भवन्तीत्यर्थ: ।

५- द्यावापृथिव्यौ गतिशीले स्त: ( ५।३२ )[६] -----
नाऽऽसन् वैदिकर्षयोऽनभिज्ञा: आकाशे ग्रहनक्षत्राऽऽदीनां
गतीनाम् । पृथ्वी स्थिरेति वैदिकोत्तरी धारणा, दृष्टव्या च अग्निब्राह्मणे ।
आकाशो गतिशील इत्यत्र न ग्रहाऽऽदीनामिव तस्य गतिशीलता अभीष्टा ~~मन्तव्या~~
मन्तव्या अपितु सञ्चरन्ति तत्र ग्रहाऽऽदय: स्वभावतयेति । गतिषु प्राप्यते यत्र
शील: स्वाभाविकतेति गतिशील: ।

६- भूविस्तारक: ( ६।४७ )[४] ---- अत्र वृष्टिकृतभूक्षारणेन जलस्थानेषु
नवभूभागनिर्मिति: सूच्यते तथा च भौगोलिका: विचारयन्ति यत् समतलभूप्रदेशा:
नदीनां कृतय: सन्ति । स्पष्टमभिधीयतेऽनेन यदस्माकं पृथ्वी यथा स्ति ना-
सीत्तथा , न च स्थास्यति। नेयमीश्वरेण यथा दत्तातथा स्ति अपितु तस्य शक्तय:---
जलवायुतापजीवा: ---- परिवर्तयन्ति एनां प्रतिक्षणम् ।

७- पर्वतनिर्माता ( ८।७७[६] ) ---

पर्वताः पृथिव्याः तत्त्वाः न भवन्ति अपितु अनन्तरं प्राकृतिक-शक्तिभिः निर्मीयन्त इति सुस्पष्टमनेन कथनेन । पर्वतरचनाप्रसङ्गः समभूभाग-रचनाप्रसङ्गस्य अनन्तरम् आम्नायते अतः सम्भाव्यतेऽनेनैव यदादौ कृताः समभूभागाः अनन्तरञ्च पर्वता इति । इन्द्रकृता इत्यनेन तापमूला पर्वतानां संरचनेति सूच्यते स च तापमय एव सूर्यात्मकत्वाद् विद्युदात्मकत्वाद्वा । तेजसु एकरूपत्वाद् भूगर्भीयाग्निरपि ऐन्द्रौ शक्यौ माननीयौ यस्योपद्रवाः भवन्ति तेषामुत्पत्तिहेतवः । अप्यनवत्यैतद् वैदिकानां पर्वतनिर्माणप्रक्रियाविज्ञानम् ।

८- पृथ्वीं वर्तमानरूपां स्थिरतां वा ददातीन्द्रः ( ८।१४-८६[५ ५] ) -----

नात्यत्र स्थिरता भूग्रहस्य अनन्ताकाशे गतिहीनतायाः व्यञ्जिका अपितु अतीते यदासीद् पृथ्वी सुतप्ता निर्जीवा च तदानीं तां वर्तमानरूपं प्रदातुं --- शीतलां कर्तुम् --- भवति धारासारैः महतीवृष्टिः तथा च आप्यायिता सा कालान्तरेऽभिगृह्णाति इदं रूपम् । अत्र पृथिव्याः अस्थिरता व्यनक्ति यद् पूर्वजाता सा आदौ परिभ्रमणशीलानां तप्तपदार्थानां पिण्डरूपा सीत्, भाति च वृष्टिर्देवतेन्द्रो व्यञ्जाशनस्या शैत्यप्रदा देवता । एवं तस्याः तप्तद्रव्येषु शनैः शनैः आगता शीतलतापि इन्द्रप्रदत्तैव भवतीति अवबोध्यः । अनन्तरं यदा बभूव वृष्टिः तदा जातं भूकणेषु दृढतरं सङ्गठनम् । अत उच्यते स्थिरीकृतानेन भूमिः। अपि च यत्रासौ सूर्यार्थं चलितां भूमिं दृढीं करोति ( २।१३[५] ) तत्राप्यसौ शैत्यदेवता वृष्टिदेवता वा प्रकृष्टतापैः पूर्वं सन्तप्तावस्थां गताभिमां भूमिमद्भिः क्रमिकशैत्येन च दृढीकरोतीति भावनीयः ।

९- इन्द्र ओजसा द्यां लोकान् वा स्तम्भयति ( ६।३०[३], १०।१२०[७],अथर्व २०।६३[६]) ----

अत्र द्युः शब्दो न भवति आकाशवाचकोऽपितु तत्र सञ्चारिणां ग्रहनक्षत्रादीनामिति। पारस्परिकाऽऽकर्षणशक्तिभिः आकृष्टास्ते तत्र स्थिरतां भजन्ते (एव एव कदापि) ता च तेजसी । निःसीमतेजोमयत्वात् ( ३।३७[४] ), सर्वशक्तिमानत्वाच्च (१।८१-८४[५ १]) स एव भवति तस्याः( आकर्षकशक्त्याः) पतिः( अत उच्यते तेन ओजसा दिवः स्तम्भ्यते । एवमेव यत्रासौ द्यावापृथिव्यौ वियुक्ते यथा भवति

तथा स्तम्भितवान् इत्युच्यते तत्रापि तेजोवाऽऽकर्षणशक्तिकृतं कर्म एव भाव्यम् ( १।६२$^{७}$,१०।५५$^{१}$ )।

१०- विद्युदुत्पत्तिः ( अथर्व २०।३४$^{३}$)------

जायन्ते यदा न्तरिक्षे मेघाः हिमवत् सघनाः, तदा वायुभिः सङ्घट्टिताः तैः मेघैरुत्पाद्यते विद्युदिति । अनेन कथनेन वैदिकयुगस्य समृद्धा न्तरिक्षीयविज्ञानो भवति अनुमेयः ।

## व्युत्पत्तिः

' इन्द्र ' इति शब्दस्य व्युत्पत्तिविषये बेनफे ( ओ० आ० ३।४६), मुईरः ( सं०टे० ५।११६ ), मैकडानलाख्यश्च ( वै०मा०अनु०रा०कु०पृ० १२४) पाश्चात्यविद्वांसः सन्दिग्धाः सन्ति, सम्भवतः कथमयं शब्दो भाषाविज्ञाने स्वविकासेतिहासात् अनुभवन् वर्तमानरूपं गत इत्यस्मिन् विषये अथवा विविधाचार्याणां भिन्नव्युत्पत्तिमतान् वीक्ष्य । अस्य शब्दस्य देवगुणधर्मा नुसारिणीयं व्युत्पत्तिः सम्भवतो युक्तियुक्ता भविष्यति ---- ( इन्द् + र ) यस्योपासना इन्दति ऐश्वर्यं ददाति र रक्षति च ( जलैः जीवान् जीवयति अरिभ्यश्च रक्षति ) जनान् स इन्द्र इत्युच्यते ।

---

विवस्वत्

नानार्थेष्वस्य शब्दस्य प्रयोग:

सूक्ते यद्यपि विवस्वत् शब्दो वेदेषु बहुवारं परं स्वतन्त्रमंत्रसूक्ताभावो विद्यते । अतो देव: सर्वत्र अन्यै: सह एव स्तूयते। अन्यच्चायं शब्दो विविधार्थेषु प्रयुक्तो दृश्यते । तथा हि--- इन्द्रार्थे ( ६।१०।५), यजमानार्थे ( १।४६।१३), ५।११।३ , ६।१४-२६ ), यमार्थे ( ८।६७।२०), मन्वर्थे ( १०।६३।१ ), सूर्यार्थे (८।१।३५, ५३) , देवार्थे ( १०।६५।६), दीप्त्यर्थे ( १।१३९।१), विशेषेणाच्छादयतेत्यर्थे ( १।६६।२), विशिष्टाग्निनायोपेतमित्यर्थे च ( १।४४।१ ) श्री मैकडानलमहोदयस्तु प्राय: सर्वत्र एव एतद् पदं तद्देववाचकं मन्यते परमत्र औचित्याभावो जायते । तथाहि---- अग्निरेवास्य दूतो भवति ( १।५८।१, ४।७।४,८।३९।३,१०।२१।५)। परमत्र ' विवस्वतो ' यजमानस्य अर्थे भवति । यतो हि यजतो जनस्य देवेभ्यो हव्यवाहकोऽग्निरेव भवति नान्य:। वैवस्वते यज्ञेऽपि असावेवाग्नि: तस्मै जनस्य दूतो भवति न च विवस्वान् स्वयम् । मातरिश्वा विवस्वतो वैश्वानरम् अग्निं परावतोऽभरत् । अतोऽयमस्य दूत इति सूक्ते ( ६।८।४) । मातरिश्वनि तापवाहकत्वात् युक्तमेव विवस्वतो दौत्यकर्मविरोपणम्। आदौ विवस्वतोऽग्रे एवाविर्भूताग्नि इत्यत्रापि यजमानार्थे एवास्ति विवस्वान् न पुन: तद्देववाचक:, यथा कथयति श्री मैकडानल: (तत्रैव पृ०७८) । अस्ति यद्यपि विवस्वान् अग्ने: आविर्भाव: अत: एतद्वचनं योग्यतामर्हति, परन्तु अत्र न ।

विवस्वत: सदनस्य श्रुति: पंचवारं वर्तते, यत्र इन्द्रादयो देवा: मदन्ते यद्वा इन्द्रायां प्रशंसाया: घोषो भवति ( १।५३।१, ३।५१।३, १०।१२-७५)। अत्र विवस्वत: सदनो यजमानस्य यज्ञशाला भवति । यत्र अस्माकमृषयो वैज्ञानिकविषयाणां विवेचना देवानां माध्यमेन कुर्वन्ति स्म । तथाहि---( १०।७५।१) अत्र सप्तप्रकाराणां भौतिकान्तरिक्षीयानां विद्यानामप्यापां वर्णनमाम्नायते ।यद्वा तत्र वैवस्वतमण्डले इन्द्रादयो देवा: स्वाशै: नर्तन्ति इति ।

सम्बन्धाः

अदितिकश्यपयोः तनयो विवस्वान् मनुयमाश्विनीकुमाराणां जनकोऽस्ति। तपती अस्य च- तनयेति स्मृतः ( १०।१४-१७ [५ १-२], बाल० ४।१, आदि० ७५। १०, १७१।२६) । अस्य पत्नी त्वष्टुः दुहिता सरण्यू भवति । सावित्री चैव सूर्या च तैव पत्नी विवस्वतः । ७।११८ ( बृहद्देवता- कीथ)। ब्राह्मणादिषु मानवाःवै अस्य एव वंशजाः इति श्रूयते ( शत० ब्रा० ३।१।३।४, तै०सं० ६।५।६।२)।

अथ कर्मनिरूपणम्

विवस्वतो दशाङ्गुलिभिः ( वृष्टिकर्मसु योगप्रदैः दशधारश्मिभिः ) इन्द्रो द्युलोकात् पात्रजलानि अधः पातयति ( तु०की० लुडविगः ऋ० अनु० ४।३८६) । अस्य धियो ( रश्मयः) हरिद्वर्णं सोमं पात्राण्यभिगमनाय प्रेरयन्ति । यद्वास्य बाहोः अंगुलिभिः सोमं प्राहिणोतीति । अस्य नप्तीभिः पौत्रस्थानीयाभिः अंगुलिभिः सोमो मृज्यते ( ६।१४-२६-६६ [५ ४ २] )। आभिः श्रुतिभिः रश्मिचालितैः यन्त्रैः सोम-निष्पीडनं परिमार्जनञ्च सूच्यते । वैवस्वतविस्फोटैः योजनोच्छ्रितः स्तम्भरूपं प्राप्तः तत्पदार्थ एवास्य बाहुरिति कृत्वा पठ्यते । स्तम्भनिःसृताः सबलरश्मयो लतासु सोमरसं वर्धयन्ति इति भावो ज्ञेयोऽत्र ।

विवस्वतोऽहोरात्रे जायेते ( १०।३६ [१२] )। अयं देवो जनान् अभयं प्रयच्छन् पशुवीरैः पुष्णाति। यजमानोऽमृतत्वं याचत एनं देवम् । मृत्युरस्य प्रसादात् पराभव-मनुभवति। जनस्य पुत्रपौत्राः अकालमृत्युं नाप्नुवन्तु इत्येतदर्थं क्वचिदयं प्रार्थितो भवति ( । अथर्व १८।३।६१-६२ )। विवस्वतो बाणो वृद्धावस्थायाः प्राक् मा हिंसीत् इत्यनेन वचनेन अस्य देवस्य पराक्रमणवृत्तिः ज्ञायत इति श्री शर्मन:( वि०लि० पृ०१४८ )।

मार्तण्डस्य कर्माणि एवं श्रूयते -----

भूलोकमधिवसतो विवस्वान् अरीन् ददाह ( वन० ३१५।१६)। यज्ञान्ते कश्यपाय दक्षिणारूपे दक्षिणाशां ददाति ( उद्योग १०६।१)। आदौ श्रीहरिणा कर्मयोगोपदिष्टेन विवस्वता स्वतनयो वैवस्वतमनुः शिक्षितः( भीष्म० २८।१ )।

## विवस्वत आदित्यत्वम्

पुराणेष्वयं भाद्रपदस्य, ज्येष्ठस्य श्रावणमासस्य वा आदित्य इति श्रूयते (वि० पु० २।१०।१०), साम्ब ६।५-८, प्रभास ७।१०१।६२-६५, मत्स्य० ३।४३।१६-२१) विष्णुपुराणानुसारमस्य रथे उग्रसेन गन्धर्वः (उग्रा रश्मिसेना- ज्वरादि-व्याधिजनकत्वात् --- यस्य सः), भृगु ऋषिः (तपसा भृज्यतेऽनेनेति), आपूरणो यक्षः (आ सीमापर्यन्तं वृष्ट्या जलाशयादीन् पूरयतीति), अनुम्लोचाप्सरा (अनुदिवसं म्लानिमालस्यं चोदयति वर्धयति वा), शंखपाल सर्पः (शंखान् पालयतीति), व्याघ्रो राक्षसः (वायुमण्डलस्य अत्युष्णत्वात् हानिकररश्मयो हीनाचारजनात् व्याघ्रः पशून् इवाशु एव जिघ्रन्ति प्राप्नुवन्ति), वर्तते । एवं विविधगुणसम्पन्ना भवन्ति अस्य रश्मय इति भावः ।

## अथस्वरूपविमर्शः (पाश्चात्यमतानुसारी)

पुराकथाशास्त्रीयव्यक्तित्वरूपे विवस्वान् अपि त्रित इव ऋग्वैदिके युगे विलुप्तप्रायः जात इति मन्यते श्रीमैकडानलमहोदयः। परमतः पूर्ववर्तिनि काले एतौ देवौ आर्येषु महत्त्वपूर्णौ इति मत्वा पूजितौ बभूवतुः इत्यस्मिन् विषये किमपि साहित्यिकं प्रमाणं नोपलभ्यते । अत इयं मान्यता कल्पनाधारधारितेति प्रतिप्रतिभाति।

अस्य व्युत्पत्तिजन्यम् अर्थम्, सोमाग्न्याश्विनेभ्यः सहास्य सम्बन्धम्, यज्ञस्थलञ्च अस्य स्थानमिति[1] वीक्ष्य केचित् पाश्चात्याः एनम् उदीयमानसूर्यं[2] इति मन्यन्ते। अन्ये प्रकाशितस्य[3] आकाशस्य देवता यद्वा सूर्यकोश[4] इति मन्यन्ते । अग्निरेव विवस्वान् इति बर्गेनः (१।८८)।

म०म० कुन्ते महोदयः विचारयति यत् विवस्वदस्ति दिवसस्य कर्ता परन्तु एतदपि स्वीकरोति यत् विवस्वादिति अस्ति सामान्य नाम यत् प्रदर्शयति

---

१ फ्राय: कु०स्टी० ३४।२२८, बर्गेन: ल०रि०वे० १।८७।,
२ रौथ: सेण्पी०कोशे परवर्तीदृष्टिकोणः ।
३ लुडविग: ऋ०अनु०३।३३३, ५,३६२, एहनी: यम, १६।२४,
४ ग्री० ६-१०,

भासमानानि वस्तूनि । परमेतादृशे अर्थे इदं पदं क्वचिदपि न श्रूयते। अत इयं मान्यता सन्दिग्धा प्रतिभाति। विल्सनमिल्सयोः विचारः प्रकृतिसम्मत एवास्ति----परिवर्तनिचक्रवदत्वात् ( आर्य०उ० पृ०५६)। श्री म०ह० कपडिया विवस्वन्तं सूर्यप्रतीकं मन्यते, अवेस्तायाः विवन्हवन्तञ्च प्रथमसोमनिर्मातेति( सोम० वालो०पृ०३२) । नैतां मन्यते प्रकाशदेवतेति श्री ओल्डनबर्गः। स तु तां मानवानाम् आदियज्ञकर्त्रीति स्वीकरोति ( ओ०वे० १२२ से०बु०ई० ४६।३६२)। वैदिकसाहित्येषु प्रमाणाभावे इयं विचारधारापि मान्यतां नार्हति।

व्युत्पत्तिः

वि √वस् + क्विप् + मतुप् = विवस्वत् । विशेषेण वस्ते आच्छादयति तेजसेति विवस्वत्। भासमानो रविः 'विवस्वत्' संज्ञया उच्यते इत्यनया व्युत्पत्त्या भवति स्पष्टम् । अस्य आदित्यत्वं यजुर्वेदे श्रूयत एव ---- विवस्वान्नादित्यैष ते सोम -- पीथस्तस्मिन् मत्स्व । (वाज० सं० ८।५, मैत्रा०सं० १।६।१२)। वसत्यदृष्टः सर्वेषु भूतेषु अन्तर्हितश्चेति विवस्वत् ( साम्न० ६।३३)। अनेन वचनेन विवस्वत आदित्यत्वं न बाधते यतो हि शरीरेष्वन्तर्हिता विद्युत् तत्रैवास्ति । असन्दिग्धं विवस्वत् आदित्यत्वं तथापि 'विवस्वत्' इत्यस्य शब्दस्य नानारूपाणि नानार्थेषु वेदेषु श्रूयन्ते । तथाहि---- सूर्यार्थे १८।१,[३५,५३] अथर्व), अग्न्यर्थे ( तूर्णिव्यापकोऽग्निः ऋ० १।१६२।३), इन्द्रार्थे ६।१०।५), यजमानार्थेषु ( ६।१४[५]-२६[४]-६६[८]-६६[?] ), यमार्थे ( ८।६७।२०), मन्वर्थे ( १०।६३।१), धनार्थे ( विशिष्टानिवासापेक्षं धनम् ( १।४४।१), तेजसा विशेषेणाच्छादक इत्यर्थे ( १।६६।२)। परमेतैः अर्थैः अस्य आदित्यत्वं न बाध्यते ।

## पूषादित्यः

### श्रुतिषु स्थितिः स्वरूपादीनाञ्च वर्णनम्

अष्टसूक्तेषु स्वतन्त्ररूपेण द्वयोश्च इन्द्रसोमाभ्यां सह स्तुतः पूषन् वैदिकेषु देवेषु महत्त्वपूर्णं पदमलङ्करोति । असौ वैदिको देवः पुराणेषु आदित्येष्वेको भवति श्रूयते च रणदानस्तुतिप्रसंगेषु प्रायः नाममात्रेण । अस्मिन्

मानवत्वारोपणं तु दक्षिणदशायां दृश्यते । तथाहि--- दुष्टकलनप्रसङ्गे चरणयो: दक्षिणकरस्य च स्थिति: श्रूयते। पूषापिष्टिपुष्कोऽयं कृत्वन्त इत्यपि पठ्यते क्वचित् ([१०] [२] ६।५४-५५, १०।२६।७,४।३०।२४ , तैत्ति० २।६।८।५ ) ।सवितु: प्रसवे पति विद्वान् गोपा पषादेवो विश्वानि भुवनानि प्रकाश्य नमसि याति(१०।१३९। १)। अत स्वायं देवो " विमुचो नपात् " इति श्रूयते च ( ६।५५[१] )। अनेन वचनेन आह्निकादित्येषु सवितु: अनन्तरवर्तिनी पूर्वस्थिति: पूषादित्यनाम्ना ज्ञायते इत्यवगन्तव्य: ।

## सम्बन्धा:

असौ स्वमातु: रात्रे: पति:( यथा पति: आज्ञया पत्नीम् स्थानादपसारयति तथासौ स्वजननीं रात्रिम् आत्मदर्शनेन विगमयति रश्मिरूपाज्ञया ) चन्द्रस्य भ्राता ( आदित्येष्वेकत्वात्), स्वसुरुषसो जारश्चास्ति यतोहि भगिन्या सह तां भुनक्ति( ६।५५।४-५)। अस्यावासो दिवि श्रूयते ( २।४०।४, १०।१७।५)। मनीषी पूषा कर्म्मादाशु प्रतीयति ( ६।५[१]६-५[२]७ ) । चक्रं ने अस्य प्रभुलमस्तं यन्न नश्यति। नास्य कोशो हीयते न च धारा व्यथते ( ६।५४।३) । अत:पूर्णम् अंकुशो हिरण्यपरशु: वापि अस्यायुधतया श्रूयते ( १।४२।६, ६।५[६]३-५[२]८) । जनत्रियं पषाणं रथे निवेश्य अश्वस्थानीया: अजा: वहन्ति ( १।१३८।४, ६।५५।३-४, ६ )। अनया सामान्यगतितेजोमयत्वं सूच्यते पूषादित्यस्य मासाह्निकादित्येषु नाथ रश्मत्वम् । रथीतमस्य रथपते: पूष्णो रथो दर्शनीयोऽस्ति यस्मिन् सुपूर्णोऽच्छिद्रो दधिवृत् [१८] [३] [१] कृति: सर्वदा सर्वदा तिष्ठते । अनयापि पूष्णि शैत्यमुच्यते ( ६।४८-५६,१०।२६-९३)।

## अथ कर्मनिरूपणम्

चिरस्थायिनीं मैत्रीमिच्छन्तो जना: शत्रुभूतजनानां बन्धनाय युद्धेषु च स्वरक्षणाय एनं बहुधा प्रार्थयन्ते ( ६।४८।१६,१८-१९)। यथा उष्ट्रो भारं पारं नयति तथैवायं देवो भटान् रणोदधिपारं प्रापयति । संगरेष्वसौ स्वजनानाम् अग्रयायी भवति । अनेनाऽनुगृहीतो जनो मृधे शत्रून् जित्वा तेषामन्नं भुनक्ति । अस्य पथिका: जना: मार्गेषु अनेन गुप्ता: भवन्ति । अनेन रक्षिता: गावो न तु व्याघ्रादिभि: हिंस्रै: हिंसिता: भवन्ति न च कूपपतनै:। चोरव्याघ्रादिभिरुषिते प्रदेशे स्वजनस्य

गच्छन्तं गोधनं निवारणाय स्वदक्षिणहस्तं परिदधाति । ( १।१३८।२-२, ६।५४।७,१०, यजुः ४।१९) । पशुधनं रक्षन् पूषा जनेभ्यः शिवो भवति ( ८।४।१५,१८)।असौ देवो देवयानं पुण्यवतां कृते धूमयानञ्च दुष्कृतां कृतेऽवति । सुरक्षितास्ते समधिगच्छन्ति स्थानि गन्तव्यानि पदानि इति भावः। स्तुतिभिः अभिमुखीभूतः पूषा प्रतिपथः परिपाति। मृतं स्वजनमसौ उत्तमं लोकं प्रापयति । ( ८।२९।६, १०,१७।३, यजुः ३४।४२)। इलापतिः येन रश्मिना स्व पितृन् प्रेरयति तद्रश्मिं याचते तं जनः ( १।४२।५, ६।५८।४)।

## अभीष्टदाता

वाजकाम धनैः अभिवर्धयन् पूषा नानागन्धशीलयुक्तान् मरुतो निसेवते उत्तरदेशे । पथस्पतिः पूषावाजसातये कर्मणि च प्रायः पूजितो भवति । अदायधन-सम्पन्नं, महतो राधस्य ईशानं सखायं कपर्दिनं याचन्ते जनाः धनानि नियुतानि। विश्वसौभाग्ययुक्तो मघवा पूषा स्तोतृभ्यो धनानि प्रापयति मार्गेषु गच्छद्भ्यो जनेभ्यश्च सर्वोपाधियुक्तं सुपथं येनामी: नवतापसन्तप्ताः न भवन्ति । इन्दुरिव कामानां वर्षको स्पवान् पूषापशुधनादिकं ददाति । पुरुवसुः पूषा

५ १,३ २ ४ १५,१८ १२

स्वजनवाजसातये तादृतमो भवति ।( १।४२।७-८, ६।५०-५३-५५-५८, ८।४-३ १, १०।२६।३ )।अघृणोऽयम् अदित्सन्तं लुब्धञ्च दानाय प्रेरयति । कविः पूषा पणीनां वज्रकठिनानि हृदयानि आरया परिविध्य तानि शिथिली करोति। अपि चैतान् स्वजनवशवर्तिनः कृत्वा तेषु धनं दातव्यमितीच्छां जनयति ( ६।५३।१,३,५-७)। कश्चिज्जनः सर्वेषां याज्ञिकानां भोगविस्ताराय वाजपत्न्यं पूषणमनघां वननीं

६ २

स्वस्तिं याचते ( ६।५६-५८)। अयं देवो भूगर्भे निहितानि धनानि वेत्ति तानि च ज्ञात्वा जनेभ्यो ददाति यथा चौरो धनाय मार्गं रक्षति यद्वा गृह गतानि धनानि ज्ञात्वाहरति ददाति च स्वजनेभ्यः ( ८।२९।६)। अनया तुल्या भूगर्भीयानां खनिजानाम् आदौ पूषणो रश्मिचालितैः यन्त्रैः सर्वेक्षणं कृत्वा पश्चात्तच्चालितैः खनकयन्त्रैः तान् बहिर्निष्कासयन्ति इमेति ज्ञेयः । पोषणाभिमानी पूषा वागात्मकं शब्दं ( स्वशक्तिचालितं सुशब्दप्रसारकं यन्त्रमिति ) ददाति ( १०।५९।७)। गवाश्वयावसां सनित्रीं सुदात्रीञ्च धियं जनोपभोगाय करोति प्रकृष्टबलान्वितः पूषा( ५।४३।९, ६।५३।१०)

अपि चैनं जना: सुखप्रदायकानि अनिष्टानिवारकानि च साधनानि याचन्ते ( यजु: ३४।४२)।

<u>वृष्टिकर्ता</u>

बहुजनहिताय जातो मयोभुः पूषाश्वप्रदोऽस्ति यः सुखमिच्छद्भिः जनैः स्तूयते ( १।१३८।१-२) । जीवकर्मप्रेरका: रक्तकेशा: रश्मयोऽजग्रं प्रजापतां सवितुः ज्योतिषां प्रसवे सति विराट् गोपा पूषा विश्वानि भुवनानि सम्पश्यन् याति ( यजु: १७।५८,का० २।४०।५, ३।६२।६)। परुष्णादित्यस्य हिरण्मयं चक्रं सरः पूषैव प्रेरयति ( ६।५६।३) । अत्र प्रथमदृष्ट उदितो रक्तवर्णो रवि: आह्निकोऽनर्वेण: पूषादित्य इति श्रूयते । सत्पते इन्द्रस्य वृत्रवधकार्येषु मित्ररूपेण साहाय्यं कुरुते अपि चास्यवृष्टिकर्मणि ( ६।५६[२]-५७[३-४] )। शुक्लकृष्णतया नानारूपे अहनी पूष्णो महिम्ना निष्पद्येते ( ६।५८[१])। ~~द्यावापृथिव्यौ: बन्धुं वश~~ अत्र अहनी-त्यनेन पदेन शुक्लकृष्णपक्षायामिन्यौ श्रूयेते यतो हि आदित्या: चन्द्रकला इव: । अजाश्वोऽयं प्रजापतिना विश्वपोषकपदे संस्थापित: तथा च श्रूयते शतपथब्राह्मणे--- इयं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं च ( १४।४।२।२५, १ ६।५८(२)। द्यावापृथिव्यो: बन्धुं वशीकृतं सुष्ठुगच्छन्तं पूषणं देवा: सूर्यायै: अददु: (६।५८[४])। अत्र पूष्ण: आदित्यत्वमुक्तं यत्र पुराणेषु श्रूयते। अत्वतोऽस्य हिरण्मय्यो नाव: समुद्रेऽन्तरिक्षे च सञ्चरन्ति याभिरसौ सूर्यदूत्यां गच्छति ( ६।५८[३])।

अथर्ववेदेऽसौ सुखप्रसवाय प्रार्थितो भवति ( १।११।३)। चिकित्सादौत्रेषु रश्मिप्रयोगो ज्ञायतेऽत्र । पूर्वतापभीता: कृषका: दौत्र कर्षणकर्म विहाय ग्रामं गच्छन्ति अतोऽयं सीतानियामक इति श्रुत:( ४।५७।७)। यज्ञार्हः पूषा स्वजनमती: तीक्ष्णयति सुकर्मसु च नियोजयति ( ७।३८।८,८।४।१६, यजु: ३४।४२)। पूषा चित्रबर्हिषंसोमं दिवो हरति यथारण्यान्नष्टं पशुमाहरति लोक: । अन्यच्चासौ गुहाहितमपगूढं सोमविन्दत् ( १।२३।१३-१४)। अत्र सोमो रात्रौ दिवश्च्युतवाष्पबिन्दु-व्यंजकोऽस्ति । प्रात: ओसबिन्दवो नानातृणाग्रभागस्थिता: दृश्यन्ते। अतश्चित्रबर्हिष: सोम इति श्रुत: । अप्सु गूढा वाष्पराशिरेवात्र गुहा गूढा उक्ता। ताञ्चासौ सुष्ठु विन्दत्येव । पृथिव्यभिमानी पूषा जनपापानि विनाशयति दु:खं विपदीणं तस्करं

वा मार्गादपसारयति (१।४२।१-३)। पोषणाभिमानी पूषा पृथिव्याः माध्यमेनैव अन्नादिभिः पोषयति चराचरम्। अतः नात्र विरोधो माध्यो द्विविधाभिमान्योः। भवनाऽप्युरस्य अनुज्ञया वायु प्रेतं जनं परिपाति स्वयञ्च तत्र स्वर्गे प्रथममेव वर्तमानः पाति। अतो वर्षाः सुखासुखगन्धाख्याः आशाः विजानाति (१०।१७।३-५)। लोकद्वयमार्गेषु ये प्रकृष्टाः सन्ति तत्र तत्र असौ प्रादुर्भवति नरान् कर्मसु योजयितुम्, तथापि द्यावापृथिव्यौ अभिलक्ष्य अभिमुख्येन आचरति (१०।१७।६)। पुंसरौः स्त्रीमात्रस्य च पतिः पूषा विरोचमानस्ताँति प्रकाशोष्माभ्यां विशोध्यति (१०।२६।६)। अत्र ऊर्णाविस्त्रमार्कौ यन्त्रेऽस्य रश्मि प्रयोगो ज्ञायते। अरिभिरहिंस्यं वाजपतिं वनो याचते रथगतिरक्षणार्थमभीष्टपूर्वांशिकम्। अत्र तच्छकिचालितयानविशेषो लोकान्तर-गमनसमर्थो रथेन पश्यते (१०।२६।७,८)।

<u>प्रेतापसारक</u>

पथभ्रष्टानां पथिकानां शरणोऽयं सायं प्रातः देवापितृमार्गेभ्यः स्वांशं स्वयं द्वारेषु गत्वा गृह्णाति (आ० गृ० ३।७।८६, शां श्रौ०२।१४।६,३।४।६)। नष्टवस्तुप्रापणोऽस्मै यजति (आ०गृ०३।७।६)। यत्रायं पशूनां उत्पादक इत्याम्नायते तत्र प्रातः पशवो वनाय गच्छन्तीति। भाव्यः। यज्ञादिस्यो जीवन हेतुरिति (मैत्रा० ४।३।७, तै०ब्रा० १।७।२।४)। यज्ञतुष्टो भगपतिः पूषा न केवलं धनं ददाति अपितु प्रेतान् अपि अपसारयति (का० श्रौ० ५।१३।१, मं० ब्रा० १।२।४, खा०गृ० १।३।२३, आ० गृ० १।७।१४, मा०गृ० १।११।१३)।

<u>स्वरूपमतानि :</u>

कर्मप्रदायहेतोः असौ देवेषु हीनदृष्ट्या दृष्ट इति न तत्त्वम्, यथा चिन्तयति श्री हापकिन्सः (मा०ध०पृ०५१)। पशुपालकवृत्त्यासौ अवेस्तायाः सारेवेस्य मित्रस्य समोऽस्ति (स्पीगेलः डी०पी० १८४)। पूषा गोपालदेव इति श्रीघाटे (त्रृ०पृ० १७७)। मात्र सूर्यदेवोऽयम् इत्यपि भणति तत्रैव सन्देहदोलास्थोऽयं मनीषी। ती० ड्युमेजिलः वान्तारिक्षुरक्षासम्पन्नताप्रदाता गोपालदेव इति मन्यते (डि०ई०पृ०५२)। श्री मैकडानलस्वास्य चरितं वीक्ष्य सूर्यस्य उपकारिणी शक्तिरेव

श्री पूषाख्यग्रामीणदेवरूपे व्यक्तीकृता `कृषिभिरिति भावयति ( तत्रैव पृ०६६)।

व्युत्पत्ति स्वरूपवर्णनञ्च :

पुष् धातोः निष्पन्नत्वात् पोषकदेवत्वमस्य असन्दिग्धमेव । असौ प्रथमदृष्ट उदितो रक्तवर्णो रविरस्ति योऽनेन नाम्ना श्रूयते। अयमाश्विनमासादित्योऽस्ति। मासादित्येषु असौ स्वचरितानुसारं पोषणमासस्य आदित्यो भवति । अस्य रथे गौतमर्षिः ( तापाभावे साधुतमः), वसुरुचिः गन्धर्वः( वसुषु प्रजायते रुचिःयस्य तपति---- क्रियाशीलता वृद्धिं गच्छतीति), घृताची अप्सरा ( क्रियाशीलजनस्य रुचिरूपाप्सरा घृतं धनं ( यथेष्टरूपेण) अञ्चति विन्दति यस्य तपति), सुषेणो यक्षः( सेनास्थानीयाः ओषधयो यस्मिन् काले सुव्यवस्थिताः भवन्ति रोगरक्षसां विनाशाय--- अस्यैव कालस्य उष्णौषधिसेवनयोग्यत्वात् ), धनञ्जयः सर्पः ( क्रूरस्वभावाः सर्पणस्वभावाः जनाः अपि अस्मिन् मासे कर्मकुर्वन्तो धनानि लभन्ते), वातो राक्षसः( रक्षांसिव वायुः अस्मिन् दुःखदायिनी भवति) च वर्तते । एवं विधगुणप्रसारको भवति पूषादित्यः ।



अंशाऽऽदित्यः

स्वरूपविचारः

वेदोक्तादित्येष्वेकोंऽशः । परमसौ तत्र नाम्नैव आम्नायते केषुचिन्मन्त्रेषु मित्रादिभिः सह । एकस्मिन् मन्त्रे अयं देवो धनेश इति श्रूयते । अयं `भगांशदातेति` श्रुत्वा श्री मैकडानलस्तु एनं भगस्य समानार्थीति मन्यते ( तत्रैव पृ०८५) ऋ०(२। १।४) अत्र अग्निरेव अंशादीनां देवानां देवत्वं भजते कीथ एनं `विभाजक` इति मन्यते ( वै०ध० अनु०ख०,पृ०११२) । ए० डेनिक्स महोदयस्य मतानुसारमसौ देवः भ्रमसमरघटनादिभिः प्राप्तस्य अनैतिकधनस्य देवांशस्य प्रतिनिधिः अस्ति यद्वा शासकस्य ( बहु०पृ०१२२ )। अस्य एकमतस्य पुष्ट्यर्थमयं मतिमान् द्वौ मन्त्रौ समुद्धरति ( १।१०२।४, ७।३२। १२)। परमत्र `अंशः`, अंशम् `वा स्वकीयार्थे एवास्ति नांशदेवस्य । न चानेन वचनेन अंशादित्यस्य कोऽपि गुणोऽनुमेयो भवति। अस्मिन् देवेऽयं हीनगुणमसौ पश्यति तत्तु देवे न सम्भवति नरदैत्यदानवेष्वेव सम्भवति । एवं विधगुणे सति ते देवत्वेन पतन्ति गच्छन्ति च अन्ययोनिषु । श्री रौथस्य मतानुसारं निवारमेव अंशो देवतया

श्रूयते ।परं भागार्थस्य अंशशब्द परित्यज्य अन्यत्र अंशशब्दः तक्षवाचक एवास्ति भडाफिनारस ( लौ०ने०६७५,श्री०१६)।

## कर्माणि

एवं वेदेष्वंशो नाम्नैव श्रूयते ।परं पुराणेषु आदित्यानां वर्णनप्रसंगे यत्र तत्र अस्य स्वल्पकर्मविषये केचिच्छब्दाः श्रूयन्ते । तथा हि---- भारतेऽस्य कर्माणि एवं पठ्यन्ते ---- अर्जुनजन्मोत्सवे आगतोंऽशः खाण्डववनदाहप्रसंगे इन्द्रेण सह,शक्तिं गृहीत्वा, युद्धाय आगच्छति । स्कन्दायायं पञ्चपार्षदान् ददाति( आदि०६५।१५, १२३।६६,२२६।३६ शल्य० ४५।३४)।

वेदश्रुतोऽयमादित्यः इति विचार्य श्री ए० डेनियल एवं देवं महत्सु आदित्येषु एक ` इति मन्यते ( तत्रैव पृ०:१३)।

## रथः

अंशादित्यरथे कश्यपर्षिः( कश्यं निर्मलं विशोध्यं वा कं पिबतीति ) तार्क्ष्यो यक्षः( सुगम्याः सन्ति दिवसाः यस्मिन् मासे तस्यायं यक्षः) महापद्मो नागः ( शैत्यप्रभावाद् यस्मिन् तपति पद्मवंशो निःशेषतां गच्छति ), उर्वशी अप्सरा ( स्तोषु दिनेषु कार्यवृत्तिः महतो लोकान् विवशी करोति कार्येभ्य इति), चित्रसेनो गन्धर्वः( यस्मिन् मासे नानावर्णाः वनस्पतयो भवन्ति ।रविरश्मिवर्णपरकाः खलु तासां पुष्पपुष्पादीनां वर्णाः । यतो हि तासु अस्य रश्मिवर्णाः प्रतिफलिताः भवन्ति अत एवं वनस्पतिसेना अंशसेनेत्युच्यते । रश्मयो रविसेनस्थानीया इति प्रसिद्धमेवास्ति । आत्मनो विविधरश्मिसेनाव्यञ्जकत्वादत्र वनस्पतयस्तेन सेनस्थानीयाः कृता इति भावः (), विद्युद्रादासश्च ( शैत्यजाः दुष्टाणवो विशेषेण वर्धन्ते यस्मात् मासादिति ) वर्तते ( विष्णु०२।१०।१३)। अतो मार्गशीर्षमासस्य आदित्योऽस्ति ।

## व्युत्पत्तिः

तेजोमयानि स्वानि अङ्गानि शीर्यन्ते न्यूनीक्रियन्ते येन सोऽशः । यद्वा अंशशः विभागशः यस्य तेजो हीनतां गच्छतीति अंशः। अंश ( विभाजने ) ततो अ = अंशः ।

## भगाऽऽदित्यः

### नानामासादित्यः

ऋग्वेदे भगः त्रिभिः मंत्रैः स्तूयते अन्यत्र अन्यैः देवैः सहैव स्तूयते । अथर्ववेदेऽपि एक एव मन्त्रोऽस्मै श्रूयते । अन्येषु अन्यैः साकं श्रूयते। वेदेषु नायं कस्यापि मासविशेषस्य आदित्य इत्याम्नायते । परन्तु पुराणेषु मतवैविध्यात् भिन्नमासानामधिष्ठातायमादित्य इति श्रूयते। तथा हि--- विष्णु पुराणे पौष-मासस्य, साम्बपद्मपुराणयोः माघस्य, मत्स्ये च भाद्र पदस्य अधिष्ठातेति ( विष्णु० २।१०।१४-१५, साम्ब० ६।५-८, पद्मपु०१।१०।६२-६५ , मत्स्य० ३।४३।१६-२१)। अयमेदो हि जनयति मासभेदमत्र । यैः विद्वद्भिः भजनीयो भग इति स्वीकृतः तैस्तु माघादित्यः, यैः पुनः विलोचनो भग इति स्वीकृतः तैः भाद्रपदस्य पौषस्य वायमिति मतः। यतो हि भाद्रपदे मेघाधिक्यात् प्रायः सूर्यो न दृश्यते पौषे च स्वल्पतेजोमयत्वात् विलोचन इव प्रतिपाद्यते ।

### स्वरूपः

मानवाङ्गारोपणप्रसङ्गे अस्य देवस्य विलोचनत्वमेव आम्नायते । सन्ति यद्यप्यस्मिन् दानरक्षणाद्याः गुणाः तथापि अन्योऽवयवो न श्रूयते । अन्धत्वाद् भगो गतदेशमेव पुनः पुनः याति, स च वृक्षोष्वाह्नित इत्याम्नायते। यतोऽयम् अस्पष्ट-रश्मिसमन्वितो रक्ताभ उदयास्तरविः इति ज्ञायते । ( अथर्व० ६।१२[3]९)।भारतेऽस्य अन्धत्वं रुद्रकृतमिति पठ्यते, परं तत्रैव प्रसन्नेन तेन तस्मै नेत्रे दत्ते इत्यपि श्रूयते ( सौ० १८।१६,२२)। आदिपर्वणि भगः एकादशरुद्रेष्वपि गण्यते (१२२।६९)।

### कर्माणि रक्षको, विधर्ता, दाता च

अथ कर्मनिरूपणम् । यतो पर्वतानां मरुतां च त्राताऽस्ति यतो हि सायं प्रातः मरुतां वेगो मन्दतां भजते शान्ततायां वा भवति । एवमेव च तदानीं नगसानवो हिमाक्रान्ताः भवन्ति, अतस्तेन रक्षितास्ते श्रूयन्ते । एतेषां रक्षकं भगं जनाः तस्य रक्षणानि याचन्ते ( ४।५६।५) । रक्ताभत्वात् प्रतीयमान उग्ररूपोऽदितिपुत्रो

भगो विधर्ता- व्यवस्थापकः --- अस्ति । सायं काले शक्तिसञ्चयार्थं जीवान्
विश्राम गमयित्वा प्रभाते कर्मणि प्रेरयित्वा जगतो व्यवस्था करोति। दरिद्रो जनः
काम्यफलसाधनो भग इति मन्यमानस्तं परिनिषेवते ( २।४१।२, ७।४१।२, अथर्व ३।१६।२)।
क्वचिच्च तत्पराणो भगो भवति प्रार्थितः पुत्रादिभ्यो धनेभ्यः । भगवान् भगो
जनानां कार्यसफलत्वाय तस्य पुरतो गच्छति । धनवितरको भगोऽन्नेनावता सह
गच्छति यज्ञेषु ( ५।४६।६- ४६ , ७।४१।३, अथर्व ३।१६।३)। कर्मणोऽवितारो
भगः स्वयमेव ओषधीः वलवतीः करोति-- स्वरश्मिभिः पुष्णातीत्यर्थः (७।३६।८,
अथर्व ६।१२६।२ )। धनदातायं नारीं प्रजया वर्धयति ( ८।३१।११,अथर्व० १४।१-२ ५, १३ )।
पितरं प्रति गच्छतो पुत्रान् ऋजून् मार्गान् प्रापयति भगोऽर्यमा च (१०।८५।२३)।
उरुगूर्णोऽयं जयशील: आम्नायते । यजमानेन स्तुतो पृथदिवो भगोऽस्य रथं प्रेरयति ।
स्वशक्त्या परिचालयतीति भावः( २।३१।४, ७।४१।२)। तद्रश्मियोगेनैव सर्वे प्राणिनो
वस्तूनि पश्यन्ति । अर्वाचीनमेनं वसुविदं पुण्यवो यज्ञदेशं प्रापयन्ति । अत्र प्रातःकालिको
भगो देवः हूतो । कार्यप्रणेतायं बुद्धिं विशदी करोति, गवाश्वतनयात्मकं धनञ्च
ददाति ( १।१३६।२, ७।४१।६ यजु: ३४।३६)।

<u>तद्विषयक मतानि</u>

पुष्ये नक्षत्रे स्थालीपाकं श्रपयित्वा भगेन्द्रादिभ्यो हूयते ( गो०गृ०७।१।५) ।
उत्तरीयपर्वतक्षेत्रेषु पशुचारणयुगस्य आर्याणां स्थानान्तरणे, पशुपालने, खाद्यान्नसंग्रहे
च सहायको रविः भग इति कथ्यते स्म । स एव सवितृ पशुः वा भवति ( रा०कृ० जैनः
पुरा० आ०पृ०२५५)। इयं मान्यता वेद वचनैः पुष्टिं न भजते, मात्र कल्पनाश्रितास्ति।
अत इयममान्या भवति । अन्ये एनं रचनात्मकानन्दरूपो यद्वा सृष्टानाम् आनन्दभोगीति
मन्यन्ते । अस्याः धारणायाः आधारः ( ५।८२।१) अयं मंत्रोऽस्ति। परमत्र ` भगस्य `
इत्ययं शब्दः ` सवितुः ` विशेषणो भवति, न पुनः ` भग ` इत्यस्य व्याख्यन्तरूपः।
अतो मान्यतां नार्हति । यद्वा मित्रदेवस्य प्राकृशक्तिः अग्निः ` भग ` इति कृत्वा
हूयते ( अव० पुराणी: अरविन्द० वै० कोश पृ०७६८)। श्री ए० डैनियल: एनं देवं
नैतिकधनेशो मन्यते । हिं० वहु० पृ०१२२)। परं मूर्तमन्तं भगादित्यं परित्यज्य अस्य
इतररूपस्य कल्पनानपयुक्तैवास्ति ।

# त्वष्टाऽऽदित्यः

## नानार्थेषु शब्दप्रयोगः

त्वष्टृशब्दस्य नानार्थेषु प्रयोगो दृश्यते वैदिक साहित्ये । तथा हि---
प्रजापतिः ( ४।४२।३, स्क० माहे० के० अध्याय ८५), आदित्यः (१।८४।१५), विश्वकर्मा ( १।६१।६), वायु ( १।६५।२), दीप्त्यर्थे ( १।६५-१६२) , पुत्रः
२,५ १६
( भाग: ३।१६।२५, मत्स्य० १७३।१८), शुक्रतनयः( ब्रा० ३।१।७८।८६,वायु० ६५।७७,८५, विष्णु० १।१५।१२१), मनस्युपुत्रः ( विष्णु० २।१।४०), भौवनपुत्रः ( भाग० ५।१५।१५, वायु० ३३।५६, ब्रा० ०२।१४।७०)। यथा विश्वकर्मणः पदस्य प्रयोगो विशेषणतया मिलति तथैव अस्यापि । तथा हि --- शिल्पत्वष्टरिहागहि विभुः पोषा उतत्मना ( तै०ब्रा० ३।१।११ )। अपि चात्र ( ३।१।३७।३६) स्कन्दपुराणे विश्वकर्मणो विशेषणतयेति। वेदेष्वपि त्वष्टा क्वचिदादित्यरूपे क्वचिद् देवशिल्पीरूपे क्वचिच्च अन्येषु रूपेषु श्रूयते। तेषु कुत्र त्वष्टादित्यः श्रुत इति विचारविषयोऽस्ति । गुणकर्मविवेचनेन अयं अधोलिखितेषु स्थानेषु श्रूयते ------

### रथप्रेरणम्, गर्भविभाजनं वृष्टिप्रकाशनं च -

भुवनेभ्यो देवपत्नीभिःगायत्र्यादिभिश्च सेवितः त्वष्टा देवो रथं स्वशक्त्या प्रेरयति ( २।३१ )। पूर्ववर्णने तच्छक्तिचालितयानानां यंत्राणाञ्च उल्लेखो द्रष्टव्योऽस्मिन् विषये । रममाणः त्वष्टा तारके पोषकञ्च रेतो मोचयति यतो वीरः कर्मठःयुक्तः सोमोऽभिगामको देवकामः पुत्रो जायते ( ३।४।६,७।२।६)। पूर्वस्वरेण सम्भोगकृतो जनस्तनयं लभत इति शिल्पस्वरोदये । अङ्गोत्पत्तिकाल एवासौ गर्भं नरो नारी चेति रूपे विभक्ते ( ६।४६।६ अथर्व ६।७८।३,११।८।१८)। अत्र श्रुतानि त्वष्टुः विशेषणानि अस्य आदित्यत्वं प्रकटयन्ति। तथाहि-----
सुपाणिः, उरुमायमानः, स्वप्नायुदातेति। त्वष्टादित्यः आत्मागमनेन विश्वानि भुतानि प्रेरयति कर्मसु ( ४।४२।३) । दिवो विभुत्त्वष्टा यज्ञे अग्राद् रश्मीन् ददाति ( ५।५।६)। रात्रौ चन्द्रमण्डले त्वष्टुः तेजः प्रतिफलति येनायं जगत्

प्रकाशयति ( १।८४।१५)। सूर्येण चन्द्रो भातीति नाविदितं कस्यापि। जलपोषणाय समुद्रे च त्वष्ट्रा जलवृष्टिः क्रियते ( १।१४२।१०)। अग्निः वै त्वष्टुः सुतः इत्यनेन वचनेनापि अस्य आदित्यत्वं पुष्टिं प्राप्नोति ( ३।७।४)। दृष्टस्त्वष्टा आशुगामिनोऽश्वान् ( किरणान् ) जनयति । स एव चराचरविश्वहेतुः ( अथर्व० २।२६।२, यजुः २६।६)।पृथ्व्यर्थं भूतेभ्यो यज्ञः पुष्टिं प्राप्तः तद्विश्वकर्मणोरवेः अग्रे समवर्तत । त्वष्टा तु तस्य रूपं धारयन् प्रतिदिनमेति( यजुः ३१।१७)। सुस्पष्टमनेन त्वष्टुः आदित्यत्वम् ।

## रथवर्णनम्

विष्णुपुराणे अस्य रथे जमदग्निः ऋषिः ( अग्निः सूर्यतो जमद् आयमानं- वर्धमानदशायां--- भवति, स ऋषिः --- तापाभावे साधुत्वात् ), धार्तराष्ट्रो गन्धर्वः ( ध्रियते राष्ट्रो यैस्ते धृतराष्ट्राः नेतारः। एकवचने राजा वा । तस्य तेषां वा पुत्रस्थानीयैः नागरिकैः तीव्रवेगेन कार्याणि क्रियन्ते यस्मिन् मासे--- प्रजाः अतिशयक्रियाशीलाः भवन्तीत्यर्थः), तिलोत्तमाप्सरा ( एतेषु दिवसेषु कार्यरुचिः सर्वथा शोभना विशुद्धा वा भवतीति), ऋतजिद् यक्षः ( ऋत इति उदकनाम । एतेषु दिनेषु जलादधिकं शैत्यं तु वर्तते एव। अतः ऋतजिद् यक्ष इति श्रूयते ), कम्बलाश्वः सर्पः ( एते दिवसा कम्बलेन सह सर्पणयोग्याः यात्रायोग्याः भवन्तीति), ब्रह्मोपेतश्च राक्षसः( अतिशैत्यजाः कीटाणवो माघेऽस्य वृद्धिं गतेन तेजसा पञ्चत्वं गच्छन्तीति ।) वर्तते ( विष्णु० २।१०।१७)।

मासनिर्णयः -

विष्णुपुराणे त्वष्टा माघमासादित्यो भवति। साम्बस्कन्दपुराणयोः फाल्गुनमासस्य च ( साम्ब० ६।५-६, प्रभास ७।१।१०१।६२-६५ )। मत्स्यपुराणे पद्मपुराणे आदित्येषु अस्य नाम न श्रूयते ( मत्स्य० ३।४३।१६-२१, पद्म०सृ० ७६।२५-२७)। उपरोक्तचतुर्षु पुराणेषु आदित्यनामानि मासक्रमानुसारं न श्रूयन्ते । स्वनामानुसारं तक्षणकर्मणो माघस्य औचित्यं वीक्ष्य विष्णुमतमत्र मान्यतामर्हति। अतस्तद् प्रतिपादितमत्र ।

अस्य त्र्यम्बकत्वम् -

देवेषु अवलम्बमानोऽयं हस्ते आयसीं वाशीं बिभर्ति (८।२९।३)। रविरश्मिषु मेघाः वाष्परूपेण सदैव वर्तन्ते। यत्र मेघाः तत्र विद्युत्। मेघानां कृष्णत्वाद्धि रश्मिवाष्पस्था विद्युत् आयसी ज्ञाता। 'त्र्यम्बकस्त्वष्टेति' श्री मारेस कैनी) ई० वर्ष पृ० ३६७)। सम्भवत उदयास्तमध्यस्थितत्व एवास्मिन् त्र्यम्बकत्वम् आरोपयन्ति। त्रिषु स्थितिषु गुणभेदोऽस्य औचित्यं पुष्णाति।

## आदित्यो विष्णुः

त्रिषु देवेषु प्रथमो विष्णुः

यद्यपि पौराणिकसाहित्येषु विष्णुः त्रिषु देवेषु प्रथमो भवति, अवतरति च महीभारहरणाय विविधेषु रूपेण। परन्तु वेदेषु अवतारकथाप्रसंगाभावो विद्यते। अन्यच्च ऋग्वेद एवासौ महत्त्वमावहति नेतरेषु वेदेषु। मंत्रसूक्तसंख्यानुसारं सम्भवतः प्राप्स्यत्ययं दशमं पदम्। अस्य अंगेषु पादावेव श्रूयेते याभ्यां लोकत्रयम् अभरत्। अनादिः नित्योऽयं वेधा स्वयमुत्पन्न इत्याम्नायते (१।१५६।२-३)। अत इन्द्रादीनां देवानामिव अस्य पितरौ क्वचिदपि न श्रुतौ। एवमपि चानेन वचनेन सर्वेषु देवेषु अस्य श्रेष्ठता प्रतिपाद्यते।

अस्य आवासः (परमपदम्)

असौ देवः प्राय इन्द्रेण सह दृश्यते। दर्शनीयौ एतौ मदकरं सोमं पीत्वा उदरौ पूरयतः (१।१५५।१, ६; ६९।७)। त्रिषधस्थो विष्णुः गिरिक्षित इत्यपि श्रूयते (१।१५४।३-१५६।५)। निर्जनगिरिशिखराणि प्राणिवाचो वा व्याप्य वर्तते विष्णुः। यद्वा परमं पदमधिवसत्यसौ देवः इत्यर्थः। उरुगायस्य इदं पदं भूर्यवभाति यत्र बहुशृङ्गाः अतिविस्तृताः रश्मयो विभान्ति (१।१५४।६)। केचित्पाश्चात्याः गावो मेघाः तारकाः वेति मन्यन्ते (मैक० तत्रैव पृ० ७०, सेंपीकोशः, हार्डी, वेल्पी०)। परमनयोः परामावसकत्वं न वर्तते अतो मान्यता नार्हति। अस्य पदे सर्वेषामवभासिका शक्तिः विद्यते। तथा च श्रूयते ----------

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।। श्वेता०६।१४।।

अस्य परमं पदं ब्रह्माण्डमध्ये वर्तते । सूर्यादयस्तु रश्मिभिः अपि न तदधिगन्तुं प्रभवन्ति। अस्य परमे पदे अमृतोत्सो वर्तते यत्र देवयवः नराः मदन्ते देवास्य सुखं चरन्ति ( १।१५४।५,८।२९ ।७)। एतत्पदं विहगाः तारकाः अपि न प्राप्तुं शक्नुवन्ति ( १।१५५।५, ७।९९।२) । विद्वांसः तत्पदं ज्ञानचक्षुषा सर्वदा पश्यन्ति यथा विततं नेत्रमाकाशे पश्यति अनावरणेन ( १।२२।२०)। विष्णुपदं जागृवांसो मेधावी स्तोता सन्दीपयति ( १।२२।२१)। स्वकृतैः शोभनकर्मभिः तत्पदं आत्मार्थं प्रकाशयति प्राप्नोतीत्यर्थः। यद्वा तत्पदप्राप्तिहेतुभूतां कुण्डलिनीं सन्दीपयति । तस्मिन् परमे पदे अखण्डाद्यब्रह्मानन्दरूपो मधुरनिष्यन्दो वर्तते ( १।१५४।५)।

## त्रिपदविचारः

सर्वेषामा भासमानोऽयं शिपिविष्टः त्रिगुणातीतोऽस्ति ( १।१५४।४, ७।१००।१-२)। अस्य द्वे पदे एव नराः जानन्ति तृतीयन्तु कोऽपि न जानाति ( १।१५५।४-५ ) । निखिलजीव शरीराणां तच्छरीरत्वात् बृहच्छरीरोऽयं नित्ययुवेति श्रूयते । मृगो न भीमस्य कुचरस्य विष्णोः त्रिषु उरुविक्रमणेषु विश्वान्येव भूतजातानि अधिक्षियन्ति ( १।१५४[२]-१५५[४,६] )। अस्य त्रीणि पदानि रविपथत्र्यम्बकानीति मन्यन्ते प्रायः सर्वे विद्वांसः।ऊर्णनाभः; पाश्चात्याः और्णनाभश्च उदयास्तमध्यकालीना रविस्थितिः पदत्रयव्यंजकेति विचारयन्ति ( निरुक्त १२।१९, ह्विटने, मैक्समूलरः, कैगी च )। शाकपूणिः वर्णनादयश्च ब्रह्माण्डस्य त्रिभागगामिनः अग्निदेवपदस्य रूपे निरूपयन्ति एतानि पदानि ( कुनः हैण्डो०२२२, मैक०: तत्रैव पृ०७१) मन्यन्ते चैतन्मतं ब्राह्मणादिभिः समर्थितम् । अस्ति परमण्डाकारा तारकला यामतिक्रामति अर्को । अन्यथा: त्रिधा विभाजनो न सम्भवति, अतो नार्हति मान्यतासु इदं मतम् ।

ब्रह्माण्डमध्यस्थो विष्णुः एकेन एकेन पदेन पृथिवीं ( ततोऽधोवर्तिनो लोकान् अतिमानः, द्वितीयेन अन्तरिक्षं ( स्वशिरोवर्तिनो लोकान्), तृतीयेन च स्वं दिव्यलोकं ममौ । अस्य दिव्यो लोक इतरलोकानां हेतुत्वाच्छेषाणामप्रभातक

इत्याम्नायते ( श्वेता ०६।१४)। मध्ये स्थितोऽयं सर्वाणि ज्योतींषि भासयतीति नाभ्यर्थविषय:। इतराणि ज्योतींषि स्वसमीपवर्तिनं भासयन्ति न च दूरदेशे अभिमुखीभूतम् अयस्कान्तस्वभावे। ब्रह्माण्डकेन्द्रत्वात् ज्योति:षु ज्योतिष्टमोऽयं लोको मध्यगतत्वात् सरलतयैव स्वं परितो भ्रमणशीलानि दीपयति। येन रश्मिनायं ब्रह्माण्डस्य अध ऊर्ध्वं कोटी प्रकाशयति तदस्यैकपादप्रदीप:, येन पार्श्वकोटी ~~[illegible]~~ सह द्वितीय: पादप्रदीप: येन च स्वं लोकं तृतीय:। यद्वा हिरण्याण्डात् त्रिषु चरणेषु जातोऽयं नानाज्योतिस्समन्वितो ब्रह्माण्ड: । तथा हि---- प्रथमे चरणे तस्मादण्डात् सूर्यादपि बहुगुणविशालशरीराणां ज्योतिपुञ्जानि जातानि। द्वितीये चरणे सूर्यादि ग्रहाणामिव अन्येभ्यो ज्योतिर्भ्यो नानाज्योतींषि उद्भूतानि। तृतीये च चरणे एतेभ्योऽपि उपग्रह-स्थानीयानि लघूनि ज्योतिखण्डानि अस्तित्व मयानि भवन्ति। ये केचित् कुमारादयो दृश्यमानस्य ब्रह्माण्डस्य एकपद एवोत्पत्ति: मन्यन्ते तर्कैस्तेषामभावोपलम्भात् । हिरण्याण्डे सर्वतोमुखी विस्फोटकाल एव महत्त्वाकर्षकेन्द्रात् अभिलक्ष्य दाहज्योतींषि तत्र परितो भ्रमणप्रकारं इत्यत्र अन्योऽन्योत्पत्तिसम्बन्धो बाध्यते । येन च नूतना: समस्या: समुद्भविष्यन्ति। तथा हि---- अण्डजानि ज्योतींषि उत्पत्तिकाले सूर्यवत् तप्तपदार्थ-मयानि समभविष्यन् । परिभ्रमणत्वात् तेषां तलानि भवितव्यानि समानि शैत्ये जाते न पुन: गभीरसागरस्थानानि। पदार्थकाठिन्य भेदोऽत्र कारणमित्यपि न तर्कसंगतम्---- सागरोत्पत्तौ तस्य असमर्थत्वात् । तत्कथमेते जाता: ? अतश्चरणेष्वेव जातो दृश्यमानो ब्रह्माण्ड इति तर्कसंगतम् । एतनैव सिद्धान्तं पुष्णाति सागराणां स्थिति: ।

## अन्ये आवासा:

अथावासनिरूपणम् । वायुपुराणे कुमुदाञ्जनयोरन्तरे स्थिता अनेकायाम योजना केसरद्रोणी स्मृतास्य आवासभूमा। अत्र त्रिबाहुपरिणाहै: त्रिहस्तायतविस्तृतै: चन्द्रांशुवर्णै: व्याकोशै: मधुपैरिज: पूर्णै: महासुगन्धै: कमलं वनं विभाति सर्वं कालजै: शुभै: ( ३८।४५-४८) । अयमावासो विष्णवादित्यस्य अस्ति न पुन: परमेश्वरस्य विष्णो:। पुराणेष्वयं चैत्रस्य फाल्गुनस्य वादित्य इति श्रूयते ( विष्णु २। १०।१७, साम्ब० ६।५-८, एका० प्रमाण० ७( प्रभा०१) १०१।६२-६५ )। अनयो: मासयो: सौष्ठव

स एव वर्तते --- हेतुत्वात् । आदित्यानामहं विष्णुः इत्युच्यते गीतायाम् ( १०।२१) । यद्वा यथा शिवः कैलाश इति श्रूयते तथैवेयं क्रौणी विष्णोः इति--- भौमिकावास-दृष्ट्या। भविष्यतीयं क्रौणी कश्मीरराष्ट्रे । ऋग्वेदे ( १।१५५।१) अनायं गिरिक्षित इत्याम्नायते । मैकडानलादयः पाश्चात्याः मेघा एव पर्वतशिखरस्था इति मन्यन्ते । एते कवयो मेघाचलानाम् उच्चस्थानाम् अथो दर्शकस्य पूर्वस्येव लाक्षणिक आश्रयो गृह्णन्ति ( तुल० ओ०वै० २३०,टू०-२ , मैक० वे०ए० सौ० २७ ,पृ०१७४,टू०२)। अथवा यत्रासौ पर्वतानाम् अधिपतिः इति श्रूयते ( तैत्सं० ३।४।५।१)। तत्र तत्र भौमिकाः शिलोच्चयाः न भवन्ति ग्राह्याः । विष्णुः तत्र पर्वतानां ज्योतिषामीशो भवति---- सर्वाधिकप्रकाशकत्वात् सर्वेषां जनकत्वात् च । यत्र च पुनः ' गिरिक्षित ' इत्याम्नायते तत्र पर्वतानां ज्योतिषां सानुस्थानीयानां रश्मीनामग्रभागेषु प्रकाशरूपेणासौ वर्तत इत्युक्तं भवति । मधूकानां पर्ववत् स्थितमेव नानावरोधानां मार्गे अवाप्तेः यद्वा तज्जन-केषु पर्वत्वात् । मयूखैः पर्वतैः इति श्री सायणोऽपि ( ७।६६।३)। मेघानां स्वीकृतिश्च अस्य प्रकाशनदर्शनकर्मणि बाधिका भवति अतो मान्यतां गच्छति ।

## कर्माणि

अथास्य कर्माणि । असुरादब्धाय मनुप्राप्तये सृजति लोकत्रयं विष्णुः (१।१५४।१, ऋ० ६।४९।१३ )। अनेन अनुगृहीतो यजमानो धनेन, नीरोगशरीरेण, पुत्रेण च मोदते । अनेनादित्येन अधिष्ठितो मासः फाल्गुनः चैत्रो वा क्रम शरीरदृष्ट्या सर्वाधिको महत्त्वपूर्णो भवति। यद्वा वैश्वरूपेण उपासितोऽयं सर्वार्थसाधको भवतीति । कुचरस्य अस्य त्रिषु विक्रमणेषु विश्वानि भूतजातानि अधिक्षियन्ति । यद्वा उरुगायोऽयं त्रिभिः पादैः लोकत्रयं ( अध ऊर्ध्वमध्यवर्तिनो लोकान् मध्येन पदेनात्र पार्श्ववर्तिनोऽपि पश्यन्तो एकपंक्तिबद्धत्वात् ) निर्मितवान् इति पूर्ववत् ज्ञेयः ( १।१५४[२-३]- १५५[४] )। चराचराणां त्रिगुणात्मकत्वात् भूतानां प्रसंगे अस्य त्रीणि पदानि त्रिगुणात्मकानीति वक्तुं शक्यते । तेषां पूर्वपदैः सह जायते कश्चिद् विरोधः प्रसंगभेदात् । यदास्य त्रिगुणात्मकानि पदानि ब्रह्माण्डस्य निर्मितिप्रसंगेऽपि दृश्यन्ते । तथा हि--- प्रथमपादक्षेपनिर्मितानि महज्ज्योतींषि सत्त्वमयानि सन्ति-- महापत्वन्निर्मलानि । द्वितीयपदनिर्मितानि रजोमयानि अन्ते निर्मितानि च तमोमुख्यानि

सन्तीति । यथा रविभूचन्द्राः । आयुधो युतोऽयंस्वर्दृशोऽस्ति (१।१५५।५)।
आदित्यात्मा विष्णु चतुर्नवतिसंख्याकान् कालावयवान् चक्रमिव विविधं भ्रामयति
( १।१५५।६)। एवंवर्णितसंख्या न्यूनत्वमस्ति न च निश्चिता। पंच षड्नान्य-
क्षिवास्तु गतिवृद्ध्यधीना: कालो न गणिता: ।

मितो न शेव्यौ विख्यातो विष्णु: तृष्ण्या विनोदयति जनान् ववति
च तान् सर्वत: ( १।१५६।१)।पूर्व्योऽयममृतस्य गर्भमोऽस्ति ( १।१५६।३)। तथा च
श्रूयते यज्ञो वै विष्णु: ( शत० ब्रा०११।२।१३) । अप एव ससर्जादौ ( मनु० १।८) ।
रसो ऽहमप्सु कौन्तेय । इति श्रीगीतायाम् ( ७।८) । अहं हि सर्वयज्ञानां भोक्ता च
प्रभुरेव च । अहं क्रतुरहं यज्ञ: ( गीता ६।१६,२४) । नित्यनूतनाय विष्णवे यो जनो
हविरादिकं ददाति स इहलोके भोगसुखमनुभवन् पश्चात्तत्पदम् अधिगच्छति (१।१५६।२)।

अनन्तमहिमामण्डितोऽयं द्यावापृथिव्यौ दृढी करोति ( ७।९९।३, तै०सं०
३।४।५।१)। स्वकृताकर्षणशक्तिभि: पृथिवीं दिवि संस्थापनापूर्वकं संचारयति ।
आकर्षणशक्तिरेव दृश्यमानाकाशस्थितिहेतु:। सा च सर्वेषु तत्कृता। अत एवं
श्रूयते । तवस: तवीयान् एष शतर्चसं पृथिवीं महत्त्वेन त्रिभि: पादै: विक्रान्तवान्
इत्यनापि ( ७।१०० ।३) अस्य पादानां त्रिगुणत्वमुच्यते । शतर्चसं पृथिवीम् इत्यनेन
चयनेन लोकान्तरं गत्वा पृथिव्या: दर्शनेन सा शतार्चिष्मती--- न्यूनप्रकाशवती--
दृश्यते इति ज्ञायते । अपि च आर्याणां लोकान्तरगमनमिति यदर्थम् इदानीं वैज्ञानिका:
यत्नपरा: सन्ति। एवमसौ विष्णु एतां पृथिवीं जीवेभ्यो विस्तीर्णां चकार ( ७।१००।४)
आदौ दैर्घ्यमादौ अतीव विषमा । पश्चात् सा विष्णुरूपै: जलवायुतापै: विस्तीर्णा
कृता । विष्णु: गर्भाधानस्थानं निर्मातुं प्रार्थितो भवति ( १०।१८४।१)। एवमसौ
दूरदेशे वसतोऽस्य तत्पदं विष्कामकर्मयोगिनो विप्रा: एव विन्दन्ति नान्या:(७ ।१००।५,
यजु: ३४।४४)। अतएव दिवि दूर्यमातनोति ( यजु: ६।५)। अन्यत्र स्वर्गो शशिसूर्ययो:
प्रभेति कथ्यते ( गीता ७।८ )।

स्थानान्तरग्रहणकामो विष्णु: नभसे जागतेन छन्दसा दिवम्, त्रैष्टुभेनान्त-
रिक्षम्, गायत्र्या च छन्दसा पृथिवीमारुरोह ( यजु: २।२५)। अत्र गुणानुरूपं

इन्द्रस्य महत्त्वं प्रतिपादितम् ऋषिणा । यद्वा प्रकारान्तरेण अत्रापि तत्पदानां त्रैगुण्यमेवोच्यते । अथैतावताम् अन्तरिक्षान्तरेण पृथिव्याः पूर्वपर्यन्तं विस्तारितानि पदानि अश्वाकृति रूपाणि सन्ति ( ऑ० वे० अनु०१।४०१, ओ०वे०२२७)।

इन्द्रेण सह असौ सुरतोऽपि भाति । शम्बरस्य नवाधिक नवतिसंख्याकाः दृढीकृताः पुरः शतसहस्रं च वीरान् निःशेषतां गमयत् असौ ( ७।९९।५)। पूषाविष्णू इन्द्राय शतमहिषान् पेचतुः ( ६।१७।११ )। नात्यन्त पुंपशुवाचको महिषः, अपि तु अन्यानां महिष जातीयानाम् असुरविशेषाणाम् , येषां राज्ञो महिषासुरस्य वधो दुर्गाद्वारा कृत इति श्रूयते पुराणेषु । सम्भवतः माहिष्मतीं परितः स्थितेषु वन्यप्रदेशेषु तेषां निवास आसीत्। इन्द्रो वैविष्णोः अग्रजः। अतस्तत्प्रसादनार्थमेव सम्भवतः तदाज्ञया) पूष्णा सहासौ शतमहिष जातीयान् असुरान् हन्तीति ज्ञेयोऽनया युक्त्या । न पुनः यथा पाश्चात्या आमनन्ति ।

आदित्यत्ववर्णनम्

अथास्य आदित्यत्ववर्णनम्। इन्द्रो वै अस्य अग्रजः । अतश्चैत्रमासस्य अयमादित्य इति न युक्तियुक्तम्, यथा श्रूयते साम्बस्कन्दपुराणयोः( साम्ब ६।५-८, प्रभास १०१। ६२-६५)। यतो हि तत्र नामकीर्तन क्रमेण इन्द्रो आश्विनमासस्य आदित्यो भवति येनास्य ज्येष्ठत्वं बाधते यच्च अनभीष्टम् । भारतेऽपि कनिष्ठोऽयम् आदित्येषु इति पठ्यते ( आदि० ६५।१६)। अतोऽयं वसन्तिमासस्य फाल्गुनस्य आदित्यो भवति । विष्णुपुराणानुसारम् अस्य रथे अश्वतराख्यः सर्पः ( यदा रश्मीनां सर्पणगतिः अश्वतरगतिरिव सामान्या भवति), रम्भाप्सरा ( रम्भेव रमणीया भवति यस्य भा कान्तिः यदा), सूर्यवर्चा गन्धर्वः ( पौषमाघमासयोः न्यूनतापत्वात् कविः तमविगणय्य फाल्गुन एव रविं वर्चोयुक्तं मन्यते सामान्यतया। सामान्यतेजोमय-त्वादेव अस्यायं गन्धर्वः कृतः), सत्यजिद् यक्षः ( तापाभावे वृद्धिंगतान् यातुधानान् तापयति तेभ्यो जित्वा च सत्यशीलान् निवाणून् पुनः स्थापयति यः सः), विश्वामित्रर्षिः( सर्वेभ्यः सुखकरत्वादयमस्यार्षिः), यज्ञोपेतो राक्षस ( वृद्धतापप्रभावात् निष्क्रियत्वं गताः अतः साधूनामिव यज्ञोपेताः ये राक्षसाः ते विद्यन्तेऽस्य रथे । अत्र समूहे एकवचन प्रयोगः ।) वर्तते ( विष्णु०२।१०।१८)।

त्रिदेवेषु सत्त्वप्रधानो विष्णुः आदित्यविष्णोः स्वरूपतो भिन्न एवास्ति । तथापि 'तस्य भासा सर्वमिदं विभाति', 'प्रभास्मि शशि सूर्ययोः' इत्यादिभिः वचनैः आदित्यात्मा विष्णुरिति ज्ञायते । अपि च अकुमारो बृहच्छरीरो विष्णुः निखिलब्रह्माण्डहेतुभूतः केन्द्रोऽस्ति ( १।१५५।६)। स्वस्मिन् परमे पदेऽसौ पुराणरूपेण विराजते । स्वतेजसा च प्रकाशयति आदित्यादीनि ज्योतींषि । एवं प्रकाश्यप्रकाशकभेदो वर्तते अनयोः ।

स्वरूपमतानि

पाश्चात्यानां मतानुसारं आदौ विष्णोः धारणा मूलतः सूर्यरूप एव विकसिता बभूव या द्रुतगामी मूर्तिमत्प्रदीप्तपिण्डस्य रूपे आसीत्, असौ च पिण्डः स्वपदभिः विश्वस्य पारं प्रयातीति । सक्रियार्थकं विष्णुपदं विष् धातुव्युत्पन्नमिति मन्यते श्री रौथः( से०पी०कोशः)। मैकडानलस्तु अनया व्युत्पत्त्या एनं देवं सौरगतेः प्रतिनिधित्वकर्तेति मन्यते ( तत्रैव पृ०७२)। परन्तु ( १।१५६।४,ऐ०ब्रा० १।३०)। सतयोः मन्त्रयोः प्रसंगेऽसावेव 'विष्णुः द्वारपालो देवानामिति' स्वीकरोति ( तत्रैव पृ०७७)। यन्न युक्तम् । यतो हि तत्र तु असौ देवो हविर्भुक् अहन्येव वेद्यं दर्शनीयं व्रजं मेघं वृष्ट्यर्थं अपावृणुते । ओल्डनबर्गश्च अस्मिन् सौरप्रकृतिवृत्त्यभावो मन्यते । तन्मतेन विष्णुः विस्तृतस्थलेषु पादप्रक्षेपको नरोऽस्ति । अयं मनीषी पादत्रयप्रक्षेपेण सह कस्यापि प्राकृतिकघटनायाः सम्बन्धो न पश्यति। पदसंख्यायां शस्त्राणां त्रयीं प्रति अनुरागो मन्यतेऽसौऽयम् ( २२८।३०)। श्री पाटे एनं सूर्यरूपे पश्यति ( ऋ०व्या० पृ०१७८ )।

अयं विष्णुशब्दो नु प्रत्ययान्तोऽस्ति यो विष्लृ व्याप्तौ धातोः व्युत्पन्नो भवति। अतः विश्वं व्याप्नोतीति विष्णुः न पुनः सक्रिय इति । आदित्यात्मतया विष्णुः कालावयवान् भ्रामयति न च तद्रूपेण । केन्द्रत्वात् विष्णुः ध्रुवो यः सर्वाणि ज्योतींषि भ्रामयति न च स्वयं भ्रमति। स तु स्वप्रभाभिः सर्वान् लोकान् व्याप्नोति । विष्णुलोकगता प्रभा तत्कृतैवास्ति । अतो नात्र कश्चिद्विरोधः। नायं सूर्यरूपोऽस्ति न च सौरगतिप्रतिनिधिः। विष्णौ सौरप्रकृतिवृत्त्यभावो नास्ति सर्वथा यतो हि तद्भासा सर्वमिदं विभाति ।

## वाहनादिवर्णनम्

जनंश्रवमता देव: कीर्तिदृष्ट्या द्वितीयश्रेण्यो देवो भवति । उत्पत्तिदृष्ट्या श्रीवाकर एनम् आंशिकरूपेण द्रविडानां मन्यते । ग्रिफ्ल्थी अप्यस्य नाम द्रविड इति मन्यते ( हि०वि० ३०२ पृ०५७४)। परन्तु पुष्टप्रमाणाभावे सन्दिग्धमेवास्य द्रविडत्वम्। ब्राह्मणपुराणेषु तु विष्णु: धर्मसंस्थापनार्थं नानाशरीराणि प्राप्नोति । स्वयञ्च चतुर्भुजो गदापद्मशंखचक्रालंकृतोऽस्ति । गरुडोऽस्य वाहनत्वं भजते । श्री ए० डेनियलस्तु कार्यशक्तिसम्पन्नं मस्तिष्कमेवास्य रथ इति मन्यते (हि० वहु०पृ०१५८)। अस्य इदं पौराणिकं रूपं वेदेषु नोपलभ्यते ।

## द्यौः

आकाशतत्त्वस्य व्यञ्जकोऽस्ति अयं देव: । द्योतते ज्योतींषि यस्मिन् इति द्यौः । कुत्रापि अयमेकाकी न श्रूयते । अन्यै: देवै: सह तुलोऽप्ययं प्राय: पृथिव्या साकमेव आम्नायते। पृथिव्या सह असौ अष्टकोऽनु नानामन्त्रेषु च दृश्यते परमेको न कुत्रापि ।

## अस्य पुत्रा: तनया च

अश्विनौ, अग्नि:, पर्जन्य:, सूर्यो, मरुत, आदित्या: इन्द्राङ्गिरसश्च अस्य पुत्रा: सन्ति । उषा तनयास्ति। आकाशो वै सर्वेषामुपरि स्थित: अत एवमाम्नायते। पितृगुणमयोऽस्ति देवो द्यौः । शून्यत्वान्नायं मूर्तिकृत: ऋषिभि:। केषुचिन्मन्त्रेषु असौ असवृषभै: तुलितो भवति ।

## उपमा: कर्माणि च -

रक्तवृषभरूपो ( रक्ताभमेघाच्छन्न:)( कृष्णरूपो वा( श्वेतश्याममेघाच्छन्न: ) अयमधोमुखी भूत्वा गर्जति ( ५।३६-५८) । वृत्रवधं दृष्ट्वासौ प्रसीदति---अन्तरिक्षाव्याप्ता:पांसुकणा: वृष्ट्या सह भूमौ पतन्ति, अत: प्रसादं भजते (६।७२।३)।

रात्रौ द्यौः कृष्णरूपेण ( सुपिंशितेन) नग्नो भवति ( १०।६८।११ )। दिवे तपति 'अहं हरिणी' ( तै०ब्रा० १।८।६।१), हरिणीव हि द्यौः ( श०ब्रा० १४।१।३।२६), हरिणी( सुवर्णमयी) द्यौः( गो० ब्रा० २।२।७) इत्यादिभिः वचनैः प्रशस्यते इयम्। ( द्यौः शब्दः पुंस्त्रीलिङ्गयोः प्रयुक्तो दृश्यते वैदिकसाहित्येषु । अतोऽत्र दिवे 'इयं' प्रयुक्तः इति (अ बहुद् द्यौः जननी रूपोऽस्ति ( जै०उ०ब्रा० १।५५।३, तां ब्रा०१८।१०।८, श० ब्रा०१।७।२।१७,६।१।२।३७)। मेघमध्याद् स्पयमानम् ( दृश्यमानम्) अग्निः( विद्युत् )गर्भयति ( १।३१।४,२।४।५)। दिवि विष्णुर्व्यक्रमस्त जागतेन छन्दसेति शतपथे ( १।६।३।१०)। अहौ ( द्युः) लोक उत्तरोष्ठः इति ऐतरेयकौषीत-कीयौ ब्राह्मणौ ( ऐ० ८।२, कौ०३।७)। द्यौरन्तरिक्षे प्रतिष्ठिता अस्ति( ऐ०ब्रा०३।७, गो० ब्रा०२।३।२)। द्यौरिन्द्रेण गर्भिणीति शतपथे ( १४।६।४।११) द्यौः ब्राह्मणी ( ब्राह्मणो जातेति) इति जैमिनीये ( जै०उ०ब्रा०३।४६)। अस्य पितृत्वं ब्राह्मणेष्वपि श्रूयते ( तै०ब्रा०३।८।६।१, श०ब्रा०१।८।१।४१, १३।१।५।१)। आदित्यस्य प्रतिष्ठा अस्मिन् एव आम्नायते। स्वयम्भासा वायौ श्रिता इति श्रूयते ( तै०ब्रा०३।११।१।१०)।

## ज्यूसेन सह तुलना

यारोपीयकालिको द्यौः आकाशस्य स्वर्गस्य वा देवोऽस्ति । अस्ति यद्यप्यसौ पुरातनो देवस्तथापि आर्यपूजितदेवेषु किञ्चिदपि महत्त्वं नावहति । ग्रीकाणां ज्यूसोऽस्य तम स्थाऽस्ति । यथा इन्द्रो हन्ति स्वं पितरं दिवं तथैव ग्रीकदेशीयानां युरनसौ हतः स्वपुत्रेण क्रानसेन ( वे०वेकर हि०वि०१।३१७)। आध्या-त्मिकदृष्ट्या भावयन् श्री ए०बी० पुराणी कथयति यदस्य मनुष्यस्य विशुद्धाः भावविचारा एव आकाशस्थानीयाः सन्ति। यद्वात्मस्थितिः यस्यां देहस्नायुप्रक्रियाः न ज्ञायन्ते इति( अ०ब्र०पृ०५०)। श्रुतगुणकर्मविचारेण तु द्योतन्ते ज्योतींषि( दिव्यानि) यस्मिन्नसौ द्यौः इति ज्ञायते ।

## सूर्यः

### पितरौ :

देवेषु स्थूलतमस्य सूर्यस्य ख्यातिः सप्तत्रिंशदुत्तरैकशतमन्त्रेषु दशसूक्तेषु च ऋग्वेदे, एकविंशतिमन्त्रेषु अथर्ववेदे, चतुर्दशमन्त्रेषु च कृ यजुर्वेदे श्रूयते । सूर्यसिद्धान्तेऽस्य

उत्पत्ति प्रसंग एव पठ्यते तथा च ऋग्वेदेऽपि--- यत्राहंभूतिश्रला पृष्ट्यां मनस्के तदादाणस्तेभ्यां निधि: सूर्योऽजायत ( १०।१०।३,शु०लि० १२।२२ )। पुराणेषु अदितिकश्यपतनय इति श्रूयते बहुश:। यद्वा हरीच्छया ब्रह्माण्डोत्पत्तिकाले हिरण्याण्डा-दस्य उत्पत्ति श्रूयते। एतासु सर्वासु उत्पत्तिषु प्रकारान्तरेण परमाणु: तस्य ? विखण्डकश्चैव उक्त:। अदितिकश्यपप्रसंगे शक्तिसम्पन्न: परमाणु: अदितिनाम्ना उक्त: तस्य विखण्ड-कश्च कश्यपपदेन । हरीच्छया ब्रह्माण्डो जातोऽण्डादित्यत्र तु अण्डान्तरि अनन्त: परमाणवो यदासंयोगवशात् विखण्डकै: संघटिता: भवन्ति तदा। विखण्डको वै पौरुषप्रतीक:। अत: पुरुषनाम्ना उक्त:। दर्शनशक्तिप्रधान: खलु सूर्य:। अतोऽयमक्ष्णो जात इति उक्त:। वेदा: एवं प्राहं सूर्यमग्रे जजान इत्यनेन वचनेन ताराणामनन्तरं प्रात: सूर्योत्पत्ति: ज्ञायते( यजु: ३१।२१ )।

<u>रथाश्वा: --</u>

अस्य रथमेक एव सप्तवर्णोऽश्वो वहति सप्तनामा ( १।१६४।२,७।६३।२)। अत्र प्रकाशरश्मिवर्णेषु हरिद्वर्णो रश्मि: मध्यस्थानीय इति ज्ञायते । मध्यमो भवति अन्यायी अत एक एव कृतोऽश्व:। दृश्यमानेऽपि एकवर्णे भवत्येव अन्येषां वर्णानाम् उपस्थिति इति विचार्य ऋषिणा मध्यस्थानीयो हरिद्वर्णाश्वो दृष्ट इति वा । यद्वा एक एव रश्मिकलाप: सप्तवर्णान् अवाप्य सप्तनामा भवति । वस्तुतस्ते चित्रा( नानावर्णा:) भद्रा:( सरलरेखागामिन: प्रकृत्या), रसहरणशीला:, स्तुत्या: ( जीवनाय तापस्य प्रकाशदायकत्वात्) सन्ति ( १।११५।३)। एते अमृता सूर्याश्वा:
२४,४३ ४
वेगवन्त: केतुमन्तश्च सन्ति ( अथर्व १३।१ ---२)। अस्य मधुस्थानीया: रश्मयो दिवो मार्गेण प्रसरन्ति ( ५।४७।६)। असुरस्य अदितिपुत्रस्य किरणा: सुपर्णा: गम्भीरवेपाश्च सन्ति ( १।३५।७)। गच्छतां तेषां मार्गे ज्योति: विकिरति अत: सुपर्णा: इति श्रूयते। अहर्निशभाविनो रश्मिविस्फोटा: रश्मिषु गभीरं कम्पनं जनयन्ति अतस्तेषु गम्भीरवेपा: श्रूयन्ते। अस्य केतव: क्रमेण सर्वान् प्रकाशयन्ति (१।५०।३-४) । सप्ताश्वा: सप्तदिवसा इति एक्लंमूर:। परं नैतन्मान्यतामर्हति ( हिल्ला० पृ०१६४ )।

शोचिष्केशं रथस्थं रविं सप्तशोधिता: अश्वस्त्रियोऽपि वहन्ति (१।५०।८-९)। यदा एतशर्षिणा सह योद्धुं जगाम तदा वेगवता रथेन तदास्य रथस्य एकं चक्रमिन्द्रोऽहरत् । स चेन्द्रः तेन चक्रेण असुरान् हन्ति (१।१३०।९, ५।३१।११, ४।३१।३)। येन रथेन रविः सद्य एव अन्तावन्तौ परियाति तं रथं सप्ताश्वाः यद्वा सप्तवह्नीः वहन्ति ( अथर्व० १३।२।६-७)। अत्र सूर्यरश्मिः तरणशीलानां रश्मीणां सप्ताधिकवर्णत्वं सूच्यते येषु सप्त एव प्रमुखाः सन्ति । आधुनिकाः वैज्ञानिकाः अपि अस्य रश्मिषु मुख्यतया पञ्चाशदधिक-सप्तवर्णान् स्वीकुर्वन्ति कथयन्ति च सन्ति अन्येऽपि । स्कन्दपुराणे वालुकाख्यो रविरिति सूच्यते वायौ तापवाहकत्वात् ( १।२।४३।२१)।

## सम्बन्ध निरूपणम्

अथान्यसम्बन्धनिरूपणम् । कृष्णायाः राज्ञ्याः पुत्रोऽर्जुननामकः सूर्यो बभूव( अथर्व १८।३।२६)। आलङ्कारिकेयं श्रुतिः वस्तुतस्तु निशानन्तरम् उदेति सूर्यः इत्येवोच्यते । यदा यममाता त्वष्टुः दुहिता सरण्यू सूर्येण वृता तदास्य छाया नाम्नी जाया ननाश ( अथर्व १८।१।५३) । रात्रिःवै सरण्यू वा सूर्यतेजो सहमाना सदैव ततोऽपसरति । छाया चराचराणां छायैवास्ति। यदा यस्मिन् मार्गेऽसौ रात्रिं वृणुते तस्मिन् मार्गे छाया नश्यति । यद्यपि रविः सरण्यूं कदापि न प्राप्नोति तथापि यस्मिन् देशे रात्रिः भवति तत्र सा तेन प्राप्नोति कविभिरुच्यते । सरण्यू संज्ञानाम्नापि ज्ञायते यां सूर्यं संज्ञैव जानाति कदापि प्राप्नोतीत्यर्थः। मर्त्येभ्योऽपागूहन्नमृतां सूर्यजायां देवाः तस्मै अन्यां सवर्णामदधुः यां छायानाम्ना ज्ञायते ( अथर्व १८।२।३३)। छायास्थाने प्रकाशाभावात् वा रात्रे प्रतिकृतिरूपा मता । त्वष्टुः दुहितेति । यथासुपोषिता तनया अल्पकालिकं सुखं दत्त्वा पतिगृहं प्रयाति तथैव त्वष्टृभिः विश्वकर्मभिः वा यावत् विविधं कर्माणि कुर्वद्भिः विश्राम्य सुप्रतोषिता रात्रिः यत्किञ्चित् सुखं दत्त्वा प्रयाति । विचक्षणो दिवाकरो रोचमानामुषसं
२० १५
पतिरिवाभ्येति तदानीं देवयन्तो नराः सूर्यम् उपासन्ते ( अथर्व०२०।१०७-१०७)। अहोरात्री अस्य दुहितरौ स्तः( ४।४९।३) सोमपावनी ऋचास्य दुहिता भवति (९(१(६) । एवं राज्ञ्यादिभिः सह सूर्यस्य सम्बन्धः कविदृष्टिभेदात् भिन्नतां भजते ।

## कर्मवर्णनम्

अथकर्मवर्णनम् । सर्वं पश्यन् सूर्यो रश्मिभिः लोकत्रयम् आपूरयत् (४।१४)[२]। एकदा एतशर्षिरक्षणार्थम् इन्द्रः सूर्यमहिंसीत् परमन्यत्र स: सूर्येण महाहूयते यज्ञे ( ४।३०[६]-३१[५-६] )। अत्र मेघैः सूर्याच्छादनमेव तस्य हिंसनं मतम्। यदासुरः स्वर्भानुः ( नैसर्भानुः चन्द्रमा) न राहुः न च केतुः अभीष्टप्रकाशाभावात्। यस्य भा प्रभा नुः नोदयति प्रेरयति कर्मणि विनोदयति सा भानुः रविः शशिनौ) तमसा स्वकृतछायया आच्छादनेन वा सूर्यमपावृणोत् तदा विश्वजनो बोधविद् मुग्ध इव भवति ( ५।४०।५)। सूर्यग्रहणकाले लोकः कार्यं न विन्दति इति भावः। मन्देशात् योद्धुं रविः समरमिच्छा मनसातिगच्छति ( ५।४४ ।७) । तान् इन्दुम् उदेतीत्यर्थः। अस्य देवस्यातनामानं मण्डलम् उत्ताच्छन्नमस्ति ( ५।६२।१)।केतनात्र मेघाच्छन्नम् अन्तरिक्षमुच्यते ।लोकश्यशो विप्रोऽयं मधुरुक्तादित्यानाम् अन्तर्हितं जन्म वेत्ति प्रकाशयति च विश्वं मर्त्यानां शुभाशुभकर्माणि पश्यन् ( ६।५१ ।२)। हृद्रोगं तत्कृतञ्च वैवर्ण्यमपाकर्तुं भानुः प्रार्थितो भवति ( १।५०।११, अथर्व १।२२।१)। पं० जयदेवस्तु हृद्रोगप्रसंगे प्रयुक्तं सूर्यशब्दं बहुवृक्षवाचकं मन्यते । तेषां नामानि एतानि सन्ति --- अर्कः, सुवर्चला, ऐन्द्री, हरिपर्णी, रक्तचन्दनः, जपा , बन्धूकश्चेति ( अथर्व जा०पृ०१३) । इतरान् रोगान् अपाकर्तुमपि असौ प्रार्थितो भवति ( १०।३७।४,१।५०।१३)। अस्मिन् प्रसंगे द्रष्टव्याः सूर्यरश्मिचिकित्साग्रन्थाः विस्तृतज्ञानाय ।पापकृतो जनाः सूर्यं न विजानन्ति विरजास्तस्य द्वारेण प्रयान्ति । हविषां तदधीनत्वाद् देवानां जीवनानि अपि अस्य अधीनानि सन्ति । ते एनमतिक्रमितुं न शक्यन्ते ( १।१०५।१६, मु०उ०१।२।११)।

सूर्यरश्मयो जनान् पापान्निष्कृष्य पालयन्ति ( १।११५।६) । सूर्योपासकः पापदोषमुक्तो ~~मृत्युः~~ भूत्वा पुनः तद्रश्मिप्रभावात् स्वस्थो भवतीति भावः । एतशेन सूर्यो देवत्वं गमयति जनम् ( १।१२१।१३)। सूर्यरश्मयो यजमानं तत्र नयन्ति यत्र देवपतिरेकोऽधिवसति ( १।१६४।१७, मु०उ० १।२।५)। जनविषाद् अपनीय विषो मधुविद्याख्ये सूर्यमण्डले स्थापयति परं तेन स न बाध्यते --- विषापहरणसमर्थः सः (१।१९१।१०)। दिवो रुक्मः तरणिः भ्राजमानोऽन्तरिक्षादुदेति विसृजति च अपो रश्मिभिः ( ७।३६।१[१]- ६३[४] )। वर्णितो रविः महान् केतुरस्ति यो जनान्

समेंषु नियोजयति। अस्मै मित्रावरुणौ मार्गान् साधयन्ति ( ७।६०[४]-६३[२,५] ) । तेजोरूप-
क्षणमहत्त्वैः देवेषु श्रेष्ठः चराचरपतिः रविः असुराणां ( रोगाणूनाम् ) हन्तास्ति
( ७।६६।१५, ८।१०१।११-१२) । देवजातस्य दिवः पुत्रस्य समीपे कश्चिदपि पुरातनो
सुरो न निवसति ( १०।३७।१,३) । सूर्ये तपति रोगाणवो दीर्घ जीविनो न
भवन्तीति । हरिकेशोऽयं यजमाने अक्षुण्णमायुः विस्तारयन् बृहल्लोमकं मधुः पिबति
अवति च विश्वम् ( १०।३७[६]-१७०[१] )। क्रान्तिसाम्यकालिकयोः चन्द्रसूर्ययोः तुल्यांशुबाल-
सम्पर्कात् तज्ञ दुष्क्रोधमयौ वैधृतिसंज्ञकौ बह्निः प्रज्ज्वलितौ लोकाभावाय जायेते
( सूर्यसि०११।३-४)।

दिवो धारके सूर्यमण्डले सत्यं, सुपुष्टं, वाजस्य दातृतमं वृत्रामित्रादीनां
नाशकं ज्योतिः प्रादुर्भवति। इदं सौरज्योतिः अन्येषामपि ज्योतिषां प्रकाशकमस्ति
अत एव उत्तमं विश्वजित्, धनजित्, बृहदित्युच्यते। विश्वभ्राट्, महान् सूर्यो दर्शनाय
उरु अच्युतमोजो विस्तारयति ( १०।१७०।२-३)। विश्वकर्मणा, विश्वदेव्याऽवता
ज्योतिषा विश्वानि उदकानि धर्मकाले अधृतानि क्रियन्ते तृषितेभ्यो भूतेभ्यः
( १०।१७० ।४)। पतङ्गः अयोक्तां वाचं मनसा बिभर्ति । तथा च श्रूयते अन्यत्रापि-----
कण्भिः पूर्वाह्णे दिवि देव ईयते ----- तैत्त्रा०३।१२।६।१ । ( १०।१७७[२])।

पुरुधा राजमानो रवि वृष्टिदानेन प्रजाः पोषयति ( १०।१७ ०।१)।
स्वर्णेद् अतन्द्रोऽयं यास्यन् द्वे रूपे कृणुते । तत्र दक्षिणायनं गतोऽयं स्वं मार्गान्तर-
माशु एव गच्छति शनैः शनैश्चोत्तरायणगतः( अथर्व १३।२।२८।३०-३१)। देवकेतुश्चित्रो
रविः दिवः पृष्ठे धावमानः सर्वदेवान् आत्मनि विनिवेशयति ( अथर्व १३।२[३७-३८]----- ३१[४] )।
तदुदिते सर्वाणि ज्योतींषि अदृश्यतां गच्छन्तीति। गातुविदोऽदब्धचक्षुषश्च प्रभावादेव
आर्तविवायुः वहति समुद्राश्च विसरन्ति ( अथर्व१३।२[४३-४४]----३[२] )। अस्मादेव विश्वानि
भूतानि प्राणन्ति। स एव एतानि प्राणयति मारयति वा । सः प्राणेन द्यावापृथिव्यौ
तर्पयति अपानेन च समुद्रस्य जठरं पिपर्ति । जठरं पिपर्तीत्यनया श्रुत्या अस्य जलं
शोषयित्वा लवणादिषु मिश्रितखनिजेषु गौरवं प्रतिपाद्य तान् उदध्युदरं प्रापयतीति
श्रूयते ( अथर्व १३।३।४) । विराट् परमेष्ठी, प्रजापतिः अग्निर्वैश्वानरः, षडुर्वीः
पंचदिशः चतस्रः आपो यज्ञस्य अयोऽधाराः सह पत्न्या सूर्ये मिताः( अथर्व १३।३।५-६)।

स स्वान्नादोऽन्नपतिः, ब्रह्मणस्पतिरस्ति, अपि चासौ भूतो भविष्यदस्ति (अथर्व० १३।३।७)। अहोरात्रैः विमितं त्रिंशदङ्गं त्रयोदशं मासं सूर्यो निर्मिमीते। ऊर्ध्वदिङ्मा-रूपाः स्वर्णरश्मयो दिवि वर्तमानं भ्राजमानाय देवाय शुक्रं वहन्ति (अथर्व १३।३।७-८)।

अदितिपुत्रोऽयं दिव्यो रश्मिभिश्च सुपर्णोऽस्ति यो भानुकेतुना विश्वरूपाणि पुष्यति। यद्वा विश्वचर्षणिः विश्वतोमुखो विश्वतस्पाणिः अयं देवो द्यावापृथिव्यौ प्रकाशेन जनयन् भूतानि भरति (अथर्व १३।२।६-१०,२६)। नासौ अन्येषां देवानाम् (द्योतनशीलानां ज्योतिषाम्) अद्भुत तेजने कापि बाधां समुपस्थापयति न कोऽ-प्यस्य स्वाहरणकार्यं (अथर्व १३।२।१४-१५)। सूर्यो न केवलं रश्मिभिः अपितु रश्मितप्तामैरपि (उल्कापिण्डैः) निहन्ति सपत्नान् (प्रभास्पर्धिनो ग्रहान्तरान्)। यद्वा असमस्थाः दुष्टाणवोऽपि मृत्युमधिगच्छन्ति (अथर्व १३।१।३२)। दिव्यो गन्धर्वो रविः ग्रहमण्डलमाकर्षणशक्त्या नियमयति (यजुः ३३।३७)। अस्य रश्मित्वच-मापो व्याप्नुवन्ति (यजुः १०।४)। बृहद्विमानशास्त्रे रविरश्मयो विमानं सञ्चालयन्ति (प्रतिपं० २३श्लोक ३६१-६७)।

उद्यन् सूर्यो गवि अन्तःस्थक्रिमियो निहन्ति (अथर्व २।३२।१)। अनया रविरश्मीणां गोषु गव्येषु च प्रभावज्ञानं सूचते। अनुकृष्णयो भानुः मूत्रनिष्कासनेन बहुव्याधिविनाशकस्य शरस्य (रश्मियोगेन मूत्ररोगविनाशकस्य यन्त्रविशेषस्य) पितेति सूचते (अथर्व १।३।५)। अन्तः प्रविष्टाः अस्य रश्मयः कार्यं चिन्वन्ति। गण्डमालमपि अपनयति स्वप्रभावेणासौ (अथर्व ६।८३[१])।

अस्य मूर्तरूपः

अथ मूर्तिमत्तास्य देवस्य। कुन्त्याहूतो रविः आत्मानम् अस्मिन् रूपे प्रकटयति ——

मधुपिङ्गलो महाबाहुः कम्बुग्रीवो हसन्निव।

अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ वन० ३०६।१६ ॥

श्री जं०फ०० फ्लैमर: स्वकीये ग्रन्थे अस्य स्वरूपमेवं वर्णयति ——

कमलरूपस्य सूर्यस्य रथं सप्ताश्वाः वहन्ति यद्वा सप्तास्य एकोऽश्वो वहति । चतुर्भुजोऽयं द्वयोः हस्तयोः पुष्पे धत्ते अन्येन एकेन अभयदायिनीं मुद्रां द्वितीयेन च आशीर्वादिनीं मुद्रां प्रकटयति ( भा०क०प्रा०पृ०५१)।

## तद्विषयकनानाविचाराः

इन्द्रकृतं चक्रचौरकर्म अभिलक्ष्य श्री मैक्डानलोऽत्र ( तत्रैव पृ०५८)। भावयति यदिन्द्रो झंझावातेन तमाच्छादयति ।परं नायमिन्द्रो झंझावातदेवः। स तु वृष्टिदेवोऽस्ति । वस्तुतः सूर्यो विविधविद्युदागारः। विविधविद्युदेव अस्य रथस्य द्वे चक्रे भवतः। ततो वृष्टिदेव इन्द्रो मेघस्थविद्युद्रूपम् एकं चक्रम ( अंशम् ) अहरत् ।

मितन्नीकस्साइटयोः सूर्यनाम ' शुरियाज ' इत्यनेन नाम्ना ज्ञायते । केचिदेतन्नाम ईरानदेशोत्पन्नमिति मन्यन्ते । एवं यद्यपि सूर्योपासनास्वरूपः सर्वथा ऋग्वैदिकयुगस्यास्ति तथापि परवर्तिनि काले भारते प्रचलिता सूर्यपूजापद्धतिः विदेशीया पद्धतिरिव प्रतिभातीति श्री मै० मैकर:( हि०वि०)४५७)।

वैदिकसूर्यस्य सम एव अवेस्तायाः ' ह्वरे ' अपि तीव्राश्वैः युक्तोऽस्ति। अपि चासौ अहुर मज्दस्य नेत्र स्थानीयोऽस्ति ( स्पीगल: डी०पी० १।१६०-१, वॉ०वर्ग: त्सी० गे० ५०,४६)। कुमनोक यूनानीदेवम् ' हेलियासम् ' अपि सूर्यसम्बद्धमिति मन्यते ( कुण्ठिक्स १।२१८)।

श्रीकुनः सूर्यं वैदिकेन ' स्वर् ' इत्यनेन पदेन व्युत्पन्नं मन्यते ( कुनः त्सी० १२ । ३५८, श्मिट, कुनः त्सी०२८।६)। परमयं भाषावैज्ञानिकस्य दृष्टिकोणोऽस्ति, यो भाषाविकासक्रमम् अन्विष्यन् शब्देषु वर्णपरिवर्तनमेव पश्यति, न पुनः भाषायाः वैज्ञानिकताम् । संस्कृतं भाषा सर्वथा विज्ञानसिद्धभाषास्ति । सा कालप्रभावाद् अन्यभाषाणामिव स्वशब्दप्रकृतिप्रत्ययान् न परिवर्तयति । मात्र केषुचिद् स्थानेषु शब्दार्थेषु उत्कर्षापकर्षणरूपिः वृद्धिर्वा परिलक्षिता भवति ।

## सूर्यमूर्तिपूजा :—

सूर्यस्य प्रथमा मूर्तिः विश्वकर्मणा शकस्थाने घटितेति श्रूयते भविष्यपुराणे । अतः सूर्यमूर्तिपूजा भारते शकदेशागता भवितव्या यादौ मगीपुरोहितैः प्रारम्भीकृता ।

ईरानदेशे सूर्याग्न्युपासककुलकाले ये सूर्योपासका: भारते आगतास्त एव शाकद्वीपीया: ब्राह्मणा उक्ता: । कृष्णपुत्रस्य साम्बस्य श्वेत कुष्ठोपचारो मैत्रीपुरोहितेन सूर्योपासनया कृत इति श्रूयते भविष्यपुराणे ।* एवं विचारयति श्री चि०प्र०सिंह:डी० पी ० पाण्डेयश्च स्वे स्वे ग्रन्थे ~~क्र~~ क्रमश:( भा०वि० पृ० ८२, व०सं०पृ०१५-१६ )।

व्युत्पत्ति:

सूर्यशब्द: सृ धातो: क्यप् प्रत्ययेन सिद्धिं प्राप्नोति । सुवति कर्मणि लोकमिति तारानाथ:( वाचस्पत्यम् )। सरति आकाश इति सूर्य: ( वा०शि०: सं० हि० कोशे )।

सविता

स्तुतिस्थिति:

दिव्येषु देवेषु सविता प्रमुखं पदमलङ्करोति। ऋग्वेदस्य एकोनत्रिंशन्मंत्रोपरेषु नवसूक्तेषु अस्य कीर्ति: श्रूयते । अन्यत्र सोमेन्द्रादिभि: देवै: सह नाम मात्रेणाम्नायते। यजुरथर्ववेदयोस्तु केचित् एव मन्त्रा: अस्मै सन्ति । तेष्वपि बहव: ऋक्श्रुता: सन्ति ।

मानवीकरणम्

मानवीकरणदृष्ट्यासौ हिरण्यवर्ण: इति श्रूयते । अस्य पाणय:पृथव:, शोभना:, हिरण्ययाश्च सन्ति ( १।२२।५,२।३८।२, ६।५०।८, ७।४५।४)। अस्य ~~क~~ जिह्वापि शोभना, सुमन्द्रा, सुवर्णवर्णास्ति ( २।५४।११, ६।७१।३-४,७।४५।४)। अयं देवोऽस्यां हनु: अस्ति ( ६।७१।४)। श्री सायणस्त्वेनं हिरण्यहनुरित्येव मन्यते । परन्तु श्री मैकडानल: लौह हनुरिति ( तत्रैव पृ०५६)। समतावृते नमसि भवत्यस्यागमन: प्रकाशनार्थं जगत् । अत एव लौहहनुरिति वक्तुं शक्यते । परं वस्तुतो हिरण्यादौ हिरण्यपाणि: हिरण्यजिह्व: सविता कथमपि लौहहनु: भवितुं नार्हति, न च ऋषिणा तथा दृष्टोऽयम् । तस्य हनुरपि हिरण्मयो भविष्यत्येव। रविरश्मिभि: रश्मिवत:

सवितुः हरिद्वर्णाः दीप्तयः केशस्थानीयाः सन्ति ( १०।१३९।१)। सम्प्रत्तोऽस्मिन् काले हरिकेश्यास्त्वरश्मयः प्रभावकारिणो भवन्ति अन्येषामपेक्षया अत एवं श्रूयते। सुषुम्नाद्यंशुनामानि पुराणेषु दृश्यन्ते ( कू०पु० १।४३।३-४)।

### रथाश्वाल्गादीनि

अस्य हिरण्यशम्यु बृहन्तं रथं श्वैताश्वौ वहतः यदायं यज्ञेषु याति। अस्य हिरण्ययथो नानारूपाणि गृह्णाति। अश्वपादाः श्वेतवर्णाः सन्ति । अत्र सवितुः मण्डलस्य रथ इत्युच्यते, यस्मिन् सततभाविनो विस्फोटाः तस्य नानारूपजनकाः भवन्ति। किरणाग्रश्वैतत्वं श्यावश्वैततास्ति। रश्मयः रश्मयश्चाश्वस्थानीयाः सन्ति ( १।३५।३-५)। बहुयोजनोच्छ्रितानि विस्फोटजन्यप्रकाशस्तम्भानि स्व रथयुगबन्धनस्थानानि भवन्ति। अयं उत्कृष्टेन मार्गेण सर्वदा गच्छति। सुगमाः अस्य पन्थानोऽरेणवः सन्ति ( १।३५, ३,११यजुः ३४।२७)।

### कर्माणि

अथास्य कर्माणि । हिरण्यपाणिभिः पृथिव्याः अन्तान् स्पृशन् कनकरथारूढोऽयम् आरोहणावरोहणपथाभ्यां परिक्रमति ( १।३५। २-३)।

अत्रान्तस्पर्शेणास्ति क्वचिदस्याः सीमेति न श्रूयते अपितु वर्तुलाकारत्वादस्याः अर्धांशः सदैव प्रकाशितो भवति। अत एवास्याः सम्पूर्णा परिधिः तद्रश्मिस्पृष्टा भवति येनाम्नायते ( तैः) अन्तस्पर्शः। आरोहणावरोहणपथाभ्यां सवितुःसञ्चरणेनानेन स्वस्य कस्यचिद् महतो ज्योतिषः परिक्रमणं श्रूयते यच्च सत्यमेव। द्योतनशीलेषु दिव्यतमे सत्यधर्माणि यस्य पुण्यात्मनो निष्ठाव्यभिचारिणी भवति सोऽवाप्नोति तदर्थं स्वर्गं भित्त्वास्य मण्डलम् ( अथर्व०१०।८।४२) । तथा चान्यत्रापि -

द्वाविमौ पुरुषौ राजन् सूर्यमण्डलभेदिनौ ।
सन्यासी योगयुक्तात्मा शूरश्च समरे हतः ॥

विज्ञानदृष्ट्या शक्त्याः मूलस्रोतत्वात् तस्य विद्रुमः आश्रयस्थो हिरण्यपाणिः सविता याज्ञिकेन शत्रुशस्त्रास्त्रेभ्यो रक्षितुमात्मानं प्रार्थितो भवति। रामरावणयोर्युद्धे महाभारते च बहुशः श्रूयते एव शत्रुशस्त्रशस्त्रादीनां विखण्डनं मन्त्रशरैः, अमोघत्वञ्च तेषाम्।

इदानीमपि समरे लेसररश्मिप्रयोगेन अमोघलक्ष्यवेधो भवति । यथेदानीं वयं पश्यामः तथैव प्राचीनयुगेऽपि सम्भवत्येव। तुर्कीत्याख्यस्य देशस्य नौसेनाध्यक्षासकाशात् प्राप्तमान-चित्रेण ( इदानीमिर्कंसंयुक्तराज्य- अमेरिकेत्याख्यदेशस्य नौसेनाविभागे वर्तते, मिस्रदेशे च प्राप्तैः क्रिस्टलशीशकखण्डैश्च अतीते वैज्ञानिकी उन्नतिः ज्ञेया भवति ( यजुः २२।१०)।

भयानकौमेषु सवितुः गावः सोमगृहेषु तत्र पुष्ट्यर्थं प्रपिप्ताः भवन्ति स्म । फाल्गुन्योः पुष्टिं प्राप्ताः सोमः रथैः नीयते स्म । शीशपत्रकनिर्मितगृहेषु सोमवल्लीकृषिकर्म वैज्ञानिकविधिना तद्वृद्धिविकासार्थं क्रियते स्मेति ज्ञायतेऽनया ( १०।८५।१३)। सवित्रा प्रेरितौ वरुणौ जनान् बध्नाति पाशैः। दुष्कर्मनियोजनाय प्रार्थितो भवत्यसौ येन जनः समाजे क्वचिदपि लज्जावनतमुखो मा भूत् । तच्छक्तिचालितयं-त्राणां दुरुपयोगेन क्षियं मा उपैत्वित्यर्थः। इन्द्रादिभिः सह यज्ञभवति सविता । सूक्ते बहूनां देवानां कारणानां विनियोगः । नात्र जायते कश्चिद् विरोधः ।यतो हि वायुमण्डले विचरन्ति नानाविधकीटाणवो येषां विनाशो न सम्भवति एकस्यैव शक्त्या, एक एव सर्वगुणाभावत्वात् । अत आहूयन्ते नानादेवाः महर्षिभिः। अभिषवं कुर्वति यजमानायायां पाकोपेतमन्नं प्रयाति। प्रथितैव सोमवृष्ट्यानुपुष्टिः। यज्ञे सोमाभिषव-काले तस्मिन् ( वर्मिर सें) कीटाणवो न प्रविशन्त्वेतदर्थमपि भवति प्रार्थितोऽयं देवः
२४ ६ १,३,८
(१०।८५-९३-१०० ) । अन्यथा तद्गुणे सर्वत्र सततशीलैः रोगाणुभिः पदार्थदूषणात्, तस्य रश्मिभिश्च तेषां हानिरित्यस्य तथ्यस्य ज्ञानं ज्ञायते । हरिद्वर्णाः रश्मयोऽस्य पुरतो यान्ति पश्यन्ति च जनाः दूरादागच्छतो जनस्य शिरोरुहान् यथादौ अत एवैते तस्य केशस्थानीया इति सूयते । अन्यस्थानेन वचनेन प्रकाशवर्णेषु हरितो मध्ये स्थितिः विज्ञायते ---- अनुदितसूर्यस्य सवितृ भवात् ----- यदधुना न्यूटनाविष्कृतमुच्यते ( ३।४४।३,१०।१३९।१)। दिवि भ्राजमानोऽयं लोकत्रयं दिशो विदिशश्च विकाशयति । रायो बुध्नः , वसूनाञ्च संगमयिता सविता शचीभिः विश्वरूपाणि प्रकाशयति। सत्यधर्मासौ इन्द्र इव धनसंगरे संतिष्ठति । अस्य रश्मीणां योगैः सुलभा भवति सन्निप्राप्तिरित्यर्थः ( १०।१३९।२-३)।

दुरितानां कुप्रभावाः अस्य रश्मिचिकित्सया ध्यान योगेन वापनीयन्ते विरश्मिः मन्त्राणि च दृश्यन्ते ( ५।८२।५)। न्यूनाधिकप्राधान्यरूपेण हरिद्वर्णाः रश्मयो विविधतनिकशानेषु प्रयुक्ताः भवन्तिस्म तदानीं यंत्रचिकित्सा क्षेत्रे चैतेषां प्रयोगैः भौतिकसुखाय धनानि विभाज्यन्ते स्म। अत आम्नायते ---- विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम्। यजु: ३०।४ ।

तमसावृतान्तरिक्षेण गच्छन् मर्त्यामर्त्यान् स्वेषु स्वेषु कर्मसु नियोजयति याति च हरिण्यरथेन भुवनानि पश्यन् । हिरण्यजिह्वः सविता शिवाद्भपायुभिः ( रश्म्याधानप्रत्याधानक्रियाभिः) गृहरक्षणार्थं प्रार्थितो भवति ( यजु: ३३।४३,६९)। वृष्ट्याशां पृथिवीं तुदयति । अन्तरिक्षस्थानां मेघानां गतिं मन्दीकृत्य अश्व इव ताः अपो दोग्धि सवितुरभ्यालिखयन्त्रः ( १०।१४९।१-२)। अनुखं, परिखं , परिवादं, परिवावं, रिक्तकुम्भात् रक्षात् अन्यांश्च देशात् परासुवते सविता। तद्गृहीतविद्युच्छक्त्या आर्क हरिद्वर्णैस्तुधातूनां योगेन निर्मितं वस्त्रं धृत्वा जनो दुष्टेष्वपि लोकेषु संचरति स्म पुरा परं न बबधुः तं दुष्टसत्त्वाः तत्रस्थाः। अत आम्नायते ---- अथर्वे

एतत् ते देवः सविता वासो ददाति भर्तवे ।
तत् त्वं यमस्य राज्ये वसानस्तार्प्यं चर ।। अथर्व १८।४।३१ ।।

नात्र प्रेतो मृतात्मा भवति अपितु भौतिकशरीरेण सह लोकान्तरात् दृष्टुं गतो जन उच्यते। विश्ववारः सविता जीवानां कृते स्वमण्डलान्तः पतिनो द्विवो धर्ता   ( क्षेत्र नियन्ता) अस्ति । शक्तिप्रदमेनं पुरोहितो याचते शक्तिं यजमानाय येनासौ यागपर्यन्तं सोमसंरक्षणे प्रयत्न परो भवेत्। जीवनधारकतत्त्वानां यद्वा नानाविधलोकानां वातर्द्वीनभिक्षुः सर्वेभ्यो भयेभ्यो रक्षति जनान्( १०। १२८[७]-१४९[४-५] पृथुपाणिः सविता विश्वहिताय उदितः सन् रश्मिबाहून् प्रसारयति । अस्य व्रते तति आपः आस्यन्दन्ते वायुश्चान्तरिक्षे रमते । तापो वै तयो हेतुः( २।३८।२)।

यथा उषापूर्वोदयान्तर्वर्ती सूर्यः सवितेत्युच्यते तथैव ( २।३८।३-४) अत्र सूर्ये अस्तं गते यामिनी तिमिरागमनात् पूर्ववर्ती प्रकाशः सवित्रा कृत इति मन्तव्यः। अत एव श्रूयते यदस्तं गच्छन् सविता आशुभिः रश्मिभिः विमुक्तो गच्छन्तं जनं उपरमयति।

सवितरि गते लोकोऽपूर्णं कर्म निदधाति उदिते च तदेव कर्तुं पुनरुत्तिष्ठति इति भाव:। विनयामिन्यो: पुरस्तात् गच्छति विसर्जनेन: सवितेत्यन्यत्राप्याम्नातो (५।८२।८)। अपि च नरपशुपक्षिण: सवितरि गते स्वानि कर्माणि त्यक्त्वा सुखवासहेतो: गृहान् प्रति गच्छन्ति ( २।३८।६-८)। सविता वै प्रसवानामीशे (ऐब्रा ०१।१६, ७।१६)। अस्य प्रसवाख्यं व्रतं मित्रेन्द्रवरुणादयोऽपि न मिनन्ति ( २।३८।६)। एकस्मिन् काले एक एवादित्यो वर्तत इत्यर्थ:। भगो बहुप्रशस्य सविता स्वजनान् वाजयन् पशुधनै: संगमयति ( २।३८। ११-१२)। सकलभुवनाय ज्योति: कृण्वन् सविता ऊर्ध्वकेतुं भानुमाश्रयति। ऊर्ध्वगैररश्मिभि: ज्ञायते इत्यर्थ:। प्रजापति: सविता पिशङ्गं द्रापिं प्रतिमुञ्चते । आकाशे दृश्यां पिशङ्गतां अपाकरोतीत्यर्थ:। स्वमहित्वेन लोकत्रयव्याप्त्याऽयं उष्णवर्षाहिमाख्यै: त्रिव्रतै: भूतानि परिपालयति। त्रिषु कालेषु पशुसुतद्रव्यात्मकं धनं याचते बृहत्सुम्नं सवितारं यद्वा प्रजावन्तं रयिमिच्छन्ति ( ३।५६।६-७,४।१४-५३ ))।[२ २,५,७]

रथस्पति: अन्नो सविता विश्वानि रूपाणि आत्मनि धारयति । विविधानि जीवपदार्थरूपाणि तत्कृतान्येवेत्यर्थ: । वरेण्योऽयं द्विपदे चतुष्पदे च भद्रमनुजानाति यजमानार्थञ्च स्वर्गं प्रत्यापयति । एतशवर्णोऽयं देव: स्वमहत्त्वेन पृथिव्यादीन् लोकान् प्रकाशयित्वा पृथक् पृथक् दर्शयति । अनन्तरञ्च रोचमानान् द्युलोकान् गच्छन् असौ सूर्यरश्मिभि: सह संगच्छति । धर्मभिरसौ मित्रदेवो भवति उतापि च ~~सूर्य~~ पूषा देवो भवति। अस्य स्वराज्यं प्रियं यश: कोऽपि न मिनति ( ५।८१-८२)।[२-४ २]
यथा रथ: आणिश्रितो भवति तथैव चन्द्रादीनि ज्योतींषि सवितारमधिगम्य वर्तन्ते। अस्यासुरस्य गभीरवेपा:सुपर्णा: रश्मयो लोकत्रयं प्रकाशयन्ति। विज्ञानसम्पन्नरश्मिवेपनम्। (१।३५।६-७)। अत्र रश्मिप्रसङ्गे श्री सायण:पञ्चदशरश्मि नामानीति पठति । अनेन तेषां तात्त्विकमेकज्ञानं सूचितं भवति। तेषु द्वादशनामानि तु पुराणेषु श्रूयन्ते नान्यानि। सुमृडीको हिरण्यपाद: सविता रोगान्, रक्षांसि यातुधानाञ्च नाशयति स्वप्रभावेण ( १।३५।६-१०) । अप्रकाशितकिरणकालेऽपि पूर्वं स्वप्रभया रोगाणून् नाशयति यद्वा तत्प्रभाप्रभावमात्रेण केचिद् दुष्टा: कीटाणवो नाशमनुभवन्ति इति भाव:। सविता हिरण्मयीभुजौ प्रसमुद्यमयति कर्मप्रेरणया च प्रेरयति रत्नानि

अन्यानि धनानि च दिनं दिनं स्वजनेभ्य:। अतुवन्तं जास्पतिमेनं मित्रादयो देवा: अपि गृणन्ति। जनेभ्यो धनानि दधान: सुरक्षोऽयं रात्रिषु भूतानि स्वगृहेषु स्थापयन् अह:सु च कार्येषु नियोजनयन् आगच्छति आहूते सति । ( ६।७१।६, ७।३८–४५ )। [1] सुक्रतु:, रक्षो विधारणे स्थित: सविता घृतपूर्णौ पाणी अभिप्रेरयति वृष्ट्यर्थम् । द्यावापृथिव्योर्मध्ये स्थितं सर्वं वस्तुजातं रमयति आत्मप्रकाशेन सविता । (६।७१ ।१,५ )। ऋभूणां देवत्वं सविता दत्तवानस्ति ( १।११०।३)।

रत्नधाम: सविता हिरण्मयीमभ्रिं हस्ते गृहीत्वाग्ने: ज्योति: पृथिव्या: खनति ( यजु: ११।११)। अत्रानेन वचनेन रविरश्मिभि: पृथिव्या: प्राकृतिकतैलधन-निष्कासनं सूचितं भवति। अथर्वज्ञा: सवितारं विश्ववारां सुचित्रांसत्यसवां सहस्र-धारां मतिं[1] याचन्ते ( अथर्व ७।१५ )। तैत्तरीयब्राह्मणे सविताभूत्वा प्रजापति: सर्वभूतानि ससर्ज[1] ( १।६।४।१ )।

## स्थाननिर्णय: स्वरूपविचारश्च

नैघण्टुकेऽयं देवो द्युस्थानीयदेवेषु अन्तरिक्षस्थानीयेषु च देवेषु अस्ति । निरुक्ते ( १०।३२) यास्क एनं मध्यमस्थानीयेषु देवेषु पठति--- वृष्टिहेतुत्वात् । सूर्य एव सवितृदेव: इत्यप्यस्य मतमस्ति[2] । अस्य मतस्य आधार: सम्भवतोऽयं मन्त्रोऽस्ति।–

याति देव: प्रवता यात्युद्वता याति शुभ्राभ्यां यजता हरिभ्यां ।
आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमान: ।। १।३५।३ ।।

अत्र सूर्यो वै सवितेति सुस्पष्टमस्ति। अस्ति यद्यप्यत्र ( १।३५।३) सवितृसूर्ययो: एकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावोऽवबोध्य:(१।३५।६)। भगोऽपां नपात्, प्रजापति: इत्यादीनि पदानि सवितु: नामानि न सन्ति । तानि तु विशेषणानि सन्ति ( ( १।२२।६, ४।५३।२, १०।१४६।२), आप०श्रौ०२३।२)।

---

१ वेबर: ओमिना एन्ट पोर्टेन्टा , ३८६, ३६२।
२– सुक्षी रौथ: निरुक्ते जर्मन भाषायां प्रस्तावना १४३ ।।

उषासूर्योदयकालयो: मध्ये रवि: सवितेत्युच्यते इति यास्क:( निरुक्त १२।१२)। परमियं धारणा ऋग्वेदविरोधिनी अस्ति( २।३८।६-८, ५।८२।८)। पाश्चात्या: यास्कमतस्य तुलना उदयात् पूर्वं ध्वनिविशेषं करोतीत्यनेन जर्मनविश्वासेन सह कुर्वन्ति । परं नास्त्यत्रापि कश्चित् साम्य:( टीनी० अर्मा० ४५, ग्रिम: टायटश मिथो० ४पृ० ६०६, ६२१)। सूर्यसिद्धान्तो यास्कमतमनुसरति तत्र च ----

परं ज्योतिस्तम:पारे सूर्योऽयं सवितेति च ।

पर्येति भुवनान्येव भावयन्भूतभावन: ।। १२।१६ ।।

विश्वस्य जन्यासु गतिषु प्रमुख:, महत्त्वपूर्णगतिप्रतिनिधि, गतिजीवनप्रेरकत्वे सूर्याय प्रयुक्तेयम् उपाधि: इत्युक्तं भवति अनेन वर्णनेन, परं सूर्याद् वैविध्यत्वात् अयमेव अपेक्षाकृतधिकोऽमूर्तो देवोऽस्ति। ऋषिदृष्टिषु सविता सूर्यस्य मूर्ति मूर्तिकृता दिव्यशक्तिरस्ति सूर्यश्च स्थूल देव: ( तुजी० १,३५-१२४ )।[६][१]

सवितृ प्रेरणाया: अमूर्तधारणाया: प्रतिनिधित्वं करोति । अस्य चरित्रे[१] सूर्य:, तत्सम्बन्धिनी धारणा वा प्राय: गौणरूपे एव संयुक्तास्ति । परं तन्न तथा । यतोहि--- सूर्योदयात् पूर्वदृष्टा अस्तं गतस्यास्य न दृष्टा आभा सवितेत्युच्यते । सा आभा दृष्टिविषया प्रत्यक्षतया दृश्यते । अत एवासौ प्रेरणाया: अमूर्तधारणाया: प्रतिनिधिरिति तर्कसंगतं न प्रतिभाति ओल्डनवर्गमतम्( धर्म-वेदपृ०६४-६५) अस्य चरित्रेण सह सूर्यसम्बन्धविषये पाश्चात्यानां गौणताया: आरोपोऽपि सर्वथा महत्त्वहीन एवास्ति । यतो हि अनयो:( सूर्यसवित्रो:) कारणकार्यसम्बन्धो वर्तते । जना: कार्यं वीक्ष्य तदेव प्रशंसन्ति, न तत्कारणम् । अत एव सवितृवर्णनप्रसङ्गे सूर्यशंसा न श्रूयते । वस्तुत: सविता प्रेरको देवोऽस्ति न प्रेरणाप्रतिनिधि: । एलाइन डेनियल कथयति यत् सवितृ रहस्यात्मक: शब्दोऽस्ति --- पुरोहितोक्तमन्त्र:,यतो रविरुदयति। पृश्निश्चास्य पत्नी भवति( प्रकाशरश्मय:) (हि०ड्रु०पृ०१२५)। सुस्पष्टमेव सवितु: भौतिकाधारो स एव नेयं कल्पना युक्तियुक्ता ।

---

१ मैक०: व०ए० सो०२७,९५१-२, श्रोडर:वी ओ०६।१२५ ।

व्युत्पत्ति:

श्री घाटे महोदय: सवितृपदं ' सु ' धातो: निष्पन्नम्, श्री वेंकटाचलस्तु ' सू ' धातो: निष्पन्नमिति मन्यते( घाटे :ऋ०व्या०पृ०१७५) वें०वै०पुरा०पृ०६२)। सुवति प्रेरयति कर्माणि लोकमिति सविता ( दीना०ऋ० धर्मा० ५।१७३ )। यश्चराचरं जगत् सुनोति सूते वोत्पादयति स सविता परमेश्वर: ( दया०: स०प्र०पृ०७)। श्री शर्मणो मतेन सवितापदे ' षू ' प्रेरणे ( तु०प०से०) धातु: एव अभीष्टोऽस्ति । न च ' षु ' प्रसवैश्वर्ययो: ( भ्वा०प०अ०) ' सवति ' इत्यस्य प्रयोगो न च ' षु ' प्रसवैश्वर्ययो: ( अदा०प०अनि०) ' सौति ' इत्यस्य प्रयोग:, न पुन: षूङ् प्राणि-गर्भविमोचने( अदा०आ०से०) सूयति इत्यस्य प्रयोगो यद्वा ' षुञ् ' अभिषवे (स्वा० उ० अनि०) सुनोति इत्यस्य प्रयोगोऽभीष्ट: अस्ति। ( दीना०ऋ० धर्मा स०५,पृ०१७५)। श्री दयानन्दस्तु षुञ अभिषवे, षूङ् प्राणिगर्भविमोचने चेत्येताभ्यां धातुभ्यां सवितापदं व्युत्पन्नमिति मन्यते ( स०प्र०पृ०७) ।साम्बपुराणे ' अवेति रक्षणे धातु: अवनात् सविता स्मृत: ( ६।२५)।

उषाः

प्रकृतिसुन्दरी

त्रिगुणितदशसूक्तै: स्तुता उषा देवता मूर्तिमती वैदिककाव्यसुन्दरी अस्ति। या यावती मोहिनी स्वप्राकृतिकरूपदर्शनेन प्रतिभाति ततोऽपि अधिका मोहिनी स्वकाव्य-शरीरसौन्दर्येण भवति । अस्यै समर्पिते काव्ये उपमारूपकादीनाम् अलङ्काराणाम् अलङ्कारा: उषादेवीम् अप्यलङ्कुर्वन्ति। पूर्वस्यां दिशि उदितोषस: शोभा एतेषु

१-२,४ ५,११

मन्त्रेषु दर्शनीयास्ति --- ( १।९२-१२४, ५।८०।३) क्वचित्सा चित्रवस्त्रावृता नर्तकीव वक्षस्थलं प्रदर्शयति ( १।९२।४ तु०की०६।६४।२ )। क्वचित्स्नानोत्थितशुभ्रस्नाता कन्येव पूर्वस्यां दिशि मोहकं रूपं विवृणोति ( १।१२४।३-४)।

सम्बन्धा:

ऋग्वेदे प्राय: सा इन्द्रपुत्रीत्वेन श्रूयते ( ६।३०।५) । परं परवर्तिनि साहित्ये सा विवस्वतो भार्या ( ए० डाक्विस्ट: मैग० वर्क पृ०१०५-१०६)। उषा: पदस्य बहुवचना-त्मप्रयोगे विपर्ययं सन्दधान श्री आप्टे महोदय: कतिपयानां सम्बन्धं न पोषयति

सम्भवत इन्द्रेण उषा रथनाशप्रसंगम् अनुसृत्य ( उ०क० १८७६,पृ०२०।६६)। उषा
मार्गादित्यस्य सवितुश्च भगिनी अस्ति ( १।१२३।५)। शतपथे ब्राह्मणे वा प्रजापतेः
पत्नी कृष्णाणान्न मातेति श्रूयते ( गु० + महा०: अनु०पृ०१०७)। श्रीमद्भागवते
विभावरी: पत्नीयं व्युष्टादीनां पुत्रत्रयाणां जननी स्मृता ( ६।६।१६)। विष्णु-
पुराणे वा त्रपदनिर्मितेति श्रूयते ( १।५(४६)। विष्ण्वादित्यचरणजेति भाव: ।
२२ १
दिवस्तनैष्यं तस्य प्रियापि भवति ( १।३०-४६, मुईर: सं० मु०उ० ५।१६०)। रात्रि-
भगिनी उषा सूर्यस्य पत्नी माता वा भवति ( ४।५।१३,७।७५।५, मैक० तत्रैव पृ०६५)।
त्रिंशत्स्वसार उपयन्ति निष्कृतम् ( तै०सं० ४।३।२।६)। अत्र श्री दा० सातवलेकरो
विचारयति यत् ध्रुवीयदेशेषु पञ्चमासिक्या: रात्रे: अनन्तरं मासैकपर्यन्तम् उषाकालिक-
स्थिति: वर्तते , अत एवमाम्नायते त्र ( दै०सं०पृ०२४)। परं नैतदुपयुज्यते यतो हि-

## वैदिकी उषा ध्रुवीयोषा नास्ति

वेदेषु उषा अजरामरा च स्मृता ( १।११३ ।१३,१५) । ध्रुवीयोषा
तु पंच मासेभ्यो दृष्टा भवति । वैदिकी उषा चक्रमिव परिभ्रमणशीलास्ति नित्यनवीना
च ( ३।६१।३)। ध्रुवीया तु वर्षे मासैकभासिनी एवास्ति। वेदसूक्तै: उषावृत्तै: अपि
अस्य पण्डितस्य मतं किञ्चिद् बलं लभते । तथा हि---- उषा गवामिव तमोद्वारम्
उद्घाटयति ( १।९२ ।४)। यदा सात्मानं प्रकाशयति तदा पक्षिणो नीडेभ्य उत्पतन्ति
(१।१२४।१२)। सा पञ्चजनान् उद्बोधयति ( ७।७९।१)। येषु ध्रुवदेशेषु मासिकी
उषा भासते तेषु न तु पंचजना: निवसन्ति न च नीडेषु पक्षिण:। न तत्र भवन्ति
गाव: । वेदसूक्ता उषा सर्वथा भारतीयास्ति । त्रिंशन्मासदिवसेषु जाता उषादेवता:
एव उषादेव्यो भगिन्यो भवन्ति। एकस्य मासस्य दिवसेषु ऋतुतापदृष्ट्या प्राय:
साम्य एव वर्तते यदि कोऽपि प्राकृतिक: प्रकोपो न जायते । अत: सर्वा उषादेवता:
समानरूपा: भवन्ति । सम्भवत: ' त्रिंशत्स्वसार ' उषोतीयं श्रुतिरेव पश्चाद् द्वादशा-
दित्यानां जननी बभूव ।

## रथवर्णनम्

रथजातोषासो रथो देदीप्यमानो बहुषु सुसज्जित: उज्ज्वलश्च अस्ति
७ १० २
( १,२३-४८-४६,३,६१ ।२)। यत्र इयं शारथा उष्यो तत्रास्या: न्यूनप्रकाशकत्वमवगन्त
व्यम् ( १।४८।७)।

## अथकर्माणि

तत्र प्रथमं दानकर्म । अश्वावती, गोमती, विश्ववुविदुषा प्रजानां सुखावासाय भवति। सा मघोनी जनेभ्यो धनानि प्रेरयति। दानवती सा ताइ नानाधनै: तर्पयति। ( १।४८।१-२,१२ ; ३। ६१४) । विश्वान् देवान् उषा सोमपीतये अन्त - रिक्षाइ आवहति निदधाति च सुवीर्यमन्नं जनेषु सा जनेभ्य: सुपेशलं सुगम्यं रयिं, हिंसकरहितं विस्तीर्णं गृहं ददाति। स्वजनान् इयं देवी बहुरूपै: बृहद्धनै: गोभि:, अश्वैरिहिंसकेन यशसा वाजैश्च संयोजयति ( १।४८ १२-१६ )। जनस्तुता भास्वती सूनृतानाम्न नेत्री सा वीरदासाश्वधेनुफलिताइ वाजान् प्रददाति। सुजाता मर्त्यैत्रा उषा नृभ्यो भागं विभजति ( १।६२-१२३ ७-८ ३ )। अस्यां वेलायां जाग्रत: प्रिया वाइ पुरुषाः नानधनानि उपैति इति भाव: ।

## अथास्या: प्रेरणकर्म

उदीयमाना उषा देवता पदं न कामयते । अस्या आगते सति क्रियाशीला: पुरुषा:, अर्थिनो, विहगाश्च स्वव्यापारे व्याप्ता: भवन्ति ( १।४८ ६ )। निममघोणा विश्वस्य प्राणिनां प्राणानां चेष्टानाम्न आधारभूतास्ति ( १।४०।१०)। विश्वानि भूतानि प्रकाशयित्वा प्रत्यङ्मुखी सती योषा स्वतेजसा विभाति। सा प्राणिजातं व्यापारेषु प्रवर्तनाय प्रबोधयति। यथा पालक: पशून् सिन्धुर्वा जलानि निस्सारयति तथैव रविरश्मिविशोभिणा याजकान् यज्ञेषु प्रवर्तयति ( १।६२।६,१२)। सुकृते सुदानवे च यजमानाय इषं वहन्ती: उषादेवता: युगपदेव स्वतेजोभि: नभप्रदेशं पूजयन्ति । विश्वस्मै: भुवनाय ज्योति: कृण्वती उषा, यज्ञेषु यथा स्वरुयुक्तं यूपं अध्वर्यवोऽ-जन्ति यद्वत् नभसि स्वकीयं रूपं संश्लिष्टं करोति अनन्तरंच चित्रं सूर्यमसेवत ( १।६२।३,५ नभसोऽन्तान् प्रकाशयन् स्वद्वारं रात्रिमपाकरोति। स्वगमनागमनाभ्यां मर्त्ययुगानि हिंसती उषा स्वप्रकाशेन विभाति। यथा श्वघ्नी पदार्थकर्तनेन पणिणामायूंषि दापयति (१।६२।१०-११)। प्रतिदिनं यज्ञगृहं गत्वोषा वसूनां श्रेष्ठं भागं भजते । एकरूपानवद्या सा मेरुवलयं प्रतिदिनं सेवते । सा सदैव सूर्यस्य पुरत: त्रिंशद्योजनानि गच्छति । भास्करभानुभि: सार्धं सा तमोनिवारणाय प्रयतति ( १।१२३।४,८,१२)।

विश्ववारामृतस्य केतु: उषा विश्वानि भुवनानि प्रत्याभिमुख्येन प्राप्नोति (३।६१।३)। सुभगोषा सर्वं प्रकाशयित्वा द्वेष्टॄन् शोषयितॄंश्च अपवर्जयति। विभावरि उषा स्तुतिप्रियामर्त्या चास्ति यां कोऽपि मर्त्यो भोगं दातुं न ईश्ते। अस्याया: चित्रारोचमानाया: स्वरूपं बोद्धुं जना: अशक्ता: सन्ति ( १।३०- २०-२१ ४८)।

## नानाविचारा:

श्री म०म० कुन्ते महोदय: इमां देवीं कृषियुगस्य ( तद्गुणे जातेति) मन्यते यतो हि कृषका: प्रात:काले एव विशेषेण क्रिया शीला: भवन्ति (वि०आ० पृ०४३)। श्री मिश्रो महाशय: सरमा, सरण्यू, उषस्, दहना, वृषय:, अर्जुनि चेति नामानि उषाद्देवताया एव मन्यते । अयं मनीषी चिन्तयति यदुषाशब्द: सूर्यस्य त्रिभूणां स्थितीनां व्यञ्जकोऽस्ति ---- उदयास्तमध्यस्थितीनाम् । तथापि असन्तुष्टोऽयम् उषादेव्य: सरण्योर्वा सूर्येण सह कोऽपि सम्बन्धो न पश्यति , चिन्तयति च यदस्या: सम्बन्ध: तद्युगीनै: दार्शसंस्कारै: सहासीत् ( रा०ला०भा०आ०पृ०१६०,४३४)। आर्याणां ' पश्चिमी- एशियादौ ' आगमनात् प्रागपि उषा तेषाम् उपासिता देवी आसीद्, या ग्रीकाणाम् ' इओस', रोमवासिनाञ्च ' अरोरया ' सह तुलनीयास्ति इत्येवं चिन्तयति वेबर:( हि०वि० २।५३६)।

## व्युत्पत्ति:

वस् धातो: निष्पन्न उषाशब्द इति श्री सोन्नी ( कु०ली०१०।४१६)। परं तन्न तथा । क उषा = उष् + । उष् + असि = उषस् ।इति संस्कृत हिन्दी- कोशे श्री वामन शिवराम आप्टे ।

## अजएकपाद

## श्रुतिस्थिति:

नास्त्यस्य देवस्य स्वतन्त्ररूपेण एकमन्त्रोऽपि निखिलु वेदेषु । अस्य नाम्न उल्लेख: ऋग्वेदे षड्वारं प्राप्यते ( १०।६५।१३) अस्मिन् मन्त्रे एव अहिर्बुध्न्यं

विना सौ दृश्यते, अन्यत्र तेन सहेति । यजुर्वेदे अथर्ववेदे च एकैकवारमस्य प्रयोगोपलभ्यते । अथर्ववेदे ( १६।११।३ ) अत्र तु ( ७।३५।१३) अस्य ऋग्वैदिकमन्त्रस्य आवृत्तिरेवास्ति ।

कर्मीवासस्वरूपविचार:

स्वतन्त्रमंत्राभावे अस्य देवस्य कर्मस्वरूपोल्लेखो नावगम्यते। अनेन कृतकर्मणो निर्देश: ( १०।६५।१३) अत्र क्रूयते , यदनुसारंचा सौ दिवं धत्ते ।अथर्ववेदे अज एकपाद स्वकीयेन बलेन रोहितोत्पन्ने द्यावापृथिव्यौ दृढीकरोति ( अथर्व०१३।१।६)। एत एव अस्य आधारतया अत्रैव ज्ञायेते ।अनया श्रुत्या तत्र तत्र अस्य व्याप्ति:सूचिता भवति । अग्निर्वै सर्वव्यापको दिवो धारको वा, अत आभ्यां श्रुतिभ्याम् अस्य सूर्यात्मकत्वम् अग्निमयत्वं वापि इङ्गितं भवतीति वक्तुं शक्यते । तथा च आम्नायते ----- (यजु:५।३३, तै०ब्रा० ३।१।२।८, निरुक्त १२।२६)। नैघण्टुकेऽयं द्युस्थानीयेषु देवेषु एकोऽस्ति । अनेनापि सम्भवत: तस्य सूर्यात्मकत्वमेव अभीष्टमित्यनुमेयं भवति । श्री मैकडानलस्तु द्वौ मन्त्रौ (१०।६५-६६ ) १३ ११ उद्धृत्य अज एकपादम् एका वायवीयदेवतेति मत्वा अन्तरिक्षस्थेति कथयति ( तत्रैव पृ०१३६ ) परं नात्र निर्दिशति कश्चिद्धेतु: स्वपक्षे, न चापि मन्त्राभ्यामेव भवति सम्पुष्टि: तस्य मतस्य ।

रोथग्रासमैनमहोदयौ एनं झंझावातप्रेरको मन्येते( व०क्रृ० व०स्था १ अज , तु०की०फै०अ०फा०१७,२४-५)। अस्य प्रेरणे सूर्यस्य हेतुत्वात् सम्भवत: तस्य सूर्यात्मकत्वमेव अभीष्टमत्रेति प्रतीयते । श्री ब्लूमफील्डो विक्टर हेनरी च अस्य वारिदेवत्वं स्वीकृत्य सम्भवत: तत्र अग्निमेव प्रतिपादयति ( पू०अम०४२।६६४,ला०रो० पे० १८६१,पृ०२४)। एकपाच्छागत्वमस्य देवस्य स्वीकुर्वन्त केचिद विद्वांस: एनं विद्युदिति कथयन्ति ( ओ०: धर्म-वेद ७१-२, बेबर भा० १।६६ )। परन्तु न दृश्यते विद्युति अजत्वम् -- अजन्मत्वम् छागसादृश्यं वा ।

अस्य सूर्यत्वम्

अज एकपाच्छब्दौ समानरूपेण एकदेवस्यैव द्वे भिन्नविशेषणे स्त:। अत एव न सम्भवत्यत्र अजस्य छागार्थे प्रयोगोऽपितु तत्तु कस्यचिद् अजन्मनो देवस्य व्यञ्जकोऽस्तीत्येव

सम्भवति । एकपाद पदेन तस्य तीव्रगतिः अभिव्यक्ता भवति। यद्वा वर्तुलस्य चक्रचरणे एका परिधिरेव तस्य एकपादत्वेन व्यावहार्या भवतीति । अतः अज एक पाद् सूर्य इति वक्तुं शक्यते तथा च तैत्तिरीये ब्राह्मणे (३।१।२।८), दुर्गाकृतनिरुक्तटीकायां वा( १२।२९)। हार्डीमहोदय एनं चन्द्रमेति कथयति ( वै० म० ४१-२) परं तन्न सम्भवति -- तस्मिन् द्यावापृथिव्योः धारकत्वाभावात्। सूर्यस्तु लोकधारकत्वम् आवहति अतः स एतामुपाधिमर्हत्येव। श्री सायणाचार्यस्तु ( २।३१।६) अत्र ' अज एकपात्संज्ञकः सूर्य ' इति स्पष्टतयैव कथयति ।

## अस्य वृद्धिः

अहिर्बुध्न्येन सह अज एकपादपि हविषा वर्धते ( पार०गृ०सू०२।१५। २)। अन्यादिभिः समस्तैः शोभनाह्वानैः स्तवभिः वृद्धिमधिगच्छति (१०।६४।४)।

## सायणमतम्

सायणकृतेन अस्य नाम्नो विग्रहेण अपि वर्ण्यस्य देवस्य सूर्यप्रतीकत्वं सिद्ध्यति। यथा हि --- न जायत इत्यजः, एक एव पद्यते गच्छतीति एकपाद (१०।६५।१३) यद्वा एकोऽसहाय एव पतति गच्छतीत्येकपाद्( १०।६४।४)।

## अस्य रुद्रत्वम्

महाभारते अज एकपाद् एकादशरुद्रेषु एकोऽस्ति ( शान्ति० २०८।१९)। असौ ब्रह्मणः पौत्रः पुत्रश्च स्थाणोरस्ति ( आदि० ६६।१-३)। हिरण्यो रुद्रो अजैकपादेनेत्यप्यत्र श्रूयते ( उपांग ११४।४)।

## मरुद्गण:

### ऋक्सूक्तसंख्या :

शोभनभावसमन्वितानाम् अनिन्द्यानां मरुतां कीर्तिः (५।५५[३-४]-६१[१३],यजु:१७।८०) ऋग्वेदस्य द्व्यशीतिमन्त्रोपेत त्रिंशत्सूक्तेषु स्वतन्त्ररूपेण, षट्सु इन्द्रेण सह, दशसु मन्त्रेषु अग्निना समम्, अन्यैः सार्कच द्वाचत्वारिंशन्मन्त्रेषु श्रूयते। अथर्ववेदे द्वयोः सूक्तयोस्त्रयोविंशतिमन्त्रेषु च स्वतन्त्ररूपेण, एकैके च मन्त्रे अग्नीन्द्रवायुपर्जन्यैः सह लभ्यते । यजुर्वेदे तु मात्र चतुर्विंशतिमन्त्रेषु प्राप्यते प्रख्याति, तत्रापि अधांश एव स्वतन्त्रतया । अनिश्चितैव प्रतिभाति तेषां सङ्ख्या । तथा हि--- अत्र (१।१३३।६) इन्द्रानुचराणां मरुतां सङ्ख्या एकविंशतीति प्रोक्ता । परं पञ्चमण्डलस्य अस्मिन्मन्त्रे (५।५२।१७) अन्यत्र च ( ८।२८।५, तैब्रा० २।२।११।१) तेषां सङ्ख्या एकोनपञ्चाशीति स्मृता । अद्यावधि सैव मान्याऽस्ति ।

### पृश्निमातरो मरुत:

रावैव अग्नीव वा पूज्यमरुतां प्राय: पृश्नि:( पृथ्वी) माता (१।२३[१०]-१६८[६]; ५,५८[५];७।५६।४-५;८।७।१०) रुद्रश्च पितेति उच्यते ( १।८५[१]-१६६[२];२।३४।२;७।५८।२)। यत्र गोमातृका: कथिता एते तत्रापि पृथ्वी एवाऽवबोध्या माता तथा च सायण: ( १।८५।३; ६।४८[२२]-६६[३];८।२०[८]-९४[१])। युक्तमेवैतद् यतो हि यदा भूमौ एक देशे तापो वर्धते तदा तत्रत्य वायु उत्तिष्ठति । एवं जायते तत्र न्यूनभारस्थिति: । अन्यत्र यत्र भवति अतिभार प्रदेशोऽपेक्षाकृत न्यूनतापत्वात् तस्मात् प्रदेशाद् प्रचलति वायु: न्यूनभारतप्रदेशाय । न्यूनभारदेशोऽस्थितो वायुश्च अतिभार देशेषु अवतरति। तथा च श्रुति-- (१।१६८[६]।४;५।५४[४]-~~१८७~~ ) । एवं एव तापभेदजो वायु: यदा समेधै: प्रचण्डवेगान्वितो भवति तदा मरुदित्युच्यते । पृथिवी एव तेषामाधार:, तस्या: पांसुपदार्था: भवन्ति तेषां केतव:। तयैव मातृवत् क्रियते तेषां पोषणम् ।, अत उच्यन्ते गोमातृका:।

यत्र ( १।८५।२) सायणाचार्यो भूमे: नानात्वत्वात् मरुताम् उत्पत्ति इति उल्लिखति तत्र भूमिभेदात् तापभेदत्वात् भारभेदत्वाद्वा तेषामुत्पत्ति इत्येव मन्तव्यो भवति।

गोमातरो मरुत:

अथवा गो रविरश्मयो: मातरो येषां ते गोमातर: । तापहेतुत्वात् सुत्पच्लोव तेषामपि मरुतां मातृत्वम् । अत्र (५।५२।१६) पृश्निनामिकां गां ( चतुष्पादेतुविशेषम्)मरुन्मातेति स्वीकरोति मैकडानल:(वैं०पु० अनु०रा०पु०१४७), परमत्र सायणाचार्य: चित्रवर्णां गां भुवेवतां वा। सूर्यो वै दिवो देवता प्रत्यक्षशक्ति-सम्पन्नत्वात् प्राणिनाम् उज्जीवकत्वाच्च । स एव गोशब्देन वाच्यो भवति चित्रवर्णत्वा-दस्य रश्मीणाम्। रविरश्मीणाम् एकस्मिन् एव स्थले गोत्वकथनेन न जायते कश्चिद्विरोधो जन्यजनकयो: अभेदत्वात्। चित्रवर्णै: रश्मिभि: सम्पाद्यते रविगो: पृश्निवर्णत्वम् । अत उच्यते वा चित्रवर्णेति ।यदा वर्णे रश्मय: प्राधान्यं भजते तदा समूहे एकवचनत्वात् त एव चित्रवर्णा पृश्नि: भवन्ति ।

प्रतीच्यमतेषु गौ

रौथादीनां पाश्चात्यविदुषां वचनैस्तु इयं गौ श्वलीकृतानां झंझावात-मेघानां प्रतिनिधित्वं करोति(तु०की०नि०१०।३९ ,रौथ पृ०१४५, वे०मी०कोश,व०स्था०)। एतेषां मतिमताम् इमां धारणां सम्भवत: अत्र ( १।२३।१२) इस्करात् विद्युतो दिवो मरुतामुत्पत्ति: जनयति अथवा बहुशो दृश्यते एतेषां सम्बन्धो मेघविद्युद्भि: सह ( १।६४।५;५।५४।२-३; ८।७।२५)। परन्तु इयं विचारधारा नि:सारैव प्रतीयते व्यवहाराभावात्वात् । यतो हि श्वलीकृतझंझावातमेघास्तु कथमपि मरुतां जनकत्वं नार्हन्ति । एतद्विपरीतञ्च मरुत एव सविद्युन्मेघानां हेतवो भवन्ति यदा कदा ।

पत्नी

अत्र (५।५६।८) सुरमणीयानि जलानि बिभ्रती रोदसी कथिता रुद्रपत्नी मरुताञ्च मातेति सायण:। आपस्तम्बो रुद्रपत्नीं मीढुषी संज्ञया व्यवजहार ( आप०गृ० २०।१-३)। अतोऽत्र ( ५।५६।६) मीढुषी भवति मरुन्माता ।मीढुष्टम शिवतमेत्यादौ दर्शनात् मीढ्वान् रुद्र: । तत्पत्नी मीढुषी( शिवतमा)। एतन्ना-मयोश्चा च सर्वथा रोदसी( पृथ्वी)। अतो द्वयोरपि स्थानयो:( ५।५६।८-६) पृथ्वी एव तेषां मातृत्वमर्हति ।

## गोपृश्निशब्दार्थविचार:

गोपृश्निशब्दयो: अर्थानां विषये सायणाचार्योऽपि स्थिरतां नानुभवति। तथा हि-- 'गोभि:' पदं 'गन्तृभि: गोमातृकै:' वा थे 'गोबन्धव:' पदञ्च 'गोमातृका:' अर्थे दृश्यते ( ८।२०।८) ।परमत्र ( १।८५।३) गोरूपा भूमिर्माता येषां तेगोमातर इत्यभिधाय आचार्य: स्वाभीष्टम् --विज्ञानसम्मतम्-- प्रतिपादयति । अपि च एकवारं ( १।३८।४) पृश्निं तन्नामा धेनु: स्वीकरोति । परमत्र ( ८।६४(१) गौ: पृश्निरूपा गौ उक्ता न च तन्नामा ।परं स्थानान्तरेषु आचार्यकृतां पृश्निशब्दस्य व्याख्यां दृष्ट्वा पृश्ने: चतुष्पद्गोत्वं न सिद्ध्यति, सिद्ध्यति च भूमित्वम् । तथा च श्रूयते --- नानावर्णेयं भूमि: पुरा गोरूपधराऽभीत् । तस्यां महेशो वृषो भूत्वा मरुत उत्पादयामास इति। यद्वा वृषरूपो रुद्र: पृश्न्या: गोशुक्रे निर्मले ऊधसि पयस उत्पत्तिस्थानेऽजीजनत् तथा च तैत्तरीयकम् ( २।२।११।४)।

तत्र पृश्निशब्द एतेषु अर्थेषु दृश्यते ----

अत्र ( १।२३।१०।८५।२) पृश्नि: नानारूपाया: भूमे: अर्थे वर्तते । प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमि:। श्रूयते च --- इयं वै पृश्नि:( तैब्रा०१।४।१।५) अत्र पुन: गोशब्दो गोरूपाया: भूमे: अर्थे दृश्यते । अनेन गौ पृश्निशब्दयो: अर्थसाम्यो ज्ञेयो भवति ।

अस्मिन् मन्त्रे ( १।१६८।९) तत्र पृश्नि: नानावर्णा देवी प्रोक्ता । अत्र च ( ५।५२।१६) शुक्लवता पृश्निवर्णा गौ: वा । शुक्लवताऽर्थे प्रसङ्गे सूर्यदेवताया: तस्या: रश्मीनां वा गोत्वं भाव्यम् इति। अन्यत्र ( २।३४।२,५।५८।५,६।६६।३) अन्तरिक्षार्थे माध्यमिकी वागर्थे वाऽयं शब्दो दृश्यते । अपि च भवत्यत्र ( ५।६०।५) सुदुघा पृश्नि: गोदेवता तन्नामा धेनुर्वा ( १।३८।४)। अथवा पृश्निशब्दस्य त्रयोऽर्था: भवन्ति --- गौभूम्यन्तरिक्षा:। अत्र अन्तरिक्षात्तु मरुतां तत्र वर्तनात्तेषां तत्पुत्रत्व-मुपचर्यते इति सायण:( ६।६४।१) --- मातु: यथा स्वगर्भे धारकत्वाद्वा। इतरौ च वादौ एव प्रकीर्तितौ ।

यत्र मरुत: पृश्न्या: ऊधसि अजीजनन् रुद्रस्तत्र गोरूपाया: पृथिव्या ऊधसि समुद्रेषु रुद्रो रुद्रात्मकोऽग्नि:( प्रचण्डांशुभवस्ताप:) मरुत:( वातवान् मरुत

अजीजनन् इति मन्तव्य:। तथा च तैत्तरीयकम् --- पृश्न्यै वै पयसो मरुतो जाता इति ( २।२।११।४)। अत्र पृश्न्यै पृथिव्या: हिताय तस्या: पयसोऽर्णवात् मरुतो जाता इति विज्ञानसम्मतोऽर्थ:। तथा चाम्नायते ---- पृश्न्या: पयसो मरुतो जज्ञिरे ( ६।४८।२२)। सिद्ध्यत्यनेन मरुताम् आर्तव वायुत्वम् । अन्यत्रापि

६ ५,८ ११ ४

श्रूयन्त एते प्रायो मेघविद्युद्भि: सह ( १।३८-१६८, ५।५४-५७, ८।७।२५)। अपिच च यथा द्यावापृथिव्यो सकृदेवोत्पद्येते एवमेव पृश्निरपि सकृद्दुग्धेन पयसा ( सर्वमरुत:) मरुतोऽजीजनत् ( ६।४८।२२)।

यत्र ( ८।८३।१) श्री मैकडानलो गां मरुतां मातेति ( तत्रैव पृ० १४७) उल्लिखति तत्र नास्ति मरुतां गो: वा कश्चिदुल्लेख:। अपि च नास्ति विद्युदट्टहासस्तेषाम् उत्पत्तिहेतु: यथा सो महाशयो विचारयति, अपितु अस्त्यत्र रोचान्तरिक्षात्तेषाम् अवतरणप्रसङ्ग ( १।२३।१२)। यो मरुतां शर्धस्तृता ( ६।३।८ ) अनेन वाक्येन मरुतामग्निजत्वं कथमपि न सिद्ध्यति न चात्रापि ( १।७१।८) ।यतो हि अत्र ( १।७१।६ ) `अग्नि: शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च अनेन वाक्येन यजमान: शर्धादिगुणविशिष्टं पुत्रमग्निं याचते न च मरुतो जनयति। सम्भवतो मैकडानले इयं मति: मरुद्गुणेषु शर्धादीनां बहुश: प्रयोगो दृष्ट्वा जायत। अन्यत्र मरुतो वायोरंशभूता इत्युच्यते यास् सो दिवो जनयति ( १।१३४।४)। दशम मण्डलस्य अस्मिन् मन्त्रे ( १०।७७।२) एत एव युदेवताया: अदितेश्च पुत्रा: भवन्ति। पुराणेषु ते दिति कश्यपयो: तनया: सन्ति( भा० ६।१८।६१, अ०पु० २०।१९-२२)।

## सिन्धुमातरो मरुत:

सिन्धुमातर: ( १०।७८।६,तु०की०पृ०९५) पदस्य विषये दृश्यते भिन्नता सायणाचार्यमैकडानलयो:( तत्रैव पृ०१४७) । पाश्चात्यमनीषी तु अत्र सिन्धु: माता येषां ते सिन्धुमातर इति मत्वा सिन्धुं मरुतां मातास्वीकरोति, आचार्यश्च सिन्धूनां नदीनां मातरो निर्मातर: इति कृत्वा तान् वृष्टिहेतुत्वात् नदीनां निर्मातारो मन्यते। प्रसङ्गानुरूपमत्र द्वावपि विद्वांसो माननीयौ स्त: । सिन्धो: मातृत्वेन मरुतामार्तववायुत्वमेव सिद्ध्यति। मस्ता सह प्रजाता एते स्वाङ्गभूता: अपि श्रूयन्ते । कम्पनशीलास्ते पृथिव्याऽऽदिकं स्वर्गञ्च अभिलक्ष्य अपि प्रादुर्भवन्तीति ( १।१६८।२,५।८७)। अपि च

वपामूर्तय इव वधूसमन्विताः यद्वा वन्दनीया गाव इव वृष्ट्युदकस्य वेकारः स्थिरा— काशे प्रादुर्भवन्ति। वृष्टिमुद्दिश्य सञ्जाताः सर्वे एते श्रेष्ठजन्माः, सुजन्माः, सह जन्मा :, सर्वैः सह यद्वा इन्द्रेण सह जन्माः सन्ति ( ५।५४[३]-५५[३]-५६[७]-५७[२],७।५६।१२)। एते आभूषणा—दिभिः सह जायन्त इत्यपि ( १।३७।२) श्रूयते । अथवा अंसेषु ऋष्टिभिः साकं मरुद्गणोऽन्तरिक्षात् स्वबलेन सार्धं प्रादुर्बभूव ( १।६४।४)।

## मानवत्वारोपणम्

मरुत्सु मानवत्वा—रोपणं क्षीणदशायां लभ्यते । तेषाम् अङ्गानि पर्वता इव दृढानि सन्ति ( १।६४।३)। दृढहस्ता एते बाहुषु स्तोतृभ्यो दातुं प्रभूतानि धनानि धारयन्ति ( १।३८[११]-१६६[१०] ) । अतः मरुतो तेषु ऋष्ट्यो दधिरे ( ५।५४[११]-५७।६) ।तेषां वक्षःस्थलानाम् शिरसाम्, दोषाञ्च बहुश उल्लेखो मिलति ( १।१६६।९-१०;२।३४।२,८; ५।५८।२,४)। आस्यैः शब्दयितारो मादनाश्च ते सुजिह्वासमन्विताः सन्ति ( १।१६६।११) । तेषां दंष्ट्राः अयोमयाः सन्ति (१।८८।५)।

मरुतां शब्दो धाष्टर्ययुक्तः दश विजयीशूराणामिव गच्छति ( १।२३।११)। मार्गे गच्छन्तस्ते सम्भूय ध्वनिमवश्यमेव कुर्वन्ति तांश्च यः कोऽपि शृणोति(१।३७।१३)। प्रचेतसां मरुतां गर्जनं सिंहा इव गम्भीरं भवति ( १।६४।८)।

## मरुतां प्रकृतिः

यद्यपि नृत्यन्तो रुक्मवक्षसस्ते स्वभावैः ऋजवो भवन्ति (८।२०।७,२२) तथापि समरेषु तेषां मनांसि क्रोधनशीलानि सन्ति ( ७।५६।८)। केना—प्यहिंसितास्ते इन्द्रस्य वरुणस्य वा ध्वजरूपाः सन्ति ( १।१६६।१;८।२५।११)। अत्र (१।१६५) इन्द्रमरुतां सम्वादेऽन्योऽन्यप्रशंसायाम् आत्मश्लाघायाञ्च दृश्यते । उपालम्भे एवमिन्द्रो मरुतोऽपि आत्मनां प्रशंसायां कथयन्ति यदस्माभिः युक्तैः सामर्थ्यै एवेन्द्रो भूरिकर्माणि कृतवान् न तु एक एव। अथवा शविष्ठास्ते इन्द्रादपि भूरिकर्माणि कृतवन्तः स्म इति ।

## महिम्ना द्यौरिव विस्तीर्णाः

परैरधर्षणीयेन बलेन युक्तास्ते सिंहा इव भयङ्कराः भवन्ति (२।३४।१)

तथापि ऋष्टिभिः विद्योतमानास्ते दर्शनीयाः श्रोकाः ( १।६४।२,५।५२।१३)। शोभनरूपाः वातत्विषो मरुतो महिम्ना द्यौरिव विस्तीर्णाः सन्ति ( ५।५७।४)। द्यावापृथिव्यौ, अन्तरिक्षयाः पथ्याः, वीरुधाम्नो मेघाः पर्वताः वा सर्वे: मरुद्भिः व्याप्ताः सन्ति ( ५।५४।९)। अपायास्ते रथाङ्गच्च इव ज्येष्ठकनिष्ठ भावरहिताः
४ ५ ६ ५
सन्ति ( ५।५७-५८-५९-६०)।

## काश्चिद् उपमाः

५ १० २
कम्पनकारिणो मरुतः प्रकृत्या उग्रा, ओजसा अधृष्ट्याः (१।१९-२३-६४) भूत्वापि अश्वा इव वेगवन्तो दर्शनीयाश्च भवन्ति ( ५।५९।३) अथवा रुरु इव चित्राणि ( १।६४।८)। अपि च यज्ञोत्सवस्य द्रष्टारो मनुष्या इव, यद्वा हर्म्यस्थित-कुमारा इव शोभमानास्ते वत्सा इव क्रीडमाना उदकस्य धारयितारो भवन्ति (७।५६।१६)। वक्र्य इव अधर्षणीयाः, विन्ध्यादय इव व्योम्नि वर्तमानाः मरुतो निन्दकस्य दुर्धराः भवन्ति ( ५।८७।२,६)।

## अमरत्वप्राप्तिः

इन्द्र इव मरुतोऽपि पूर्वं मनुष्याः आसन् अमराश्च बभूवुः पश्चात्सुकृत-विशेषेण ( १।३८।४;१०।७७)। रोचमानास्ते चन्द्रवर्णाः, अग्नितप्तताम्रादिवर्णा इव वा प्रदीप्ताः भवन्ति ( १।१६५।१२;५।६१।१२;८।७।७ )। विद्युतो भान्ति तस्मिन् काले इत्यर्थः। अन्यत्र दीप्ताग्नय इव, दुर्दर्शनीयास्ते भ्रान्तौ (२।३४।५; ५।५५।४;७।५९।११;१०।७८।२-३)। तेषां दीप्तिः अबाधास्ति ( १।१७२। १)। अत्रैव "अहिमान्यवः" पदं सर्पाणां तेजस्विता कान्तिर्वार्थे स्वीकरोति मैकडानलः ( तत्रैव पृ०१४८) , यन्न सम्भवति तेषां कृष्णत्वात् । तेजस्तु नायतोऽनेन विरोधः। अपि चानेनार्थेन मरुद्गणस्य मेघत्वं सिद्धं भविष्यति, यच्च कथमपि न सम्भवति ।

## मरुतां तेजांसि

चित्रभानवो मरुतः सूर्य इन्द्रेव वा तेजस्विन उच्यन्ते (५।५९।३;१०,७७।३; अथर्व०१।२६।३;२०।७०।३)। सर्वे समानतेजस्काः सन्ति ( ८।२०।२१) तेजांसि च

अन्तरिक्षे भवानि ( ७।५६।१४)। देवेषु ते प्रकृष्टोत्कर्षसमन्विता आख्याता: भवन्ति ( अथर्व २०।१।२)। द्यावापृथिव्यौ व्याप्नोति तदेज: ( ५।४२।३)। तेषां दीप्तयो हस्तपादस्थकटकेषु, आयुधा चरणेषु च विभन्ते ( ५।५३।४)। त एव यन्त्रं बोधोऽ-कुर्वन् ( ३।४७।३)। यथा सूर्यतेजोऽन्तरिक्षादङ्भूमौ प्रदिप्यते तथैव मरुद्भि: स्वबलं भूमौ प्रदिप्यते ( १।२६।१)। रुक्मवक्षसो मरुत: आत्मबलै: वाता दीप्त विद्युतश्च कुर्वन्ति ( ६।६४।५)। सत्यशवस एते विद्योतमानेन महात्म्येन राक्षसान् नाशयन्ति ( १।८६।६)। भ्राजन्ति च द्यावापृथिव्यां ( ७।५८।१)। अपि च तेषां शर्धो विहरणशीलं भ्रातृव्यरहितञ्चा स्ति ( १।३७।१ )।

## व्याप्ति: गतिश्च

शोभनदातारस्ते बोक्षा न्तारिक्षं व्याप्नुवन्ति ( १।१५[२]-६४[६];५।५५[२])। वृष्ट्यर्थमेते द्यावापृथिव्यौ परितो यान्ति ( ५।५५।७;७।५८।१)। व्याप्तदीप्तयो रुद्रपुत्रा: द्यावापृथिव्यौ ~~भ्राजन्त:~~ शयन्तः स्वमहिम्ना ते परिपूरयन्ति ( ५।५६[१७]-५७[३])। उरुक्रम स्वयामरुद् महत: सर्वेषां सदसो निश्चक्रमे तत्र तत्र व्याप्तत्वात् ( ५।८७[४])। प्रजासु विविधं तिष्ठन्तो मरुतस्तत्र विगूढान् राक्षसान् गृहीत्वा चूर्णयन्ति (७।१०४।१८) शरीरस्थवायु: तत्रत्यान् विकारान् निर्गमयति निहन्ति च बहून् कीटराक्षसानित्यर्थ:। जीवा न्त:स्थास्ते जनानां पापानिशोधयन्ति ( ६(६६।४) । तथा च आम्नायो पि-- प्राणा: वै मरुत: स्वापय:( ऐ०ब्रा० ३।१६)। यज्ञियं नाम दधाना ते स्वधामनु पुन: गर्भत्वमेरिरे ( अथर्व २०।६६।१२)। मेघा: वै मरुतां गर्भा: फलरूपा इत्यर्थ:----- उच्यन्ते, यतो हि यजमानेभ्यो वृष्ट्यर्थमेव क्रियते तैस्तेषामाह्वानम् अथवा मरुदागमन-फलरूपा भवति वृष्टि:, प्रसिद्धैव च यज्ञेभ्यो मेघोत्पत्ति:। अत उच्यते गर्भत्वमेरिरे ।

## आवासा:

शुभ्रशुभ्रो मनीषिणो मरुत: समानाञ्च: सन्ति ( ५।५७।२;७।५६।१,८) पम्बलसारिणा सो स्वतवसा वृद्धिमनुभवन्, महिम्ना नाकं निवासाय उरु चक्रिरे--- आवासं कृत्वा तत्र निवसन्तीत्यर्थ: ( १।८५[२,७]--१६८[४]; अथर्व ७।७७।३)। अत्र ( १।६।६) परितो व्यापिन्मरुद्गणो दुलोकाद्, अन्तरिक्षाद्, आदित्यमण्डलाद्वा आहूतो भवति

गोतुं यजमानस्तुती:। आस्ते गोमातरो नाकस्याधि रोचने दिवि दीप्यमान ा: वर्तन्ते सूर्यकिरणै: तह च रते आकाशमाप्नुवन्ति ( १।१६।५,६,८)। स्तदतिरिक्तं लोकत्रयनिवासिनो मरुतो गिरिस्था:,परुष्णिस्था: वा पि श्रूयन्ते ( ५।५२-६०।६, ६,१४ ८।६४।१२,यजु: १७।१)।

## प्रियाणि भोज्यानि

अन्येषां देवानामिव मरुतामपिप्रियपेयेषु सोम एव प्रमुखोऽस्ति ( १।८५।१०; ७।५६।३,५ ; अथर्व २०।२-६७ )। सोमै: प्रहर्षितास्ते जनेभ्यो १ ४ धनानि कुर्वन्ति ( १।८५।१०)। सूर्ये उद्गते सोमपानाय गच्छतो दिवो नेतु: अस्य गणस्य अश्वा: नैव श्रथयन्ति ( १।५४।१०)। स्वसराणि हंसा इव प्रावृट्टयस्ते सोमपानाय आगच्छन्ति ( २।३४।५)। अग्निमन्तो यज्ञमेदिव आगत्य अमृतं भेजिरे ( ५।५७।५,८)। धेनु: पृश्नि: 'शर्धाय मारुताय' पयोऽदुहत् ( ६।४८।१२ )। अग्नि: ऋत्विजश्च स्तस्मै गणाय चित्रं हवि: प्रभरन्ति ( ६।६६।६)। उदकेषु नौरिव प्रकम्पका: मरुतो यज्ञे महते हविषे द्यावापृथिव्यो: मध्ये क्षरन्ते (५।५६।२)। हस्तिन इव ते वनानि मक्षयन्ति ( १।६४।७)। स्वादुसम्मुदो मरुत: करम्भप्रिया इत्यपि श्रूयते ( अथर्व १३।१।३; यजु: ३।४४ )। अन्येषामिव घर्षणशीलानां मरुतां कृतेऽपि वेदुपरि बर्हि: आस्तीर्यते यस्मिन् उपविश्य ते सोमं पीत्वा तृप्तिं लभन्ते २ ६ (७।५७-५६, अथर्व०२०।१३।२)।

## प्रकम्पका: मरुत:

या त्रिषधास्त्रयो लोका: गच्छद्भ्यो रुद्रतनयेभ्यो विस्तीर्णप्रदेशा इव सुगमा: भवन्ति ( ५।५४।६)। नावरुन्धन्ति नद्यो नगा: वा तेषां मार्गान् (५।५५।७)। स्तानेव मार्गाननुसृत्य पर्वानि ब्रवन्ति ( १।८५।३)। ~~स्तानेव मा~~ मदोन्मत्ता इव, श्वसा हिमन्यवो वा मरुत: पर्वतवनस्पती: प्रतिपद्यन्ति प्रकम्पयन्ति च । नगा: अपि भयभीता: भवन्ति (१।३५।३,५-६)। श्येनेवा काश्यारिणो रुद्रा जिह्वया हन्वेव आत्मनैव प्रेरिता: भवन्ति (१।१६५-१६८)। मनोवेगसमन्वितास्ते २ ५ अक्षेऽस्कानि विचालयन्ति ( १।८५।४, ५।५४।१२)। तेषां गमनाय भीता: गिरय: सिन्धवश्च स्वयमेव एकस्थाने नियता वर्तन्ते, तदानीं ते वृष्टिं कुर्वन्ति (८।७।५,२६)।

## वाहनसाधनानि

माहेश्वराणां वाहनेषु मृगा स्वरथाः प्रमुखाः सन्ति। रुक्म इव शोभमाना उज्ज्वलाः पृषत्यो भवन्ति वाहनानि। पृषत्यः श्वेतबिन्दुभिरङ्किताः मृग्यो वडवाः वोच्यन्ते। ते च नानावर्णाः मेघमाला इति नैरुक्ताः, तच्च सत्यम् (१।६४।८; ५।५५।६)। चित्ररथाः हिरण्यरथाः वा (३।५४।१३; ५।५७।१) रथे शीघ्रगमनाय तेषु पृषतीः (२।३४।३; ५।५८।६; अथर्व०२०।६७।४) ~~स्वेच्छया~~ युयमानस्वाश्च वा योजयन्ति (५।५५।१)। पृषदश्वानां मरुतामश्वाः पिशङ्गारुणवर्णाः हिरण्यपाणयश्च भवन्ति (१।८८-१८६।८; ५,५७।४; ८।७।२७)। ते च सारथिना विनैव प्रकर्षेण गच्छन्ति (१।१६६।४)। शीघ्रगमनाय मरुतः स्वयमेव कशया ताडन् तान् नियच्छन्ति (५।५६-६१।३)। सपर्याणकविकाः प्रोक्ताः अश्वाः येन मरुतामश्वा रोहणत्वमपि सिद्ध्यति (५।६१।२)। यदा कदा वातानपि अश्वरूपेषु योजयन्ति रथेषु (५।५८।७)।

## आभरणानि

अञ्जिभिः सह वातानां कुण्डलादीनि बह्वाभरणानि स्मृतानि (८।२८।५)। तत्र प्रायो रुक्मवक्षसः प्रोक्ता मरुतः (२।३४।२, ५।५७।५, ८।२०।११) अलङ्काराः स्वर्णनिर्मिताः एव भूयन्ते (५।५६।१, ६।६६।२)। स्तरेषु भूषणेषु कटकाः, हिरण्यकवचाः, गौमङ्गवौक्षा उष्णीषादिकाः, शिरस्त्राणश्च प्रमुखाः भवन्ति (२।३४।२-३; ५।५५-५६।३; ७।५६।१३, ८।७।२५)। घनिनामिव विद्युदाख्यैः आभरणैः स्वधाभिश्चाप्येते स्वशरीराणि अलङ्कुर्वन्ति (५।६०।४)।

## शस्त्रास्त्रवर्णनम्

मरुद्गणस्य शस्त्रास्त्राणि बहुविधानि भवन्ति (८।२८।५) तानि च धारासारवृष्ट्युपलविद्युद्गर्जनानीति चत्वारि, तीव्रा रंहतिः, तया सार्धं धावमानानि रजांसि, वनस्पत्यादिनाञ्च अंशा इति त्रीणि भावनीयानि। विश्ववेदसां शस्त्रास्त्रेषु ऋष्टयः (१।६४।४,८), वर्तिनी (१।१६८।३), अश्माः (उपलाः (१।१७२। २,५।५४।
धनुर्भा च (८।२०।१२) प्रधानतां भजन्ते। रक्षार्थः हस्तत्राणकम्, शिरस्त्राणम्, कवचञ्च धारयन्ति (१।१६८।३)। सुदिनेषु यथा प्रकाशोऽन्धकारं छिनत्ति तथा

मरुत्सेना: सर्वां महीमुन्दन्ति ( १।१८६[६] )। अस्ति शोभना तेषां सेना ( यजु: १७।८३)। स्वयं मरुत इन्द्रस्य सैनिका: सन्ति ( ८।९६।६, यजु: १७।८६)।

### यज्ञागमनम्

मरुतो यज्ञान् उच्छ्रितवृक्षसमूहानिव ऊर्ध्वान् कारयन्ति यजमानै: ( १।८८।३ ) । मधुरविविधिभ्रतोऽसौ गण: यागेषु रता: प्रभृतीनां घर्मणो मूत्वा विहरति ( १।१६६[२]-१६७[२] )। दुष्टयजमाननियामका: मरुतो मदिरं सोमं पिबन्ति यज्ञदेशे स्तुतियशांसि धारन्ति ( ५।४२[१०]-६१।११ )। क्रीडाप्रसन्नमरुतोऽलङ्करणै: शोभमाना: नीलपृष्ठा हंसा इव यज्ञे भूत्वा स्वैरागच्छन्ति ( ७।५९।७, अथर्व० २०।१३।२, यजु: ३३।९) । आत्मरक्षार्थम्, अच्छापो दिव्यपार्थिवजन्मानि चाभिप्राप्तुम्, गवाश्वान्नादीनि धनानि, पुत्रान् पुत्रपौत्रान् च प्राप्तुं स्तुवन्तो मरुतो गोतमस्य, मान्दार्यकवे स्वयामरुतश्च स्तुतिभि:( १।८८[५]-१६५[१५]-१६६[^x]।१५, २।३४।१४,५,४१[५,१४]- -५४[१४-१५] )।

### मरुतां वृद्धि:

उग्रकर्माण: क्रमणशीला मी स्तुतिभि: सर्वतो वृधु: ( ५।५५[३]-५९।५,८।२०।१२, १०।७७।२)। सूर्यरश्मय इव, अग्नय इव वा विरोचमानास्ते इच्छानुरूपं स्वबलेन त्रिषु लोकेषु वृद्धिमधिगच्छन्ति ( ५,५२[७]-५५[२]-५६[७], ६।६६[२] )। किं मेघेषु नदीनां जलेषु वापि वर्धन्त एते इति ब्रूयते ( ३।३४।१३,५।५२।७)।

### सहयोगकर्म

प्रजापालकं राजानमनुगृहीतुमग्नि: मरुतां साहाय्येन रोदसीं व्याप्नोति ( अथर्व० ३।३।१)। वायुभि: सार्धं मरुद्देवता: वृष्टिवेपनादिषु कार्येषु समर्था: भवन्ति ( १।१०७।२,८,७।३-४,१७)। इन्द्र सहायस्ते एकदा वृत्रवधप्राङ्गणे तं त्यक्त्वा प्रयान्ति ( १।१६५।६, अथर्व० १३।१।३)। तथापि मरुत एव इन्द्रं युद्धाय प्रोत्साहितं कुर्वन्ति वर्धयन्तीच स्तुतिभि:( ३।३५।९,६।१७।११)। अयं गणो वृत्रवधकार्ये जितेन्द्रियो: पुत्रैव साहाय्यं कुरुते ( १।१००।५,८।७।२४)। इन्द्रेण एतोऽपि वृत्रम इन्द्रसाहाय्येन

स्वयमेव वा विदारयन्ति ( १।२३।६,८।७।२३)। अपि च भवन्त्येते इन्द्रभ्रातरः --
इन्द्रमरुतामदिति गर्भजत्वात् यद्वा इन्द्रविमातुः दितेः पुत्रत्वात् ( १।१७०।२,
भा० ६।१८।६१-६३)। नात्र ( १।१७०।२) मरुदिन्द्रसहोदरत्वोल्लेखो यथा भावयति
मैकडानलोऽपितु अगस्त्येन्द्रसम्वादः( तत्रैव पृ०१५३) । श्रीमद्भागवते तत्र पाठ्यमानाः
मरुतस्तु स्वयमेवात्मानं तस्य भ्रातरः कथयन्ति ।

## सम्बन्धाः

इन्द्राणी सरस्वती च तेषां सहायौ स्मृतौ ( ७।९६।२, १०।८६।९)।
श्रीमैकडानलो मरुद्भ्यो रोदसीं दृष्ट्वा ( ५।५६-८६।६), भद्रजानयः पदञ्च ( ५।६१।४),
शोभनपत्नीकाः इत्यर्थवाचकं मत्वा तां तेषां पत्नीतया स्वीकरोति( तत्रैव पृ०१४८)।
परं न च तथा । रोदसी तु रुद्रभार्या सा च भवति मरुतां माता । रथे वर्तते
इत्यनेन रुद्रगणानां रूपेषु रोदस्यास्तैः सह वर्तित्वं सूच्यते न च पत्नीत्वम् ।
' भद्रजानयः' पदेनापि तेषां शोभन जन्मत्वं सिद्ध्यते । अतो नैवास्ति काचित्तेषां
सहधर्मचारिणी । अत्रापि ( ५।५८।७)। ते मतैव भूम्याः गर्भस्थानीयम् उदकं तस्यां
स्थापयन्ति, न च पत्नीबुद्ध्या तत्र रमन्ते । पुनः सा बहुशस्तेषां माता प्रकीर्तिता,
न च भारतीयेषु मातरि स्वामित्वं पदं लभते ।

## अथ गुणकीर्तनम् ----

घोरवर्पसोऽपि कष्वासः सूर्यवा दीप्तिमन्तो मरुतोऽनवद्याः
१।८६-६४।२, ५।५५।४), ओजसा नाधृष्याः ( १।१९।४), अनल्पबलाः ( ५।५२।५),
सर्वज्ञाः मेधाविनश्च सन्ति ( १।६४।८,१०, ८।७।१२)। पावकास्ते क्रीडनशीलाः,
बलशीलाः (१।६४।२,१२--८५।४, १०।७८।६) यजुः १७।८७) प्रजापीडकशत्रुनाशकाः,सत्यजिताः
सेनजितश्च अग्निमित्राणि भवन्ति ( ५।५६।४, अथर्व ३।२।६, ८।४।१८, यजुः १७।८३)।
यज्ञातोऽयं गणोऽमर्त्यः, समनस्को युवास्ति ( १।१६८-१८७।८,५।५८।८ )।सर्वे एते
सनीडाः, सवयस्काः, समान्याश्च सन्ति ( १।१६५।१)। वाद्यन्त्रेषु वीणाप्रिया
एते इत्यपि श्रूयते ( १।८५।१०,८।२०।८)।

## कृतानि कार्याणि

अथ कर्मविवेचना। पर्वतानामधिपतयो मरुतोऽपि ( अथर्व ५।२४।६) इन्द्राग्नीव प्रमुखतया शत्रुहन्तारो वृष्टिप्रदायका:।, पुत्रगवाश्वादीनाञ्च दातारो भवन्ति। तथा हि--- स्वयमेव राजमानो जलेशो मरुद्गणो: मेघानां भेदको वोढा च अस्ति ( १।६४।११, ५।५८।१।३, अथर्व० ४।२७।५)। तेनैव पयोवृद्धेन क्रियते मेघसञ्चालनं विस्तारञ्च ( १।१६-३७।१२, २।३४।१, अथर्व४।२७।२)। समुद्रोत्क्षेपकोऽपि तद्दाताऽयं समूहो वृष्टिभि: भूमिं विविधं तर्पयति ( १।१६-१६६।३,५।५२८-६, ८।२०।२४)। एषा वृष्टि: यत्र तत्र घृतरूपेण अपि निर्दिश्यते ( १।६४-८५।३) । अत्र ( ५।५८।७) सैव तेषां स्वेदरूपा उक्ता। मरुत एव सिन्धून् निर्माय प्रवाहयन्ति (५।८७।३, १०।७८।६)। दिवो नर एव विश्वस्य कर्तारो हर्तारो च सन्ति ( ५।५४।१०, अथर्व० २०।६७।४) यजु: १७।८२) । विश्वस्य विधातारो मेधाविनो मरुतो मेधा पदिन: संपृञ्चन्ति ( ५।४२।१३, १०।७७।१, अथर्व० ४।२७।५)। त एव कवयो नो देहेषु औषधीनां रसं सञ्चारयन्ति ( अथर्व० ४।२७।३)। गृहमेधिनो रुद्रा: वृष्ट्या वनवर्धका: भूत्वापि झञ्झावातै: दावानलप्रचारकत्वात् वनभञ्जका: भवन्ति (१।६४।७, ६।४६।११,यजु: १७।८५)। मारुतस्य भेषजस्य वोढारो जनयज्ञरक्षका: स्वर्गप्रापका:, पालका: वापि भवन्ति ( ५।६१।१५, ७।३६-५६-५७।७,८।२०।२३,२५)। मरुतो बलेन सूर्यपन्थानं वृञ्जन्ति ( ८।७।८)। रविरश्मिरोधकान् मेघान् विदारयन्तीत्यर्थ:।

अभीष्टपरतत्त्वरूपस्य ज्योतिष: कर्तारो गोमातरस्तमोविदारका:, ज्योतिषाञ्च विस्तारका: सन्ति ( १।८६।१०, ७।५६।२०,८।९४।९)। वृद्धवयोऽन्नधारका:मरुत: शत्रून् तेषां दुर्गाणि च विविधं नाशयन्ति ( ५,५४-५५।१, ७।५६।९)। जनैस्तामपाकर्तारो युद्धकाले इन्द्रस्य पुरतो गच्छन्ति ( २।३४।१५, ६।६६।४,३।५५।२१, अथर्व ४।२७।१)। अपि च प्रकम्पयन्ति द्यावापृथिव्यौ, सर्वान् लोकान्, महीरुहान् शिलोच्चयान् च ( १।३७-३९-६४-८७।३)। त एव जनान् व्यापारेषु नियोजयन्ति ( १।३७।१२)। तेभ्यो बिभ्यति सर्वाणि भूतजातानि ( १।८५।८)। पांसुप्रेरकास्ते पदार्थानां विश्लेषका: सन्ति ( १।६४।१२,५।५४।८)। गवाश्वान्नधनप्रदातारो विजयबलविधायका: भवन्ति ( १।८६-१६६।३,१४;२।३४।७;५।५२।१७)। रूपवन्तं

बलन्तञ्च पुत्रम्, सुखानि, आयूंषि वाऽपि प्रददति मरुत: (१।१७२।३;२।३४।५; ५।५८।२)।

यद्यपि वेदेषु मरुत्सु वायुवातयोश्च भेद: सुस्पष्टतया व्याख्यातो दृश्यते तथापि तेषु एकैवाऽऽत्मा विद्यते इति निर्विवाद: । अत्र ( १।६४।५) मरुतो वायुजनका: श्रूयन्ते। अत्राऽपि ( ८।७(३-४) एते मरुत: वायुभि: सार्धं गच्छन् गच्छन् पर्वतादीन् प्रकम्पयन्ति । मेघोत्थानकार्ये तु वायवोऽप्यत्रैव सहायका: भवन्ति। यजुर्वेदेऽपि ( १८।४५) मरुतोऽसि मरुद्गण: इति श्रूयते । अत एव जन्य-जनकयोरभेदत्वात् तेषु अभेद एव अवबोध्यो भवति । तत्र सामान्यगतिपरिस्थिति - समन्वितो वायु:, समेघविद्युद्वेगवन्तश्च मरुत इत्युच्यन्ते ।

## एकस्यमतानि

कुनवेनफोमेयरादयस्तु मरुत: मृतकानाम् आत्मानां प्रतिनिधय इति मन्यन्ते ( वेनफे: ओ०आ० क०१, ६४, मेयर:मा०पु० १।२१८, ओडर, वी०मा० ६।२४८-६)। नाऽस्ति वेदेषु अस्मै विचाराय कश्चिदाधार:, परं लोकश्रुतौ प्राप्यते, तदनुसारञ्च शान्तवातावरणे यदा कदा स्वल्पसमयाय यो वायुस्तीव्रवेगेन समापतति--- विशेषेण कस्यचित् मृतकस्य मरणोपरान्तकृतकर्मणाम् अवसरेषु अथवा यस्याऽऽगमनेन पतति कश्चिद् वृक्ष: ---- सो वायुरेव आगत: कस्यचित् मृतकस्य आत्मेति लोकेषु श्रूयते ।

## अवटकारका:

मरुद्देवताप्रसङ्गे न केवलम् आर्तववायूत्पत्ति:( निर्मेघमरुतामपि), वृष्ट्युत्पत्ति:, तथा च भूमिमभिषिञ्च्य तस्यां वनस्पतिमातृत्वाऽऽरोपणं वर्ण्यते, अपितु अतिसशक्तमरुद्भि: भूमिमुद्भिद्य वृष्णिगौतमायावटो ( पातालभिदवटो) नीयते ( क्रियते इत्यर्थ: ) इत्यपि वर्णितो भवति ( १।८५--८८)। अनन्तरं [१०-११ ४]
महाभारते अर्जुनेन बाणेन कूपखननप्रसङ्गेऽपि एवं विधकूपस्य एव सूचको भवति ( महा० भीष्म० १२१।२२-२५)। अद्याऽपि वैज्ञानिकै: शिलोच्चभञ्जनार्थं विस्फोटक-पदार्थमरुतां प्रयोगोपयुज्यते ।

## व्युत्पत्ति:

मरुच्छब्दस्य व्युत्पत्ति: मृधातो उत्प्रत्ययाद् भवति ( मृ+ उत् )। म्रियते प्राणी यस्याभावाद् यद्वा येषामभावे जीवो रुतं शब्दं म न करोतीति विग्रह: ।

## रुद्रगण:

### श्रुतिस्थिति:

त्रिषा जातेषु श्रेष्ठो रुद्रो न भजते प्रधानतां वैदिकेषु देवेषु । परं पुराणेषु प्रलयंकरो रुद्रो विष्णुब्रह्म इति त्रिकृत:। अथवा तस्मादपि परम् (शि०रु० पु०१६।४८)। तत्र ऋग्वेदे नवमंत्रोत्तराणि त्रीणि सूक्तानि तस्य स्तुतिं प्रतिपादयन्ति । केषुचिन्मंत्रेषु इन्द्राग्न्यादित्यादिभि: सममपि श्रूयते । यजुर्वेदे सप्तमन्त्रोत्तरैकस्मिन् सूक्ते रुद्रस्य, अन्यमन्त्रेषु च रुद्राणां समाम्नायते प्रशस्ति:। अथर्ववेदे द्वादशमन्त्राधिकचत्वारि सूक्तानि रुद्रपरकाणि सन्ति । तस्त्यस्मिन् वेदे एकस्यैव रुद्रस्य स्तुति:, न च रुद्राणाम् , रुद्रशब्दस्य बहुवचने प्रयोगोऽत्र न उपलभ्यते । परं भवशर्वादीनां रुद्रमूर्तीनां स्तुति: ऋगथर्ववेदयो:श्रूयते । अथर्ववेदस्य एकस्मिन् सूक्ते ( ७।४२) सोमेन सर्म समाहूतो भवति रुद्र:। ऋग्वेदेऽपि एकस्मिन् सूक्ते ( ६।७४) अतो सोमेन साकं श्रूयते ।

## रुद्रनामानि

भवशर्वाऽऽदीनि नामानि अथर्ववेदे पृथग्देवानां प्रतीयन्ते ( ४।२८;११।२,१-६३;१५),५ परन्तु पुराणेषु एतान्येव नामधेयानि महेशाय श्रूयन्ते अथवा रुद्रविशेषाणां कृतेऽपि ( आदि० ६६।१-३, १२२।६६, द्रोण० ८०।५५)। प्रमुखानां रुद्राणां संख्या प्राय: एकादश श्रूयते । परन्तु तेषां नामानि पुराणेष्वेव लभ्यन्ते , वेदेषु तु कानिचिदेव । तथा हि---- रुद्र:, भव:, शर्व:, भीम:, ईशान:, पशुपति:, उग्रो महादेवश्च ( २।३३।६,अथर्व ११।२।१, १५।५।१-१६, यजु: १६।२८,४०)। वेदेषु रुद्राणां बहुत्वमेवसमाम्नायते न पुन: पुराणानमिव एकादशत्वम् ( ७।३५।१४, १०।६४।११, यजु: ११।५४)। अथर्ववेदस्य पञ्चदशे काण्डे ( १५।५)भवशर्वादीनि सप्तनामधेयानि भिन्नरुद्राणां कृते भवन्ति ।

## पितरौ

शिवमहापुराणे तु नीललोहितस्य महेशस्य मनसा जातानां त्रिलोचनानां रुद्राणां व्याप्तिः चतुर्दशलोकेषु श्रूयते ( शि०वा०१४।१६)। अनया श्रुत्या तेषामसंख्यता प्रतिपाद्यते । एत एव उत्तरवैदिकसाहित्ये रुद्रासंख्या इति कृत्वा प्रथिताः भवन्ति। तेषु एकादशरुद्रा एव प्रमुखतां भजन्ते, तेषाञ्च नामानि एतानि भवन्ति ------

कपाली पिङ्गलो भीमो विरूपाक्षो विलोहितः।
शास्ताऽजपादहिर्बुध्न्यः शम्भुश्चण्डो भवस्तथा ।। शि०श० १८।२६ ।।

एते शिवरूपाः महारुद्राः सुरभीकश्यपयोःपुत्राः सन्ति। एतेषामसंख्याताः अनुचराः रुद्रसंज्ञयैव ज्ञायन्ते (शि०श० १८।२६-३२) । महाभारते तु बहूनां रुद्राणां नामानि सन्ति, यद्यपि तेषां संख्या एकादश एव तत्र उच्यते । भारते कानिचिन्नामानि एवं सन्ति --- निर्ऋतीश्वरौ, भवसर्पभगदहनाः, कपालीमृगव्याधौ, स्थाणुः, [illegible], हरजयन्तसुरेश्वराः, बहुरूपत्र्यम्बकापराजिताः, सावित्रपिनाकीरैवताः, विरूपाक्षाजैकपादहिर्बुध्न्याः( आदि० ६६।१-३-१२२।६९,अनु०१५०।१२-१३, शान्ति:०२ ०८। १९-२०)। शान्त्यादिपर्वयोः एकादशरुद्राणां नामधेयेषु भेदो वर्तते । अपि च शान्तिपर्वे द्वादशरुद्राणाम् उल्लेखः प्राप्यते । नामभेदस्तु भिन्नस्थानेषु महत्त्वभेदात् सम्भवति। अथवा कल्पभेदो नाम वैविध्यं जनयति। तथा च दृश्यते परवर्तिसाहित्येषु कथाप्रसंगेषु । कांश्चन एतावेव हेतू रुद्रसंख्याबृद्धौ अपि हेतुत्वम् अर्हतः ।

## हरस्य अष्टमूर्तयः

एतेषां सर्वेषां रुद्राणामीश्वरो नीललोहितो महेश्वरः स्मृतः। एकादश रुद्रास्तु अस्य सामर्थ्यसंयुक्ताः अवताररूपाः सन्ति( शि०श० १८।३०, रुद्र० ६।३४)। तेषां रूपाणि तत्र एवं श्रूयन्ते -----

कपर्दिनो निरातङ्कान् नीलग्रीवान् त्रिलोचनान् ।
जरामरणनिर्मुक्तान् दीप्तशूलवरायुधान् ।। शि०वा० १४।१५।।

एषा हरस्य मानवी सृष्टि: उच्यते (शि०वा० १४।१४-१५) एतदतिरिक्तं शर्वो भवो रुद्र: उग्रो भीम: पशुपति: ईशानो महादेवश्चेति हरस्य अष्टमूर्तय: स्मृता: ( अथर्व० १५।५।१-१५, ऋ० २।३३।६, विष्णु० १।८।६-७)। एता: मूर्तयो ब्रह्मपुत्रा: सन्ति । भूम्यम्भोऽग्निमरुद्व्योमक्षेत्रज्ञाऽर्कनिशाकरा: एताभि: मूर्तिभिरेव अधिष्ठिता: भवन्ति( शि०शत० २।३-४,१७)। महादेवस्य पुरुरूपत्वम् ऋग्वेदेऽपि श्रूयते ( २।३३।६)। विष्णुपुराणे तु भवशर्वादीनि अष्टनामानि एकस्यैव ब्रह्मपुत्रस्य नीललोहितवर्णस्य श्रूयन्ते ( १।८।२-६)।

## रोदनाद्रुद्र:

ब्राह्मकल्पस्य आदौ समुत्पन्नात् सच्चिदानन्दज्योतिर्मयब्रह्मव्याप्तमहद्दिव्याण्डात् ब्रह्मणा सह स्थाणु नामा शिव: प्रादुर्बभूव ( आदि०१।३०-३२) यद्वा हरे: ललाटात् ( वन० १२।४०) । प्रलयस्थितिसर्गाणां कर्तु: सच्चिदानन्दलक्षणस्य महेशस्य परमं रूपं ब्रह्मणोऽङ्गत: तत्तत्कल्पेषु प्रजानां विवृद्धये कालात्मा रुद्रगणाधिप: प्रकटीभूत्वा लोके रुद्रनाम्ना ख्यातिमधिगच्छति ( शि०रुद्र० ६।२७-३३,वा० १४।३-४)। असावेव आत्मसदृशात् एकादशरुद्रान् मनसा सृजति । ब्रह्मवैवर्ते रुद्रा: ब्रह्मणो ललाटात् जायन्ते तस्य कुपिते सति( ब्रह्मखण्ड अध्याय ७)। श्रीमद्भागवते कुपितस्य प्रजापते: भ्रुवो: मध्यात् कुमारो नीललोहितो जात:। असावेव बालक एव रोदनात् नाम्ना रुद्रो बभूव ( ३।१२।७,१०)। अथर्ववेदे प्रजापतिरेव महादेव इति श्रूयते ( १५।१।४)। आत्मनो वै जायते पुत्र इत्यादिवचनै: पितापुत्रयो: आत्मनो ऐक्यं प्रतिपाद्यते । अत एवं समाम्नायते, न पुन: प्रजापतिरेव नाम्ना महादेवो भवतीति। अन्यत्र प्रजापत्युषाभ्यां जातो रुद्र: ( १०।६१।५-६)। प्रजापति: वै स्वां दुहितरमभ्यध्यायदिवमित्यन्य आहुरुषसमित्यन्ये ।( ऐ० ब्रा० ३।३३)। ब्रह्मवैवर्ते ( अध्याय ३,खण्ड १) श्रीकृष्णस्य वामपार्श्वात् प्रकटित: शिव: इति ।

## महारुद्र:

रुद्रेषु एको वै महारुद्र इति श्रूयते ( ७।१०४-३५ ।६) सो महादेवस्त्र्यम्बक: शिवो वेति नाम्ना ख्याति प्रथितो वेदेषु ( २।३३।८,१४,१०।१२५।६,यजु:३।६०)

उमा अस्य महारुद्रस्य अर्धाङ्गिनी भवति यथा शाकमतौ मुञ्जवान् पर्वतस्य परवर्ती भागे यद्वा मेरुशिखरे निवसति ( यजु: ३।६१,१६।२-३, महा० आश्व० ८। १, भीष्म० ६।२५-३१, वा०सं० १६।२-४)। अस्य रुद्रगणा: द्यावापृथिव्यौ अन्तरिक्षञ्च परिव्याप्य वर्तन्ते ( यजु: १६।६४-६६)। तेषु सृकाहस्ता: निषङ्गिणो रुद्रा: तीर्थेषु प्रचरन्ति ( यजु: १६।६१)। अथवा एते विधिपुत्रा: चतुर्दशविधं जगत् व्याप्नुवन्ति( शिव०वाय० १४।१६)।

## मानवत्वारोपणम्

वेदेषु रुद्रे मानवावयवानाम् आरोपणं महत्त्वं न भजते । अस्य कानिचिद् अङ्गानि समाम्नायन्ते रुद्रस्य हस्तौ सुकरौ भेषजौ च स्त:, याभ्यां यजमानौ रक्षितौ भवति। एवमपि एतौ वज्रकठिनौ स्त: ( २।३३।३,७) । वाजसनेयि संहिता - यामपि अस्य बाहू श्रूयेते ( १६।१)। यजुर्वेदे असौ हिरण्यबाहुरित्यपि श्रूयते ( ३।६१, १६।१७,५१)। सुशिप्रस्य अस्य उदरौ मृदु: अस्ति ( २।३३।५)। वराहवद्दृढाङ्गो रुद्रो नीलवर्णाभि: जटाभि: सुशोभते ( १।११४।५, अथर्व० २।२७।६१,११।२।७) । नीलशिखण्डश् रुद्र: सहस्राक्ष इति स्मृत:। दन्तोदरास्यघ्राणरसनानामपि श्रुति: श्राव्यते ( यजु: १६।८, अथर्व ११।२।२,६-७)। अस्य ग्रीवा नीलवर्णा केशाश्च हरिद्वर्णा: सन्ति ( यजु: १६।१७,५६)। सूर्य इव दीप्यमानौ सौ बभ्रुवर्ण इति श्रूयते, रोचते च हिरण्यमिव( १।४३।५, २।३३।५,८)। यजुर्वेदे पुराणेषु च अस्य त्र्यम्बकत्वमेव श्रूयते न च सहस्राक्षत्वम् ( यजु: ३।५८,६०,शत०ब्रा० २।६।२।६, भीष्म० ६।२६)। अत्र ' त्र्यम्बक ' इत्यस्य पदस्य तिस्र: अम्बिका: यस्य सः त्र्यम्बक इत्येवं विचारयति ब्रासमैन:( तुल्नी० ३।५६।५) मैकडानलश्च ( वै०मा०अनु० रा०कु० पृ०१४१), विश्वस्य त्रिपदीयविभाजनम् उपलक्ष्य एषा उपाधि: रुद्राय उपयुज्यते इत्यपि च ( तुल्नी० ब्रासमैन: क०अ० १।५५५)। एतयो: पाश्चात्यविचारकयो: उक्तशब्देषु न प्रतीयते सारविशेष:। यतो हि नपुंसकत्वाद् अम्बकपदं तु नेत्रार्थकमेव भवति। ( अम्ब + ण्वुल्)। अम्बति शीघ्रं नक्षत्रस्थानपर्यन्तं गच्छतीति विग्रहे सति तदेव पुंल्लिङ्गे जनकार्थे प्रयुज्यते । अम्ब+ घञ् , तत: स्वार्थे क:। न सम्भवत्यत्र कथमपि स्त्रीलिङ्गत्वम् अम्बकपदे । अत एव नार्हतीदं पदं जननीवाचकत्वम् । पुंल्लिङ्गे सति

समापतति तत्र यत् जनकवाचकत्वम्, तत्तु कथञ्चित् सम्भवत्यपि । यतो हि द्यावापृथिवीभ्याम् अन्तरिक्षेण च तेजांसि रक्षितानि भवन्ति । रुद्रस्य तेजोमयत्वं श्रूयत एव---

रुद्रो वैद्युताग्निः ( १०।१३६।७)। यद्वा अजस्रं भान्ति रुद्राः( यजुः ११।५४)। एवं त्र्योऽम्बकाः पितरो यस्य सः त्र्यम्बक इति वक्तुं शक्यते न च तिस्रोऽम्बिकाः यस्य सः त्र्यम्बक इति। व्याकरण विरुद्धत्वात् । त्रीणि अम्बकानि नेत्राणि यस्य सः त्र्यम्बकः शिव इत्यस्त्यस्माकं परम्परा सा च रुद्रस्य लोकत्रयव्यापकत्वात् सर्वथा युक्तियुक्तैव अस्ति। तेजोमयत्वात् लोकत्रयमेकवारमेव परिपश्यति रुद्रः। यद्वा लोकत्रयदर्शने स एव नेत्रमिव हेतुः भवति । अत उच्यते त्र्यम्बको रुद्रः ।

यजमानो रुद्राणां वर्मासु वरीङ् निदधाति ( यजुः १६।६४-६६)। मैकडानलः ऋग्वेदस्य ( २।३३।५,११) एतयोः मन्त्रयोः वक्रकठिनानां पाणिपादानाम्, अधरस्य च रुद्रे आरोपणं पश्यति, परं तन्न सम्भवत्यत्र तदर्थकानां शब्दानामभावे ( तत्रैव पृ०१४०)।

## आभरणानि

सूर्य इव दीप्यमानो रुद्रो बभ्रुवर्णः, ताम्रवर्णः, पीतवर्णः, नीललोहितः, रक्तवर्णो वा ध्यायते ( १।४३।५, २।३३।५,८,यजुः १६।१६,वा०सं० १६।७, महा० आदि० १८।४१-४३)। अलङ्कुर्वन्त्येनं भासुराणि हिरण्मयानि आभरणानि (२।३३।९-१०)। तेषु यजनीयं विश्वरूपं निष्कं प्रमुखतां भजते ( २।३३।९-१०)। उपवीतोऽप्यनेन धार्यते ( यजु० १६।१७)। दिगम्बरो भूत्वा पि कृत्तिवासतो व्याघ्रचर्माम्बरधरस्य वा रुद्रस्य स्वरूपवर्णनं पुराणेषु प्राय एवं श्रूयते ------

चन्द्राऽऽदित्यार्काशश्चन्द्रावयवभूषणः ।
भुजङ्गहारकेयूरवलयो मुञ्जमेखलः ।।
जलंधरविरिञ्चेन्द्रकपालशकलोज्ज्वलः।
गङ्गातुङ्गतरङ्गार्द्रपिङ्गलाननमूर्धजः ।।
भग्नदंष्ट्राङ्कुराक्रान्तप्रान्तकान्तधराधरः ।
सव्यश्रवणपार्श्वान्तमण्डलीकृतकुण्डलः ।।

महावृषभनिर्याणो महाजलदनिस्वनः ।
महानलसमप्रख्यो महाबलपराक्रमः ।। शिवब्वाय० १४।८-११।।
(यजुः ३।६१,१६।५१,वा०सं० १६।५१, शान्ति २०।१२)।

रूपम्
------

अस्य तनूः शिवा, अघोरा, अपापकाशिनी चेत्यप्याम्नायते ( श्वेत०३।५)। अत्र ऋग्वेदे युवा रुद्रो मृगमिव भीमो भवति ( २।३३।११)। शिवमहापुराणेऽपि रुद्रो घोरमहात्म इति श्रूयते ( वाय० १४।१२)।

वाहनाः
------

ऋगथर्ववेदयोः महेश्वरस्य वाहनं रथ एव श्रूयते ( २।३३।११, अथर्व १८।१।४०)। परं यजुर्वेदे पुराणेषु च वृषभ एव बह वाहनतां भजते न रथः( यजुः १६।१८, वाय० १४।११)। अश्व एव दिव्यगतिवाद् रुद्रस्य अश्वाः श्यावबर्णाः स्मृताः( अथर्व ११।२।७।१८)।

सम्बन्धाः
---------

अपत्यो महादेवः ' पृश्न्याः ऊधनि ' मरुतोऽजनयत् (अथर्व०१ १।२।३, ऋ०२।३४।२,तै०सं० २।२।११।४)। मरुतो रुद्रिया इत्यन्यत्रापि श्रूयते ( ऋग्वे०७ १।३८-११४।६, २।३४।१०,७।५६।२२)। अनेन जाताः असंख्याताः रुद्राः लोकत्रयं व्याप्नुवन्ति( यजुः १६।५४-५६)। रुद्रगणेषु एकः कटुभाषीगणः स्मृतः । मृगयायै किरातवेशधारिणो भवस्य महास्याः श्वानाः अपि समाम्नायन्ते । घोषिणी, केशिनी, नमस्कृता, सम्भुञ्जतीति नामधेयैः अस्य काश्चन् सेनाः सन्ति ( यजुः १६।३०-३१)। ( १०।६१।२।१५) अत्र अश्विनावपि रुद्रपुत्रौ इति श्रूयते । भारतेऽसौ एकादशरुद्राणां जनकः श्रूयते ( आदि०६६।१)।

बहुधा अम्बिका, महादेवस्य भगिनी भवति( यजुः ३।५७,वा०सं०३।५)। यास्कमनुसरन् ( ५।४६।८) अत्र सायणाचार्यस्तु रोदसीं रुद्रस्य पत्नीति स्वी-करोति । परन्तु उत्तरवैदिकसाहित्येषु उमैव अस्य धर्मपत्नी स्मृता, कर्मस्वरूपभेदाच्च सैव दुर्गा - दिनामभिः ज्ञेया भवति ( केनो०३।१२)।

## पेयपदार्थाः

माध्यन्दिने सवने रुद्रो वज्रहस्तेन इन्द्रेण समं सोमं पिबति ( ३।३२।३)। अपि चासौ यज्ञेषु अम्बिकया सह समाहूतो भवति ( यजु: ३।५७)। नीलकण्ठो रुद्रो हविश्शिष्टमभागं प्राप्नोति । अत्र ( यजु: ३।६१, गो०ब्रा० १।२८।२८, आप०श्रौ० २।४।२३)। अन्यत्र दैत्यानामिव रुद्रगणास्तु वध्यप्राणिनां रक्तधाराः पिबन्ति ( शां० श्रौ० ४।१९।८, ऐ०ब्रा० ३७।१)।

## आयुधानि

परैः अनभिभूतो विधाता स्वधावान् रुद्रो दृढधनुष्क उच्यते ( ७।४६।१)। सेनानी रुद्रः शतूणीः बिभर्ति( यजु: १६।१३,१७)। अनेन प्रलयाय सन्धानितः शरः शिवोऽस्तु, अस्मान् मा हन्तु इत्यर्थं सः प्रार्थितो भवति ( यजु: १६।३)।अस्मिन् काले धृतो धनुः हरितं हिरण्ययं च भूतं, अबाधगतिशीलः शरश्च सहस्रघ्नः ( अथर्व ११।२।१२)। अस्य धनूंषि स्थिराणि भवन्ति ( ७।४६।१)। दिवोऽवसृष्टा नेन विद्युदशनिकल्पा भवति, या नराणां कृते अहितकारिणी भवति ( ७।४६।३,अथर्व ११।२।२६)। तिग्मायुधधरस्य महेश्वरस्य धनुर्बाणेभ्यो देवाः अपि भीताः भवन्ति ( ७।४६।१, शत०ब्रा०६।१।१।१,६)। पुराणेषु गदात्रिशूल पट्टिशादयो रुद्रहेतय इति श्रूयते । शिव०वाय० १४।१५, ब्र०वै०ब्र० १६।६४, शत०ब्रा० ६।१।१।६)।अस्य त्रिशूलो नाम्ना विजयोऽस्ति वन० २३१।३७-३८)। एकदा रुद्रो वज्रहस्तोऽपि आम्नायते ( २।३३।३)। रुद्राणान्तु सहस्रं हेतयो भवन्ति तेषु केचित् सृकहस्ता निषङ्गिणः श्रूयन्ते ( यजु: १६।१०,३६,५२,६१)। निषङ्गुकासज्वरादयो व्याधयो रुद्रस्य आयुधस्थानीयाः सन्ति, याभ्यो जनाः त्रसिताः भवन्ति (अथर्व० ११।२।२२,२६; ६।९०।१,३)। सम्राजौ भवशर्वौ अपि वज्रहस्तौ समाम्नायेते ( अथर्व ४।२८।३,६-७)।

## प्रकृति:

प्रकृत्या क्रोधनशीले उग्रे वा रुद्रे अयथाक्रियमाणैः नमोभिः, दुस्तुत्या, विसदृशैः देवैःसह आह्वानेन वा मन्युः जायते( २।३३।४,६,१५, ७।४६।४)। सूक्ष्म - दर्शिनो महादेवस्य दुःखकारिणी बुद्धिः यजमानैः स्तोत्रैः हविर्भिः वा पनीयते

(२।३३।१४, अथर्व ११।२।२७)। क्रोधनशीलत्वात् उग्रकर्मनिरतत्वाच्चैव सम्भवत एष: भीषणतत्त्वनिर्मित इति ब्रूयते ( ऐ०ब्रा०३।३३।१)। परं त्र्यम्बकं रुद्र: सात्त्विक सात्त्विक एव ब्रूयते ( श्र० अध्याय७)। अन्यत्र सम्भवत: प्रलयकर्तृत्वात् पिशाचरुद्रगणसेवितत्वाच्चासौ तामसीति विश्रुत:। दुष्टदलनार्थेन तमोगुणयुतं महाघोरं रूपमुपैति रुद्र:, अन्यथा भक्तेभ्यस्तु असौ आशुतोष: शिवो भवति। अस्मात् कारणादेव असौ 'मीढ्वस' इति नाम्ना प्रथितो भवति ( अथर्व० ११।२।२३,ऋ० १।११४।३ , भाग० ४।७।६,१६)। 'मीढ्वस' इत्यस्य पदस्य तुलनातिशयवाचकानि रूपाणि वेदेषु न केवलं रुद्राय भवन्ति अपितु इन्द्रादीनांकृतेऽपि ( ८।२५।१४,१०।८५।२५)। श्री ब्लूमफील्डादयस्तु रुद्राय एव अस्य रूपाणीति भावयन्ति ( अ०फा०१२।४२८-६,तत्रैव पृ० १४२)।

## कर्मनिरूपणम्

अथ रुद्रकर्माणि । भिषजांवरेण रुद्रेण दत्तै: सुकरै: औषधै: जना: शतं हेमन्तान् पश्यंति । कृत्स्नशरीरव्यापकात् रोगात् भेषजै: अपाकृत्य नाशयति। अपि चासौ भेषजै: वीरान् पुत्रान् उदर्पयति। सुधन्वा रुद्रो विश्वस्य भेषजस्य ईश्वरो भवति। अत एव भिषजां मध्ये भिषक्तमो रुद्र इति ब्रूयते --- प्रथमो दैव्यो भिषक् ( २।३३।१,२,४, ५।४२।११, यजु: १६।५,वा०सं० १६।५)। असौ हस्ते भेषजानि धारयति ( १।११४।५, ७।४६।३)। गवाश्वपुत्रपौत्रादीनां रुजां नाशाय रुद्र औषधयो ददाति ( यजु: ३।५६)। भेषजस्य रुद्रसम्बन्धित्वं मन्त्रान्तरे समाम्नातम् । या ते रुद्र शिवा: तनू: शिवा विश्वाहभेषजी शिवा रुद्रस्य भेषजी( तै०सं० ४।५।१०।१)। गवादिविषयभेषजमपि अन्यत्राऽऽम्नातम्। भेषजं गवेऽश्वाय पुरुषाय भेषजमथोऽस्मभ्यं भेषजं सुभेषजम् (तै०सं० १।८।६।१)। रोगेभ्य: पशून् पातुं रुद्रयज्ञविधानमपि कु सूत्रेषु दृश्यते( आ०गृ० ४।८।४०, कौ०गृ०५१।७)। अत्र उदकरूपौषधोपेतो रुद्र इति सायणाचार्य: तथा चानुसरन्ति केचित् पाश्चात्या: एतां रुद्रौषधिं वर्षाजलमिति मन्यमाना: ( १।४३।४, तु०की०१०।५९।६, ब्लूम: अ०फा० १२।४२५-६, हार्डी, वे०मी० ८३-४, हाप०ओ०सो० दिसम्बर १८६४~~सिलव्ना~~ पी०८८०)। वर्गैनमहाशयस्तु एतांसोमरूपेण स्वीकरोति ( ल०रि०वे० ३।३२)।परं पाश्चात्यानां मतयो:एकदेशीयतादोष: समापतति। अत एव ग्राह्यत्वं नार्हन्ति ।

एतद्विपरीतञ्च आचार्यपक्षे तु 'जलाषभेषज' इत्यस्य पदस्य व्याख्यानं वा प्रकारान्तरेण प्रयोगो रुद्रप्रकरणे प्रायः प्राप्यते । एतैः प्रयोगैः रुद्रप्रसादात् जलमात्राणाञ्च औषधिरूपत्वञ्च अभिव्यज्यते ( अत्र जलमात्रेण त्रिविधं शुद्धजलं उच्यते--- भौमिकम्, वर्षाजलम्, नदीजलञ्च ।) अप्सु विश्वानि औषधानि वर्तन्ते इत्यादिभिः श्रुतिवचनैः भवति असन्दिग्धञ्च अप्सु विश्वभेषजत्वम् ( १,२३।१६,२० )। आधुनिकैः प्राकृतिकचिकित्सकैः बहूनां रोगाणाञ्च उपचाराः अद्भिरेव क्रियन्ते(। अथर्व० ६।५७।२) अत्र प्रवादितो रुद्रो गोमूत्रफेनकं व्रणशोधकत्वमारोपयति ।

यो रुद्रोऽग्नौ यष्टव्यरूपेण, अप्सु वरुणरूपेण, वीरुधेषु च ओषधिरूपेण स्थितो, स एव इमानि विश्वानि भुवनानि भूतजातानि वा विरचति ( अथर्व ७।८७।१) । एको हि रुद्र ईशनीभिः इमांल्लोकानीशते । स एव भुवनानि संसृज्य अवति प्रलयकाले च आत्मसात् करोति। विश्वाधिपो रुद्रो देवानां प्रभवोद्भवश्च अस्ति। स एव पूर्वं हिरण्यगर्भं जनयामास ( श्वेता०उप० ३।२।४१)। पुराणेष्वसौ प्राधान्येन प्रलयंकरो देवो भवति( शि०रु०सं०६।५२)। अथवा शिव इति नाम्ना प्रार्थितोऽयमेव महान् दानशीलो देवो भवति। ईशानात् भुवनस्य भर्तुः रुद्रादसुर्यं बलं कदापि पृथक् न भवति। नहु चिन्तो तस्मादोजीयस्तरञ्च अन्यत् । तवसां मध्ये अयं तवस्तमोऽस्ति। पापकृतां नृणामसौ हन्तेति श्रूयते ( २।३३।३,६-१०;४।३।६)। स्थूयमानो रुद्रो विबध्नाति अन्नं स्तोतृषु ( २।३३।६,१२; ७।३६।५)। वसुधनस्य दाता रुद्रो धनानामैश्वर्येण, दिव्यानां वा साम्राज्येन प्रज्ञायते ( २।३३।१२;७।४६।२)। अनेन कृता वृष्ट्या जनेषु अन्नानि वृद्धिमुपगच्छन्ति । यैः पूरिताः प्राश्च रुद्रप्रसादमेव प्रकटयन्ति । जनसमृद्धिः सर्वत्र रुद्रकृतैवास्ति अतएव तया असावेव अभिव्यज्यते इत्यर्थः।यद्वा वर्षाकाले दिव्यानां द्योतनशीलानां चपलानामेव सर्वत्र साम्राज्येन असौ ---- वृष्टयर्थं प्रसन्नो रुद्रः---- प्रज्ञायते। सर्वाण्यैश्वर्याणि रुद्रकृपाजनितान्येव सन्ति यतो हि रुद्रमनिच्छन्ता मनुष्याः दुःखेषु पतन्ति ।स्वजनानां रक्षणार्थमसौ कवचं प्रयच्छति ( १।११४।५)। नभ्रलन्तोऽयं जलाभावे सति( भावकाले) कं वर्षाजलं दातुं प्रतिशृणोतीत्यर्थः। सूर्यसंदर्शनात् पार्थक्यमनिच्छन् जनाः रुद्राणां स्वजनेभ्यो दातव्यं सुखमधिगन्तुं प्रार्थयन्ति ( २।३३।१)। रुद्रो जनान् अंहसः पारं पारयति

कर्मेण , पापांश्च निवारयति ( २।३३।३)। ग्रामवासिनां तेषाञ्च गवाश्वादीनां पशूनां प्रवृद्धयर्थं नीरोगार्थञ्च गाथपते: कपर्दिनो जना: स्तुतयो निष्पादयन्ति ।दाय-वीरस्य अस्य सुमतिं यजमाना: देवयागेन प्राप्नुवन्ति। तेषां प्रजा: अहिंसिता: भवन्ति। रुद्र: तासु तासां सुखमिच्छन् चरति। कवि: , वङ्क्रु:, यज्ञसाधकोऽयं स्वजनरक्षणाय दव्यं क्रोधञ्च दूरदेशे प्रेरयितुं प्रार्थितो भवति ( १।४३-११४।१-४,७-१०)। सतां पालयिता दिव्यस्य रेतसो पर्वतसानेव निवसति ।स्वजनै: प्रार्थितो रुद्रसेना तेषामरीन् निवपति ( २।३३।७,१०-११)। आदित्यादिभि: साकमसौ यज्ञभवति (३।८।८)। यजमानानां वीर्यवन्त: पुत्रादयो रुद्रप्रसादात् शत्रून् अभिभवन्ति (२।३३।१)। सूतो जनानां पालको वा यं शत्रूणां कृते व्याधिरूपो भवति ( यजु: १६।१८)। पुण्यकीर्ते: जगद्धेतो: रुद्रस्य प्रसादात् उपासको जन्ममृत्युबन्धनात् मुक्तिमधिगच्छति यथा कोऽपि नर: कर्कटीफलं बन्धनात् मुच्यति । तत्प्रसादादेव जना: सायुज्यतां प्राप्नुवन्ति (अथर्व० १७।५६।१२)। रुद्रेण गोप्यमाने यज्ञे राक्षसादयो नोपसीदन्ति शीघ्रम् ( १०।६१।६३ । अत्र वास्तोष्पतिं रुद्रार्थे मन्यते श्री सायण:। अनेन रुद्रस्य वास्तु कलानैपुण्यं सूच्यते तथा च श्रूयते अन्यत्रापि -----

" नमो रोहिताय स्थपतये वृक्षाणां पतये नम: " पंक्तिपति: असौ औषधीनामपि पति: भवति । वणिक्कर्मकुशलोऽयं चौरवञ्चकादीनां दुष्टानां नियन्तास्ति ( यजु:१६।१६-२३)। युद्धे रुद्र केशिनो रथं पातयति ( अथर्व ११।२।१८) । गृध्रश्वानशृगाला:, मक्षिका:वयांसि चापि रुद्रस्यैव सन्ति, ये जनानां शरीराणि अदन्ति । यद्वा मृगहंससुपर्णादयो वनचरा: पशुपक्षिणो ब्रह्मणा रुद्रायैव कृता: भवन्ति येन जनपशवोऽस्मै बाधा: न भवन्तु ( अथर्व ११।२।२,२४-२५)। अनया श्रुत्या, जनपशुमारकरोगान् अन्यजीवेषु आरोपयतु यद्वा विद्युदस्त्रेण तान् रुद्रो मा हन्तु इति ज्ञेयो भवति ।

अस्य आयुधानि गोनरघातकानि सन्ति येभ्यो रक्षणाय स्तौत्येनं यजमान: ( १।११४।१०)। अयाज्ञिकानसौ संहरति दुष्टान्( अथर्व११।२।२३)। रुद्राय प्रयुक्तं वृत्रविशेषणं दृष्ट्वा श्री मैकडानल: एनं देवं वृत्रघकल्पे प्रस्तौति ( ४।३।६, वा०रू०बू०४।८।३२, तत्रैव पृ०१४३)। परं न भवति तथा भावनीयमत्र । इन्द्रादीनामिव असावपि अयाज्ञिकानां दुष्टानामेव हन्ता भवति ( अथर्व ११।२।१३,२१,यजु:१६।२०-२१)

न च मानवमात्राणाम् ---- तथा सति रुद्रे देवत्वाभावो भविष्यति, तच्च न सम्भवति ' मीढ्वः , प्रथमो दैव्यो वा रुद्र इति श्रवणात् ( १।११४।३, यजुः १६।५ शान्ति० २०।१२) । किञ्चिदं परिवर्ज्य अन्येन केनचित् रक्षसा रिपुना वा सह रुद्रो वेदेषु युद्धरतो न श्रूयते। पुराणेषु त्रिपुरविजयप्रसङ्गे जलन्धरादीनां रक्षसां वधप्रसङ्गे वा सो समरारूढो भवति ( कर्ण० ३४।११४, शान्ति १६६।५४-६३;रु०शु०अ० १०।५७।२४)। वेदेषु तु सामान्यतो रक्षसां दुष्टायाज्ञिकानाञ्च व्याधिनाणैः सहतामन्यायते रुद्रः( अथर्व ११।२।२१-२३) । विषविद्युतज्वरादिभ्यो धेनुधनपुत्रादीन् वीरत्वाञ्च पातुं स्तोत्रैः यजमानो रुद्रं प्रसादयति ( अथर्व ११।२।१, २६;ऋ०२।३३।८)। पशुपतिः भूत्वापि असौ पशून् ( हिंसकान् अयाज्ञिकानां दुष्टानां वा) निहन्ति ता०महा० ६।६।७)। इन्द्रादीनामिवासौ शत्रुसूदनाय यदा कदैव युद्धरतो न भवति, अपितु प्रलयङ्करत्वाद् अहर्निशं व्याधिवाणैः दुष्टशत्रून् निपीडयन् सर्वदा युद्धरत एव भवति ।

स्वरूपमान्यता:

श्रीपिशेल्ब्लूमफील्डौ रुद्रं दिवोऽरुणवराह इति मन्येते। परम् (११११४।५) अत्र आगतस्य अरुषपदस्य ' अरुण ' इत्यर्थे प्रयोगो न सम्भवति कथञ्चिदपि न चेदं पदं ' वराह ' इत्यस्य पदस्य विशेषणत्वमर्हति यथा विचारयतः एतौ महानुभावौ ( अ०फा०१२।४२६,वै०स्टू०१।५७,ओ०वे० धर्मश्च वेदश्च ,पृ०३५६), अपितु वराहरूपो रुद्रस्य विशेषणत्वं भजेते।यजुरथर्ववेदयोः लोहितो रुद्र इति श्रुत्वैव सम्भवत एवं भावयतो भवन्तौ। यदि स्वीक्रियते एतयोः मतं तर्हि उदयन् अस्तं गच्छन् वा सूर्यो भविष्यति दिवोऽरुणवराह इति। परमनेन कासज्वरादीनां शरत्वंसिद्धिं न विन्दति न च रुद्रत्वम् । अत एव अमान्यं भवति। यद्वा भाषा- साम्यसौकर्यं प्रति पाश्चात्यानां मोहोऽरुषोऽरुण इति विचारयितुं प्रेरयति । अपि च नात्र दिवः पदं षष्ठ्यन्तमस्ति तत्तु पञ्चम्या एकवचन एव मान्यं भवति। यतो हि अत्र पुष्थानीयो रुद्रो नमसा समाहूतो भवति। ' वराहं ' वराहारम् उत्कृष्टभोजनमिति सायणः। उत्कृष्टम् ऊर्ध्वं कृष्टं ( अत एव वरम् ) जलं यस्य भोजनं सः तम् उत्कृष्टभोजनम्। यद्वा वृष्टिकर्मणा जीवेभ्यः उत्कृष्टं भोजनं यो ददाति सः तम् । यद्वा वराहं वराहवद् दृढाङ्गम् इति। अरुषम् आरोचमानमिति सायणः। यद्वा रुषा हीनमित्यरुषम्। सौम्यमूर्ति मित्यर्थः। एवं ... कथञ्चिदपि।

दिविस्था: रुद्रा: स्वघर्षणविस्फोटनशक्त्या तारपिण्डा: पृथ्वीं संसृज्य स्वयं तत्रैव बृहज्ज्योति: स्वकृतै: विस्फोटै: पुन: पुन:समेधिरे । सततविस्फोटै: विद्योतमानेभ्यो रुद्रेभ्यो मानवोऽत्रं प्रसरन्ति ( यजु: ११।५४)। तत्र निखिलब्रह्माण्डे भाविन: तेजोमया: उपद्रवा: कुलोकस्थानां नानारुद्राणामेव प्रतीकरूपा: सन्तीति वाच्यो भवति ।

पाश्चात्यास्तुरुद्रो विद्युतो हानिकारपदस्य द्योतक इति मन्यन्ते( मैक० व०ए० ख० ७७।६५७, हाप० प्रो०आ० दिसम्बर १८६४ पृ० सी०एल०आई० , हा०ह० ११२, तु० की०,के०क० ३८, नोट १३३)। अनेन भूमौ पतनशीला विद्युन्मात्र ज्ञेया भवति तथापतति चात्र एकदेशीयतादोष: । अपि च भौमिका: कुलीकाश्च रुद्रा: न भवन्ति ज्ञेया: अनेन । हानिकारपदस्य एव द्योतकत्वात् रुद्रे शिवत्वहानि: जायते । अत एव देवत्वहानिरपि आपतति तत्र, या च सर्वथा अनभीष्टा अनुचिता या एव अस्ति ---- वेदविरुद्धत्वात् । रुद्रो वा एष यदग्नि: ( २।१।६,तै०सं० ५।४।३।१) इत्यादिभि: श्रुतिवचनै: ' रुद्रो वैद्युताग्नि ' इति सायण: स्वी-करोति ( १०।१२६।७) अनेन विद्युद्रूपा: अन्तरिक्षीयरुद्रा इत्युक्तं भवति तच्च युक्तमेव सर्वथा--- रौद्रशिवत्वयोस्तत्र दर्शनात् ।

झंझावातस्य अग्नेश्च रुवयोर्व्यञ्जको रुद्र एतयो: संयोगेन क्रोधविनाशयो: देवता सञ्जाता । अत एव एनं शतरुद्रियमित्युच्यते ---- एवं विचारयति श्री वेबर: ( इ०स्टू०२,१६-२२)। नानेन विद्युत्वस्य जलाकर्षणत्वस्य अवभासता भासकत्वञ्च। अपि च गुणाभावो रवात्मके रुद्रे देवत्वाभावो जनयति। व्यवहारदृष्ट्या मूढोऽपि रवे देवत्वबुद्धिं न करिष्यति, आर्याणान्तु कथैव का। पाश्चात्यानां नास्तिकबुद्धिरेव--- आर्या:आरण्यका: आसनादौ अत एव भयङ्करेषु यद्वा उपयोगिषु जडेषु देवत्वमारोपयन्ति स्म---- इति मन्यमाना एवं निर्गुणं रवं देवमिति मन्तुं प्रभवति, न पुन: अस्माकमार्याणाम् । श्री विल्सनस्तु एनमिन्द्रस्य अग्ने: वा एव रूपमिति मन्यते ( अ०प्र०म० पृ०२६-७,३७-८; तु०की०दि०पृ०६-१०) ओडरश्च मृतकानाम् आत्मानाम् ईशो मन्यते यो वातैव वेगवान् अस्ति ( तु०की० पृ०१५३,बी०आ० ६।२४८)। भूतपति:

( अथर्व०११।२।१ ), भूत गणाधिसेवितो रुद्र इति वा श्रवणात् ( पुराणेषु) सम्भवतोऽयं रुद्रं तथाविधं भावयति । अस्त्वेवं, परं स्वयं कस्यश्चिन्मृतस्य आत्मा नास्ति । स्वयन्त्वसौ शिवोभव:, कपर्दी, कैलाशपतिरस्ति। परमनेन पाश्चात्यमतेन पार्थिवरुद्राणामेव भवति प्रतिनिधित्वं न पैतृलोकस्थानमपि । ओल्डनवर्ग एनं वनपर्वतानां देवतेति मन्यते यतो: ग्रामाश्रितेषु व्याधिभ्राणात् प्रदिशपति ( ओ०वे०२१६-२४, तुल्की हाप० प्री० ती०१,१०)। महेश्वरो रुद्र: कैलाशे वसतीतीयं श्रुति: यद्वा पर्वतेषु उच्चतां प्राप्य मेघा: गर्जन्ति, वर्षन्ति, विद्युतो विद्योतयन्ति, वनानि च वृष्ट्या वर्धयन्ति इतीयं धारणा रुद्रं भगवन्देवपदे स्थापयति। यद्वा वन प्राप्या: ओषधय:। अत एव भेषजो रुद्र इति श्रूयते । अनेनापि मतेन पार्थिवरुद्राणामेव प्रतिपादनं भवति। अस्य मतस्य प्रतिपादको वनपर्वतान् व्याधिप्रसारका इत्यनेन कारणेन तं भगवन्देवता कथयति । अत्र एकमेव गुणमुद्दिश्य रुद्र स्वरूपनिर्धारणं कृतमिति सुस्पष्टमेवास्ति । अनुचितेयं परम्परा --- देवानां बहुगुणत्वात् । अपि च रुद्रनिर्वचनादौ कोऽपि देव: स्वरूपेण स्थिरतां न प्राप्स्यति । अन्यच्च उपचाराधारा: वनपर्वता: ओषधिमयत्वात् । एकस्मिन् एव द्वयो: विरुद्धगुणयो: समारोपो न सम्भवति। यद्वा वैद्यो रोगान् प्रसार्य नोपचरति। एतेषु पाश्चात्यमतेषु द्विविधौ दोषौ समापतत:। तत्र प्रथमस्तावत् रुद्रस्य स्वलोकस्थिति: द्वितीयश्च स्वरूपेण एकस्यैव गुणस्य अभिव्यक्ति:। अत एव ग्राह्या: न सन्ति।

यत्र अग्निरेव रुद्र इति श्रूयते ( २।१।६, तै०सं० ५।४।३।१) तत्र यज्ञाग्निरिव सुनियन्त्रितोऽग्नि: जनानां शिवाय भवति यथा शिव:।परमसावेव अनियन्त्रिते सति रौद्ररूपेण संहरति । एवमेक एव अग्नि: रुद्र एव नाशनिर्माणगुणद्वयोपेतो भवति। सम्भवत: अत्र याज्ञिका: सचेता: क्रियन्ते यत् सुपूजित: सुनियन्त्रितो वा यमग्नि: रुद्र एव आशुतोषाय प्रभवति अन्यथा तु संहाराय। त्वमग्ने रुद्र ' इत्यादिभिर्वचनै: रुद्र गुणसम्पन्नोऽग्निरिति ज्ञेय: ।

पार्थिवरुद्रेषु भूतपिशाचाद्यो ये रुद्रसैनिका इति स्मृता: सन्ति, येषामीशो मीढ्व: कैलाशपति: शिवो भवति ।

अस्माकं भारतीयमान्यता

एवं त्रिषु लोकेषु विविधरूपेषु व्याप्तानां रुद्राणाम् एक एव ईशो महारुद्रो भवति य: शिवलोके शिव नाम्ना विराजते --- सृष्टिस्थितिप्रलयसामर्थ्ययुक्त:। अत्र पाश्चात्यानां भूतवादिनी बुद्धि: वेदविदितदेवानां सत्ता भौतिकपदार्थेषु पश्यति। यतो हि तेषां पाषाणयुगस्य पूर्वजा: तथा कुर्वन्ति स्म यथा च ते स्वयमेव स्वीकुर्वन्ति। कामी स्वतां पश्यति । अतस्ते भवोपयोगकारणादेव तत्र तत्र अस्माकमपि देवत्वमिति वदन्ति । परमास्माकं देवपरलोकधारणा सनातनी सत्यरूपा च अस्ति । योगदृष्ट्यभावे पाश्चात्या: नास्तिका: वा परमेश्वरं देवलोकांश्च न स्वीकुर्वन्ति । परन्तु अस्मिन् विषये जयपुरस्थस्य राजस्थानविश्वविद्यालयस्य परामनोविज्ञानविभागेन सङ्कलितानि वृत्तानि, कल्याणस्य परलोक पुनर्जन्माङ्के प्रकाशितं सुलेमानचरितम् (पृ० ६०३) अन्यानि च देशदेशान्तराणां पुनर्जन्मवृत्तान्तानि (पृ० ५३७-६०५) , स्वामिनो मुक्तानन्दस्य अन्येषाञ्च योगिनामनुभवानि ( चित्०पृ० ५३-१८०, अमेरा: म० गि०)। विश्वसनीयाम् प्रमाणाम् प्रस्तुतिं कुर्वन्ति। अपि च अत्र केषाञ्चित् आस्तिकबुद्धिमतां पाश्चात्यमनीषिणां[1] कार्यै: प्रमाणी क्रियते पुनर्जन्ममतं येश्च सूक्ष्मशरीरसत्ता[2] परलोकसत्ता वापि ज्ञेया भवति। जीवपरलोकसूक्ष्मशरीराणां सत्ता वेदादिषु तु बहुश एव श्रूयते ( १०।८८।१५, तै०आ० ६।१।४, नि० ७।३, कौषीतकी०१।२,३।४, बृह० ४।४।६)। अस्त्यत: शिव: तल्लोकश्च । तत्र पार्थिवरुद्राणां ( प्रेतपिशाचादीनाम्) सत्ता सरलतया ज्ञेया भवति परं तेषामीश्वरस्य शिवस्य सत्ता श्रद्धाभक्तिगम्या स्ति । अंतरिक्षीया: द्युलोकनिवासिनो वा रुद्रा क्रमश: सूक्ष्मातिसूक्ष्मशरीरै: विद्यमाना: तत्र तत्र स्वोचितानि रौद्रकर्माणि कुर्वन्ति यानि वयं मेघेषु महनक्षत्रेषु च विद्युद्विस्फोटरूपेषु

---

१ क- डा० झल: सू०व हि०म०अनु- ख- प्रा०स्टी०: चि०पृ० पुन० ।
ग- रा०वि० पुन०अ० । घ- कै०: आ०वि०कथा, पृ०३२३-२४,४२५। प्रयोग० आ० अनु०, आ०जगत् ।
ङ० फ्रो०ना०: आ०वि०वि० । च- अ०परा०-- परि० ।
छ- वाकर: पुनर्जन्म । ज- लाज: मनु० पुन:, पृ०२२१।
न- ओ० वर्ब शा०, १६५८, पृ०२५० । ६ - अ०का० डा० पुन०पृ० १०४।

२ मु०शा०अ०१, वि० २,८,१७-१६, शा०अं०पृ० ५।७०-७३, पन्न०पद०२१, निम्ब०: प्र०पृ० ३,६,१-- महर्षि, वेंकटा०(दश०) ३, प्रकरण: वे०म० ( दश० भा०), शा०प्र० योग- मनो०पृ०२७७।

पश्यामः । सर्वाः लोक्याः तेषां स्थितिः योगदृष्टिगम्यैवास्ति ।

## व्युत्पत्तिः

श्री मैक्डानलोऽस्य शब्दस्य व्युत्पत्तिम् अनिश्चितमिति कथयति । परं सा तु सुनिश्चितैवास्ति। तथा हि--- रुद्+ णिच् + रक् = रुद्रः। रुद् क्रन्दने । सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ( तै०सं० १।५।१।१, शत०ब्रा०६।१।३।१०, निरुक्त १०।५, भाग० ३।१२।१०)। पाश्चात्याः अपि प्राय एवं व्युत्पत्तिं स्वीकुर्वन्ति( कुन: हे०पु० १७७, कुल्ली० २।२७८, वेबर, इ०स्टु०२।१९-२२, मैक्स०: ओ०रि० २१६, फार्न प्रा०: ली०गे० ४०।३५९-६१)। सायणाचार्यस्तु स्वतपदम् १।११४।१) अत्र एवं व्याख्याति --- रोदयति सर्वमन्तकाले इति रुद्रः। रुत् भवरुजं तद् द्रावयति अपगमयतीति रुद्रः। रुतः शब्दरूपाः उपनिषदः ताभिः द्रूयते गम्यते प्रतिपाद्यत इति रुद्रः । यद्वा रुत् शब्दात्मिका वाणी तत्प्रतिपाद्यात्मविद्या वा तामुपासकेभ्यो ददातीति रुद्रः। रुणद्धि आवृणोतीति रुदन्धकारादि ।तद्दृणोति विदारयतीति रुद्रः । रुत् दुःखं तस्य द्रावयिता रुद्रः। यद्वा रौति मायमिष्ट्वा नराः दुःखे पतिष्यन्तीति रुद्रः। इत्यपि श्री सायणः ( स्कन्द २।१।६, ७।३५।६)। पिशलग्रासमैनौ[1] रुद् धातुं रञ्जर्थकं शुद्धर्थकञ्च मन्येते । एतावेव अनुसरन् चार्ल्स महोदयस्तु क्रमशः ' रक्तवर्णः ' आरोचमानो ' वा रुद्र इति भावयति ( वे०मी०८३)। परन्तु वार्ता एतदर्थाभावे तन्न युक्ति युक्तं प्रतिभाति, यद्वा नानावर्णो रुद्र इति श्रवणात्।

---

१ वृ०ऋ०--- पिशल: वे०स्टु० १।५७, ली०गे० ४०।१२० ।

## वायुवातौ

' वातो ह प्राण: '

उपनिषत्सु वायु: अष्टवसुषु एक: श्रूयते ( बृ०आ० उ० ३।६।३, अथर्वशिर: ८।१।१७), अत्र च तथैव रुद्रेष्वपि इति( अ०शि०१।८) । परं ऋग्वेदे सोमपानाय आहूतोऽयमपि अन्येषां देवानामिव एव रथेन यज्ञमधिगच्छति ( ४।४८।१)। वायुवातयो: भेदं अन्यत्र पाश्चात्या: वातं विध्वंसकगुणान्वितं तत्त्वमितिकथयन्ति ( [illegible] ) वायुश्च मुख्यदेवता । श्री सायणाचार्यस्तु तयोरभेद एव प्रकटयति सर्वत्र । सो वातं वायुपर्यायतया स्वीकरोति( १०।१६८[१-४] – १८६।१-३)। परन्तु अतिसूक्ष्मियुक्तन्तु एतदेव प्रतिभाति यत् प्राणत्वेन परिव्याप्नोति शरीराणि वात: तथा चाम्नाये ' वातो ह प्राण उच्यते ' ( अथर्व० ११।३।१५)। अथवा अयमेव श्रूयते देवतात्मा भुवनगर्भो वा ( १०।१६२[१३]–१६८[४] )। उषाप्रकाशको वायु: तीव्रगतिसम्पन्नोऽस्ति ( ४।४८।४-५)। परं मरुद्भ्यो गत्या हीनो भवति- तेषां जनकत्वात् ( १।१३४।४)। अत्र (१०।६२।१३) असौ यज्ञनिष्कृत्यर्थमपि--- वृष्ट्यर्थम् ---- स्मृतो भवति ।

मन्त्रसूक्तसंख्या ---

वाताय मात्र ऋग्वेदे द्वे सूक्ते ( १०।१६८–१८६) सप्त मन्त्रात्मके स्त: । वायवेऽत्र त्रीणि सूक्तानि स्वतन्त्ररूपेण सन्ति एकोनत्रिंशच्च मन्त्रा:। अत्रैव त्रिंशन्मन्त्रा इन्द्रेण सह, षोडशमन्त्राश्च अन्यै: सम्यं समर्पिता: संदृश्यन्ते। अथर्ववेदे यजुर्वेदे च वायुता-भ्यां क्रमश:पञ्चदशमन्त्रोत्तराणि त्रीणि सूक्तानि, एकोनविंशन्मन्त्राश्च उपलभ्यन्ते ।

## अन्तरिक्षदेवप्रतिनिधि:

वैदिकीश्रुत्यां वायु: इन्द्रस्थाने अन्तरिक्षदेवानां प्रतिनिधि: भवति ( निरुक्त ७।५)। श्रुतेऽप्येवं तयोर्लोक: ( यजु: २०।२६)। लभ्यते वायौ मानवत्वा-रोपणं न पुन: मानवा अवयवानाम्, वाते च तदभाव एव। रात्रे द्यावापृथिव्यौ वायुं क्षिप्रं जज्ञाते स्तुतयश्चैनं धनप्राप्त्यर्थं प्रेरयन्ति ( ७।६०।३)। अपि च विराट् पुरुषादसौ

जात इति श्रूयते ( १०।९०।१३, बृ०आ०उ० प्रथमे ब्राह्मणे, मु० २।१।३, ऐ०१। १।४)। अत्र ( अथर्वशिर० ३।२।६) वायुः रौद्रलक्षणः सन्ततिरिति उच्यते । पञ्चभूतानामुत्पत्ति-क्रमे आकाशाद्वायुस्ततोऽग्नि इति श्रूयते( तै० उ०२।१)।

## सम्बन्धाः

सः त्वष्टुर्जामाताऽस्ति ( ८।२६।२१-२२ , यजु: २७।३४); परमत्र नाख्यातोऽस्य भार्याऽऽख्या:। श्रीमद्भागवते ( ६।६।४४) रचना त्वष्टुः कन्येति उच्यते। सम्भवति सैव वायुभार्येति। ब्रह्मवैवर्तपुराणे ( सं० १।३०४) अस्यैव वामपार्श्वो-त्पन्ना वायवी भवति तस्य पत्नी। यजुर्वेदे स्वं मारुत इत्युच्यते ( १८।४५), तथापि ऋग्वेदे ( १।१३४।४) मरुतो वायोरंश भूताः इति श्रूयते । नात्र भावनीयो विरोधो यतो हि वायौ वाति सत्येव आगच्छन्ति प्रचलन्ति च मरुतः, यद्वा वेगे वर्धिते वायुरेव मरुत्संज्ञका जायत इत्यर्थः। अत उच्यते मरुतो वायुजाता इति। मरुत्सु गते पुनरपि वायुरेव वाति। अतो वायुः " मारुत " इत्याम्नायते ।

## अद्भुतरूपः

अस्ति वायुः अद्भुतरूपवान् ( ८।२६।२४ यजु: २७।३४), श्वेतवर्णो दर्शनीयश्च ( १।२।१,७।९१।३)। तस्य वपुः स्तुत्यो धूलवच्छुद्धश्चाऽस्ति, स्वयमेव तच्च राजते ( ८।४८।२८)। महत्त्वेन व्याप्तपृष्ठोऽयं तेजोमयोऽर्चिमयश्चाऽपि श्रूयते ( ८।२६।२४ , अथर्व २।२०।३)। इन्द्रेण सह समाहूतोऽयमत्र ( १।२३।३) ऋषिन्यायेन सत्वादा उच्यते। सोमपीतये वायोर्नाड़ि सोमगुणं वर्णयन्ती सोमयाजिनो-ऽधिगच्छति करोति च तेषामपि गुणकीर्तनम् । वन्यशांसि विस्तारयति ६ इत्यर्थः (१ ।२।३, ४।४७।१)। शुभ्र उषसः परावति अस्मै चित्ररश्मीणां भद्राणि वस्त्राणि विस्तारयन्ति यद्वा यागगृहेषु नानावर्णज्वालावासांसि विस्तारयन्ति। ज्वालानां चित्रत्वम् अन्यत्राऽपि दृश्यते ( २।१०।२, १०।१।२)।

## सोमपायी वायुः

अन्येषां देवानामिव असावपि यज्ञेषु आस्तृते बर्हिषि उपविश्य हविषां भक्षणाय यद्वा दशापवित्रं सोमं पातुं बहुशः आमन्त्रितो भवति (१।१३५।१-४, ८।२६।२०, यजुः ३३।८५)। यज्ञेषु सुतं सोमं वायुः अन्येभ्यो देवेभ्योऽग्रं पिबति ( ४।४७।१, ऐत०ब्रा० २।२५, शत० ब्रा० १३।१।२।७)। अन्तरिक्षे असौ निवसति ( अथर्व ४।३९।३)। अस्यैव सूक्तस्य चतुर्थे मन्त्रे अन्तरिक्षं धेनुः वायुश्च वत्स इति श्रूयते। उपनिषत्सु असौ प्राणो भूत्वा नासिके प्रविशति यद्वा चराचरं व्याप्नोति ( श्वे०उ० २।६, ऐ० उ० १।२।४, कठो०२।२।१०)। तैत्तरीयोपनिषदि आकाशो द्यावापृथिव्योः सन्धिरूप्यो वायुश्च तयोः संयोजकः( १।३)। अनेन तस्य आकाशपर्यन्त-व्याप्तिः सूच्यते ।

## वाहनसाधनानि

अस्य वाहनेषु रथा अश्वाश्च प्रमुखाः सन्ति । अश्वाः मनोयुजोऽरुणाः, पृथुपार्श्वयुक्ताः, बलवन्तो युवानः, अतिक्षिप्रगतिवन्तो गिरौक्षः, सूर्यरश्मयः इव हस्ताभ्याम् अनिग्रहीयाश्च आम्नायन्ते ( १।३५।६, ४।४८।४,८।२६।२३)। सह०स्रशः ते नवतिर्नव शतं वा ज्ञायन्ते ( ४।४६[३]-४८।४, यजुः ७।७, २७।२८) । क्वचित्तु रोहितवर्णौ, अरुणवर्णौ च द्वावेवाश्वौ रथे भवतः ( १।१३४।३)। परं प्रायोऽस्य अश्वाः नियुत्संज्ञया ज्ञायन्ते तथा च यास्कोऽपि ( नै० १।१५,ऋ०१।१३५।१-४, २।४१।१, ४।४८।३)। अथर्ववेदे ( ७।४।१ ) एकादश द्वाविंशति, त्रयस्त्रिंशत् सह०स्याकाश्च अश्वाः यज्ञायेनमावहन्ति रथेन । अस्य देवस्य रथाः अपि सहस्रसह०स्यकाः स्मृताः (२।४१।१, ४।४८।५)। येन रथेन इन्द्रवायू आगच्छतः सो हिरण्यवन्धुरो दिविस्पृशः स्वध्वरश्च भवति ( ४।४६।४)। मेघविद्युद्भिः सार्धमागच्छत इत्यर्थः। अत इन्द्रसारथेः रथः आह्लादक इत्युच्यते ( ४।४८।१-२, ऐत०ब्रा०२।२५)। आहूयतेऽसौ यज्ञेषु गवाश्वपुत्रलाभाय यद्वा शान्त्यायुःप्राप्त्यै ( ७।३५[४,६]-- ९२।३)।

## कार्याणि

अथ वायुकर्माणि । पुरुस्पृहस्य रथस्पतेः वायोः प्रमुखेषु कर्मसु शत्रुहानिः, वृष्टिः, धनपुत्रदानञ्च भवति ( ४।४७।३-४) । देवेषु अग्रगन्ता सौ

यजमानेभ्योऽन्नानि अपत्यं ददाति ( ६।४६।६, ८।२६।२५)। यथाऽग्निः पृथिव्याम्, आदित्यश्चदिवि रेतो धारयति तथैव वायुरपि अन्तरिक्षे धारयति (७।३३।७)। अनाधृष्यो प्रतिधृष्यश्च वायुः कर्मणा स्वजनान् रक्षति नाशयति च शत्रून् स्वतपोहरा - र्चिभिः शोचिस्तेजोभ्याञ्च( १।१३४।५, ७।६१।२, , यजुः १८।४१, अथर्व०२। २०।१-५, ५।२४।८)। शुद्धत्वेन जनान् रक्षति, रिपूंश्च अशुद्धत्वेन अनाधृष्यगत्यादिभिश्च निहन्तीति। ईशानो वायुः स्वस्तिभिः स्वजनान् सदा पाति ( ७।६०-६२।५)। । देवदूतोऽयं पापानपगमयित्वा सन्तापान् नाशयति( १०।१३७।२, अथर्व ४।२५।१, यजुः ३८।७)। वायुर्देवता जनहृदयाय सुखकरं रोगशामकञ्च भेषजं प्रापयति ( १।८६।४, १०।१ ३७।३)। सताऽभिमतकामैः साकमागन्तुं प्रार्थितो वायुः कर्मक्षेण रूपात्स्वपन्तं यजमानं प्रबोधयति प्रकाशयति च ( १।१३४।३) तदर्थमेव उषसा रोदसी यथा जारः तन्द्रितां सतीं योषितं स्वसङ्गकेन प्रबोधयति ( ४।४६।२)। असौ शैत्येन ओषधीः पावयति, तासु स्थितं रसञ्च आदित्यमण्डलं प्रति वहति ( १०।२७।२३)। दिवः शिवं प्रापयति जनेभ्यः( ८।२६।२३)। नक्षत्राऽऽदीनां सुप्रभावान् प्रकाशोदकानि च प्रापयतीत्यर्थः। अत्र सायणाचार्यस्तु सर्वज्योतिषामाधारत्वात् तेषामाधारो भूत्वा द्युलोके तानि स्थापयेति भावयति । स एव जनेभ्योऽग्निहोत्रा दिकर्माणि कारयति तेभ्यः प्रेरयतिवा ( ८।२६।२५, यजुः३८।७)। यस्मिन् लोके सन्ध्रवायू सञ्चरतः तं पुण्यं लोकं प्राप्य जनाः दुःखानि नानुभवन्ति( यजुः २०।२६)। असौ यज्ञाश्वं रक्षति पुनाति च भूमिम्( यजु०२३।१३,३५।३)। वायुनैव पालितो वह्निरपानेन शनैः देहमध्ये ज्वलति यद्वा कुण्डलीमनिशं दहति( योगशिखो० ८५, शा०उ० ४)। दीयतेऽ- नेन यजमानेभ्यो बलाऽन्नवन्मतीनां दानम् ( ४।४८।१, ८।२६-४६।२८ , अथर्व० ४।२५।६)। केशिने सह वायुः भूतं सर्वं रसमुपमध्नाति अथवा मेघेषु विद्युतं जनयति ( १०।१३६।७)। विद्युदग्न्योः तेजो ( तयोः मृते सति) वायुमेव गच्छति । अतः सर्वाः देवताः वायुमेव प्रविश्य तस्मिन् सुप्ता न मूर्च्छन्ते ( कौ० ब्रा० उ०२।१२)। शरीरेषु प्रविश्य वायुः तत्रस्थैः दोषैः अनुरज्यते ( कठो० २।२।१०)।

## त्वगिन्द्रियाधिष्ठाता

वायुर्देवता त्वगिन्द्रियस्य अधिष्ठाताऽस्ति स्पर्शश्चाऽस्य गुणः ( तै०उ० १।५।२, सन्यासो० ७२, अव्यक्तो० २)। चक्षुस्त्वैव वायु इत्यादि वचनैः

प्रतिपाद्यते तस्य महत्त्वम् ( श्वे०उ० ४।२)। यथा श्वासेन विना जीवनं न दृश्यते तथैव वायुं विना कोऽपि जीव: स्थातुं न शक्नोति। तैत्तरीयोपनिषदि (१।७) एनं ज्योतिषाम् आधिभौतिकश्रेण्यां द्वितीयमिति कथयन्ति। केनोपनिषदि (३।८) यक्ष-वायुसम्वादे वायु आत्मानं मातरिश्वा कथयति ।

## स्वरूपविचार:

अथ वात: ।वायुवातयो: भेदं कुर्वन् मैकडानलो वाते क्षिप्रतागुणस्य विध्वंसक-गुणस्य च आरोपणंस्वीकुर्वन् अन्यै: पाश्चात्यविद्वद्भि:सह तस्य नामधेयं झंझावातेन सम्बद्धं करोति ( ग्रासमैन:कु०त्सी०१०।२७४, लिमर: त्सी० आ० १६।१७०-२, १७६-८०, मैक: ज०इ०षो० २५।४८८, स्टोक्स बेबी० १६।७४)। योऽसौ क्षिप्रतानाम गुण: स तु वायुमरुद्गणौ अपि दृश्यते ( १।१३५।६) विध्वंसकगुणो वायौ न श्रूयते । वाते एतन्नामगुणस्य भावनांपाश्चात्त्येषु सम्भवत एते मन्त्रा: जनयन्ति ( १०।१६८।१-२, अथर्व ४।१५।१,८)। अस्मन्मते तु अपि देहगतवायो:--- वातस्य कर्मणामुल्लेख एव भवति । तथाहि-----

१- रथस्य गमनशीलस्य वातस्य देहस्थवायो: महिमानं माहात्म्यं नु क्षिप्रं ब्रवीमि । अस्य मृतकस्य घोष: प्रशस्यशब्द: ( जातौ एकवचनम् ) स्तनयन् अन्यै: सम्बन्धिभि: तस्य कीर्तनं कारयित्वा विविधं वर्धयन्, रुजन् अन्येषां ( कीर्तन-कारिणाम् ) च आयूंषि श्वासप्रश्वासै: क्षीणतां गमयित्वा तान् भञ्जन् नाशयन् वा वात एति गच्छति । दिविस्पृक् दिवस्पर्शी ( वात:) अरुणानि सम्बन्धीनां मुखानि रोदनेन अरुणवर्णानि कृण्वन् कुर्वन् पृथिव्याश्च रेणुमपि( का कथा जनाना-मित्यर्थ:) मृतकस्य पश्चादेव अस्यन् प्रक्षिपन् उत एति प्राणत्वेन सूक्ष्मशरीरेण सह दिवं प्रयाति ।वातो ह प्राण उच्यते ( अथर्व ११।३।१५)। ऋ० १०।१६८।१)।

२- वातस्य अनु पश्चात् ( शरीरात् प्राणे गते सति) विष्ठा: ज्ञाना -पन्नत्वात् विशेषेण धैर्यसम्पन्ना: लोकसंस्था: तासु व्याप्तो वात: सं सम्यग्रूपेण प्रेरते दु:खेन प्रकम्पयति। एनं समानमनस्कंम् एनं देहान्निर्गत्य स्वर्गगतं प्राणं (प्रति) योषा: योषिता: अगच्छन्ति न आगच्छन्तीव । भवन्तीति शेष:। वैधव्यदु:खदु:खिता:

मृतकप्रायाः मरणासन्ना इव भवन्तीत्यर्थः। विश्वस्य अखिलस्य भुवनस्य लोकस्य भूतजातस्य वा राजा स्वामी वातो देवः विद्युदिव द्योतनशीलोऽस्ति । शरीरेषु प्राणघातककालानाम् अनियतत्वात् क्षणस्थायी स इत्यर्थः। सः ताभिः योषिताभिः सह सयुग्वा सखेव योषितम् उक्तं सरथं समानमेकं रथमारुह्य गच्छति । येन रथेन तासां प्राणनाशो नीयते वातेन तेनैव ताः अप्यत्यर्थः ।। ऋ० १०।१६८।२।।

## वायुः प्राणाः

'वायुः प्राणो भूत्वा नासिके प्राविशत् ( ऐ० उ० १।२।४)। वातो ह प्राण उच्यते ( अथर्व० ११।३।१५)। एताभ्यां वचनाभ्यां सिद्ध्यति यत् वायुरेव शरीरे प्रविश्य प्राणो वातो वा उच्यते । वायुर्यत्राधिरुध्यते ( श्वे०उ० २।६) वाक्येनाप्यस्यैव पुष्टिः भवति। देहगतवायवे एव अन्यत्रापि वातपदस्य प्रयोगो दृश्यते । तथा हि अथर्ववेदे ( ४।१५।१) अत्र ' अभ्राणि वातजूतानि ' उच्यन्ते। यथा शरीरेषु वातस्तत्र-स्थात् रसात् प्रवाहयति तथा मेघदेहेषु प्रविश्य वायुः तत्रस्थं रसं प्रवाहयति । अत उच्यते वात इति। प्रचलिताश्च मेघाः वातजूता इत्युच्यन्ते ।

## हर्षिताः वाताः

अपि च अत्र ( अथर्व ४।१५।८)--- यदाऽऽशामाशां विद्युतो यान्तु तदा हर्षिताः वाताः प्राणाः-- जीवाः --- दिशोदिशो वान्तु नूतनकर्मभ्यो यान्तु । ये च मरुद्भिः प्रेरिताः मेघाः वृष्टिं कृत्वा विच्छिन्नाः भवन्ति ते पृथिवीमनु पृथिव्याः पश्चात् पश्चिमेषु भागेषु । सागरेषु इत्यर्थः। यद्वा अनु हीने पृथिव्याः हीनाः सागराः तेषु सं यन्तु पुनः सम्मिलिताः अधिगच्छन्तु संयुक्ताः वा भवन्तु इति ।

## अमृतनिधिः वायुः

वायुर्वेदेऽपि शरीरगतवायुः वातपदेन ज्ञायते । सर्वेषां तत्त्वानां सञ्चारकत्वात् स एव त्रिषु दोषेषु प्राधान्यं भजते । द्विविधस्तत्र वातः (१०।१३७-१६८।४)[२] जीवगतो देवाघ्नुश्यर्योनिगतश्च यद्वा पुरोवातः पश्चाद्वातश्च । द्वावेव वातौ आ समुद्रात् सिन्धुश्च दृश्या दृश्यजीवान् वातः गच्छतो व्याप्नुतो वा । तयोःअन्यः

एको जीवगतो यजमाने दक्षं समागमयति । अन्यो देवावृत्ययोर्निर्गतस्तु तस्य पापमपाकरोति । अथर्ववेदे ( १०।७।३४) प्राण: प्राणापानौ वात इति श्रूयते । अयं सर्वेभ्य: प्राणिभ्य: पूर्वं स जायते स्वयत एव कस्मिंश्चिद् देशे जात:, कस्माच्च निष्क्रम्य आगत इति केनापि न ज्ञायते ( १०।१६८।३)। अनेन उत्पादिता: घोषास्तु श्रूयन्ते परमस्य रूपं न दृश्यते --- द्विविधेषु देहेषु अन्तर्व्यापित्वात् ( १०।१६८।४)। अन्तरिक्षे पथिभि: गच्छन् प्राण: एकमपि दिनं नोपविशति । क्षणमपि विश्रामं न लभते इत्यर्थ: १०।१६८।३)। एष एव जनस्य पिता, भ्राता, सखा वा भवति रक्षकत्वादिगुणयुक्तत्वात्। उक्ता तस्य गृहे अमृतनिधि: या च भवति प्राणिनां जीवनाय (१०।१८६। मं २-३)। यावद्वातगृहे सन्तुलनो विद्यते तावदेव जीवने जीवेन अमृतस्य सुखस्य निधि: राशि: अनुभूयते, विकृते सति अनन्तदु:खानामिति ।

## वाताप्सख्यम्

सत्यवतो वातस्य अद्भि: सार्धं सख्यं श्रूयते ( १०।१६८।३)। वायुवातयो: स्थानभेदान्नामभेद: कृत:, न च तत्र तात्त्विकभेद: कश्चित्। वायुना सह वायुमण्डले जलन्तु वाष्पत्वेन वसत्येव । वायो: शरीरेषु प्राणत्वेन प्रविष्टे सति जलांशोऽपि प्रविशति --- अनिवार्यत्वात्। अत एवमुच्यते --- वातोऽपां सखा। अथवा वैज्ञानिक-दृष्ट्यापि------

अपां कारणयो: एक: शुद्धवायु:( आक्सीजन)। तं विना यथा सम्भवा अपां स्थिति: तथैव शरीराणामपि स्थिति: तं विना असम्भवा भवति। एवंविज्ञान-सम्मतमेवास्ति वातापां सख्यम्[3] । शुद्धवायु: अपां घटकत्वेन आसीत् प्रसिद्धो वैदिकयुगे इत्यनेन ज्ञायते । अन्यत्र ( १०।१३७-१८६।१) शुद्धसन्तुलितवातमेव विश्वभेषजम् इति विशेषणेन अलङ्कृत्य, तस्य महत्त्वं प्रतिपाद्यते स्वास्थ्यतन्त्रे । तथा हि--

१- हे वात ! नोऽस्माकं हृदे हृदयाय भेषजम् प्रयुक्तम् औषधं शम्भु रोगशामकं मयोभु सुखकरञ्च।आ वातु आगमयतु करोतु । एवञ्च नो आयूंषि प्रवर्धयतु ।।

आत्मानं सन्तुलयित्वाप्रयुक्तं भेषजं सफलं करोतु इत्यर्थ:।।

- ऋ०१०।१८६।१ ।।

२- हे वात! भेषजम् आत्मनो रोगोपशामकं त्वं----शुद्धवायुः--

आ वाहि आगमय अस्मान् प्रापय, यच्च तव त्वं रपः पापम् ( अशुभमशुद्धं वा इत्यर्थः ।) तद् वाहि अस्मत्तोऽपसारय। वाते विश्वभेषजत्वादत्रोच्यते तस्य भेषजरूपत्वम् अनेन पदेन । त्वमेव विश्वभेषजो विश्वानाम् अखिलानां रोगाणां भेषजः औषधम् असि। वातसाम्या भावे अस्वस्थरोगशान्तिः। अत उच्यते विश्वभेषजो वातः। अपि च सत्यमेव भेषजरूपः शुद्धवायुः। देवानाम् इन्द्रियदेवानां दूतः प्रेरकस्त्वम् ईयसे सततं गच्छसि। कदापि स्थितिं न प्राप्नोतीत्यर्थः ।। ऋ० १०।१३७।३ ।।

एवं वातपदेन शरीरवायुरेव वाच्यो भवतीति सिद्ध्यति। अस्ति वायुवातयोः तात्त्विकी एकता । अत एव सायणाचार्यस्य वातपदाय वायुपदस्य प्रयोगो विसङ्गतो न भवति। अपि च वातपदस्य व्युत्पत्तिः तमेवमेव सिद्ध्यति --- शरीरस्थवायुः ।

व्युत्पत्तिः

वातपदस्य व्युत्पत्तिः 'वा' धातोः क्त प्रत्ययात् भवति । अन्येभ्यः इतरेभ्यो वात्वा गच्छति ततश्चप्राप्नोति शरीराणि तस्मात्त ( सो वायुः) वातेत्यभिधीयते । वायुपदस्य व्युत्पत्तिः एवं भवति ---- वा + उण् , युक् आगमः। कृवापाजिमिस्वदिसाध्यशूभ्य उण्। उणादि, सूत्र १। वातीति वायुः ।

अश्विनौ

पितरौः

पञ्चाशदधिकैः सूक्तैः स्तुतौ इमौ इन्द्राग्निसोमानाम् अनन्तरं पदं लभेते देवेषु । एतौ आकाशपुत्रौ स्तः ( १।१८२[१]-१८४[१]-११७;१२;१०।६१।४[४])। (१।१८४) अत्र एको राजा द्वितीयश्च दिवस्तनय उच्यते इति मैकडानलः( वै तन्त्र ८२१,६५)। परमत्र अनेन वचनेन कार्यमिदं उच्यते । एतयो रात्रि दिवः पुत्रत्वस्य निषेधो न प्रतिपाद्यते, अपितु इयोः कार्यमिद उच्यते । एतयोः माता सिन्धु ( १।४६।२) सूक्ते। एताभिः श्रुतिभिः अनयोः देवयोः एको 'दस्रो' वायुगतजलरूपोऽस्ति ( ददाति पुनाति च यो जीवनानि सो दस्रः), द्वितीयश्च 'नासत्यो' वायुरूपः ( अदृश्यत्वेऽपि

नासत्या यस्य तथा सो' नासत्य' इति )। एतयो एते रूपे वेदेषु बहुशः श्रूयेते । तथाहि--

एकत्वं गतो तौ अतिवृष्टिकाले ( संग्रामे ) भयंकरं गर्जनशब्दं जनय[illegible]तो मिलित्वा ( १।१५८।१)। स्वयोगेन एतौ वृष्टिकर्मसमर्थौ भवतः ( १।११६।७)। सिन्धून् उदकेन पूरयतः( १।११२।७)। दीर्घश्रवाय मेघं प्रेरयतः ( १।११२।११)। मेघेषु स्वल्पं प्राप्तो दस्रश्च्यवति ततः, तत्र च पुनः रिक्त स्थानपूर्तिहेतवे अन्ये मेघा आगच्छन्ति। अतो दस्रे मेघ प्रेरकत्वं श्रूयते । सुस्पष्टमेवान्यस्य तत्कर्मणि विनियोगः । शतद्वारे यन्त्रगृहे असुरैः पीड्यमानाय स्वजनाय तप्त पीडासाधनमग्निं हिमोदकेन ( हिमशिशिरक्रमेण) नासत्यौ निवारयति ( १।११२-११६।८)। अनयोः रथे ( प्रवाहेषु) बहूनि अन्नानि च वर्तन्ते ( १।[illegible]।६ )। जलवायू धातुमयौ अन्न वर्धको च स्त इत्यर्थः । धिया देवा वसुविदा ( १।४६।२) अनेन वचनेनापि उक्तवचनम् ( १।४७।६) उच्यते । लोकत्रयव्यापकत्वात् विश्वशौ त्रिषधस्थे बर्हिषि ( समूहे एकवचनमत्र, अन्यथा' लोकत्रयाधारेषु ' इत्यर्थो भवति ) तिष्ठतः ( १।१४७।४)। सन्ध्योपासकानां त्रिवारम् अनुष्ठानदोषाणां सम्वरणकारिणौ स्तः ( १।३४।३)। अद्भिस्तैः ( वायुस्तत्र विचत एव ) पापानि प्रक्षालयन्तो अत एतच्छ्रयते । सूर्यरश्मिभिः ( तत्तेजोभिः) सह ' सुवृता '( रवितेजोवृतेन ) रथेन दूरस्थौ निकटस्थौ वाश्विनो आयातः (१।४७।७)। दिव्यामृतपानेन ( वृष्टिजलपानेन) नानागुणशक्ति समन्वितौ , विशां( चराचरप्रजानाम्) शासनसमर्थौ प्रकाशकगां याभिरूतिभिः( धात्वन्नदानैः) पयसा पूरितवन्तौ ताभिः पूरितम् आत्मानमपि द्रष्टुमिच्छति यजमानः(१।११२।३)। कर्णान् अवत इत्यनेन वाक्येन एताभ्यां समाधिकालेषु कर्णि शरीराणां रक्षा क्रिया इति ज्ञायते (१।११२।६) । परावति मेघाच्छन्नं रविमश्विनौ मोचयतः ( १।११२।१३)। दस्रः स्वोपस्थित्या मेघत्वं दुनोति [illegible] नासत्यश्च ताम् विच्छेदयति इत्यत्र भावः । अमी मतिप्रेरकं ( विशुद्धं) सोमं पिबतः ( १।४६।५)।

अनेन वर्णनेन सिद्ध्यति यद् सस्यान्नवर्धकौ दोषापहारौ एव जलवायू अश्विनौ गुणभेदो नामभेदाम् जनयति। अतोऽद्भिः मरुदादिभिश्च सह अनयोः विरोधो न माव्यः ।

## आवासा:

अमी एताभ्यां रूपाभ्यां गृहवनवनस्पतीषु आकाशे च निवसत:
(१।४४[५]+२२[२], ७।७०।३,८।२६।१७)।

## रथवर्णनम्

एतयो: हिरण्यरथस्य सर्वाण्यङ्गानि स्वर्णमयानि ( रविविद्युन्मयानि)
सन्ति ( १।१८०।१, ४।४४।४,५ [२६], ८।५-२२।५)। अयं रथो रविरश्मिसङ्घै:
सज्जितोऽस्ति ( १।११६।१,८।८।११,१४)। अश्विनीभ्यां परितो गन्तारं (परि-
भ्रमणशीलम् ) उपर्युपवेशेन सुकरं रथं ( पृथिवीरूपम् ) तदाणेन सम्पादितवान्
(१।२०।३)। अयं रथ: त्रिचक्रधाराधारान्वितोऽस्ति ( १।३४[२,५,६]-- ४७-११८।१-२)।
अत्र ऋभुषु ज्येष्ठ: ऋभु: ब्रह्माण्डधातु: परमाणुशकै: प्रतीकोऽस्ति येनानयो: पृथिवी
रथो निर्मित:। अनेनास्य रथस्य त्रीणि चक्राणि दैनिकी, वार्षिकी, भ्रमणीया
चेति--- गतित्रयात्मकानि कृतानि । तत्रानयो:रथस्य प्रथमं चक्रं पर्वतमूर्धनि
( यमाधुनिका: विज्ञा: धुरीति नाम्ना कथयन्ति)। स्थितं परि ईयते, यस्माद् हेतो:
अहोरात्री भवत:।द्वितीयं चक्रं यां परि ईयते । यां सूर्यमिति । यस्मात्सम्वत्सरो
जायते ( १।३०।१६)। तृतीयस्य चक्रं भगमे एव गतिं करोति अन्तश्चरद् यत्र नेतौ
विवेते । अतो न श्रुतमत्र तृतीयं चक्रम । मध्यमो विभ्वा रविविद्युद्रूपोऽस्ति, यो वै
तापभेदेन चक्रार्तवो--- ग्रीष्मवर्षाशीतर्तवो--- जनयति । ऋभूणां चक्रारत्वं
ब्राह्मणेषु पुराणेषु च बहुश: श्रूयत एव । तापो वै ऋतुभेदक:। कनिष्ठो वायोऽ-
ग्निरूप:। अनेन ऋभुणा अस्मिन् रथे त्रय: स्तम्भा: निर्मिता:यान् आश्रित्य एतौ
तद्रथमधिष्ठत:। एतेषु द्वौ स्तम्भौ तेन ऋजुरूपेण स्थितौ कृतौ, तृतीयश्च एतयो:
स्तम्भयो: शिखरदेशान् आश्रित्य प्रतिष्ठापित:। अनयैव विधिना बलवायू पृथिव्यां
सञ्चरत:। स्वनाम्नैव ज्ञायते व्यक्ति: न पूर्वजाख्यै:। अतो नात्र पठितो रविरिति ।

अनयो: अयं रथ: शतचक्रमयोऽपि श्रूयते ( १।११६।४)। अत्र शतशतसंख्याका:
अज्ञाता: ये सागराणां तटीकोणेषु बहुधा विचरन्ति तेऽपि एतौ तीव्रगत्या
वहतीति दृश्यते । अतस्तेऽस्य रथस्य चक्रस्थानीया: भवन्ति। अयं रथोऽमर्त्योऽस्ति ।

वस्व सर्वाणि अङ्गानि यथास्थाने सम्यग्रूपेण नियोजितानि सन्ति। एवं कुत्रापि दोषो नोपलक्ष्यत इति ( ३।३०।१८)। पृथिवी रथान्योः गति हेतुः यथा रथिनोरथः। अत उपयुज्यते पृथिव्यां रथत्वारोपणम् ।

## रथावाहकाः

एवं प्रायः अश्वा एव वहन्ति ( १।११७।२-६, बाजेनसनःसी जे०४१। ४६६, हा०७,८०)। यदा कदा पदिरासभादिभिः अपि कृष्यते ( १।११६-११८।१, ४।४५।४,८।७४।७ ऐ०ब्रा० ४।६, कौ०ब्रा०१८।१)।सम्भवत एते रथवाहकाः भिन्नकालेषु अनयोः भिन्नगतीः प्रदर्शयन्ति।

## नासिकोत्पत्तिप्रसङ्गः

पुराणेषु अश्वरूपो रविः अश्वारूपिणी च सरण्यु अनयोः पितरौ श्रूयेते ( मत्स्य० अ०११, वि०पु० १०६।८५-८६)। एतौ स्वमातुः नासापुटाभ्यां जायेते तत्र । वस्तुतः सरण्यू रात्रिः अस्ति, या न्यूनतापव्यञ्जिका भवति, रविश्चोष्णतापव्यञ्जकः। जायते च तापभेदेन चलयुक्तवायुः। नासापुटेन इतीयं साहित्यिकी उक्तिरस्ति यद्वा द्विविधतापयोःसन्धिरेव अनेन शब्देन उक्तेति मन्तव्यः।

## नित्ययुवानौ अश्विनौ

सयोनी अश्विनौ पुरातनावपि भूत्वा नित्ययुवानौ स्तः ( १।११ ६,१२ २- ११६ ।२०, ७।६५२-६७।१० , शत०ब्रा० ५।३।२।१८ )। कञ्चनकान्तौ, तेजसां पती अश्विनौ नानारूपौ स्तः ( १।११७।६, ८।८-२२।१४)।यज्ञमुख्यौ एतौ अरविन्दमालिनौ आम्नायेते ( १०।१८४।२, शत०ब्रा० ४।१।५।१६,१६)। अनयोः मार्गाः हिरण्याः रुद्राः वा कृताः। अत्र ( १।३।३) प्रयुक्तो रुद्रवर्तनी शब्दः सायणमतेन अनयोः रोगविनाशकं गुणं व्यनक्ति। परं श्रीपिशलो रक्तमार्गव्यञ्जक इति मन्यते (वे०स्टू० १।५५,५६-७ )।

अथ कार्याणि ।

तत्र प्रथमं वृष्टिकर्म । शुभस्पती वृष्ट्युदकेन सिन्धून् पूरयतः दीर्घश्रवातुष्टौ तौ सुदानू वृष्ट्यर्थं मेघान् प्रेरितवन्तौ ( १।११२।६-१२ )। यदा कदा एतौ पुरुवाहू वाजिनोऽश्वस्य शफात् ( बलवतो मेघाश्वशफात् ) प्रभूतं वृष्टिजलं प्रापयतः ( १।११७।६)। प्रज्वलितेभ्योऽग्निभ्यो भीतो जनो रक्षणाय स्तौति वायुशामकाहोरात्रैः ग्रस्तो यजमानोऽश्विनौ प्राणरक्षां याचते ( १।१५८।४)। नैककर्माणौ तौ त्रिवृद्रथेन स्वेन रथेन अरिभिः परिवृतं जाहुषं राजानं रात्रौ सुगममार्गैः रक्षतः ( १।११६।२)। सर्वभेदिका वै पृथिवी। तस्याः गर्भेषु निर्मितेन सुरंगमार्गेण तं निष्कास्य रक्षः --- धावमानौ जलवायू एव रक्षतः ।संग्रामे दिवोदासं त्रसदस्युञ्च शाम्बराद रक्षतः पार्थिवं रसं पिबतः ( पौष्टिकं भोजनं कुर्वतः ) कलिप्रथिवृश्चर्षीन् एतौ रक्षतः ( १।११२।१४-१५)। मधुपेयं पिबन्तौ जनैःसह स्थितौ तौ तेषां रपांसि द्वेषकर्तॄन् प्रतिषेधतोऽपनयतः ( १।३४।११)। येषां शरीरेषु जलवायू साम्यभावेन वर्तेते तान् जनान् रोगारयो न बाधन्ते, विकारानाश्च निःशेषतां भवन्ति इत्यर्थः ।

## वैद्यत्वम्

अथानयोः वैद्यत्वम् ।

अश्विनौ वै देवानां भिषजौ ( ऐ०ब्रा० १।१८, कौ०ब्रा० १८।१, तै०ब्रा० १।७।३।५) एतौ आयुर्वेद विशारदौ कुमाराय वर्धनं बन्धनं ददतुः ( स्क० १।२।३०।५२)। वनेभ्यो दिव्यानि, पार्थिवानि, अन्तरिक्षीयानि चौषधीः दत्तः। अपि च तान् त्रिदोषशमनेन सुखयतोऽश्विनौ ( १।३४।६)। च्यवनेन पुनः युवावस्था कथं प्राप्ता इतीयं कथा शतपथे ब्राह्मणे विस्तृतरूपेण कथ्यते ( ४।१।५, मुईर, सं० मू०ग्रं० ५।२५०-३, पुष्प० पु० २६।२७३, वेनफे, ओ०ला० ३।१६०- मीरियन्थ्यूल पृ०६३)। अमी गां पिन्वेते, अश्वं श्लोकेगाभ्यां योजयतः, पुत्रान् वर्धयतः , कण्वाय नेत्रे प्रददतः, विश्पलायै चायसीं जंघां प्रत्यारोपयतोऽश्विनौ। कामप्रदौ तौ स्वशचीभिः पंगुं परावृजमृषिमपङ्गुम्, अन्धमृज्राश्वमृषिं दर्शनशक्तिसमन्वितं चक्रतुः। कक्षीवतो दुहितुः घोषायाः कुष्ठरोगमपाकृतः (१।११२-११६- ११७।७-११,१३)। अपि च अमी पठनामानं राजर्षिं

८-६ १५-१६

सबलं चक्रतु: ( १।११२।१७)। अस्माकं कायकल्पसिद्धान्ताश्च आधुनिकचिकित्साविदोऽपि स्वीकुर्वन्ति। अग्निनात्रि: तापाक्रान्तो यत्र तत्रापि सम्भवत: अनयो: अनुग्रहादेव तौ मोचित इति पाश्चात्या:( बार्नेट: लीजेंड० २६८, वोन्नी: कुल्ती० १०।३३१, तुल्की० ब्राइके: लीजेंड० ४५।४८२-४)। रक्षणाय वर्तिकया आहूतौ तौ तां वृकास्याद् उन्मोचतु:( मैक्स०, लेक्चे० २।५२५-६, मुर्यह, सं०मू०उ० ५।२४८, मीरियन्ध्रुस ७८-८१)। दध्यञ्चकान्ये अश्वशिरो योजितम् अश्विनीभ्याम् ( वैनफो: ओ०अ ४० २।२४५, हार्डी, वे०पी०११३)। मामतेयो महर्षि: दीर्घतमानयो: प्रसादात् तु बहुलं दशयुगपर्यन्तमुवास, अनन्तरञ्च यतीनां ब्रह्मा भूत्वा देवत्वं गत: ( १।१५८।६)। पुत्रहीना: नार्य: पुत्रान् , पतिहीनाश्च पती: प्राप्नुवन्ति अश्विनीभ्याम् अनुगृहीता: ( १।११२।३, १०।३०।३)। पूष्ण: पितरं एतौ बद्धहस्तं, शत्रुगोपितं, वारिपतितं रेभम् ऋषिं चमसेन सोम इव बहिर्निष्कासयत: स्म( वैनफो? ओ०आ० ३।१६२, १६४, बार्नेट: लीजेंड० ५०।२६४-६)। रथीतमौ तौ उदधि पतितं भुज्युमपि निष्कासयत: स्म ( वोन्नी: कुल्ती०१०।३३५-६, ऋ०१।११७।१४, मीरियन्ध्रुस १५८, हार्डी, वे०पी०११२ )।

## दातारौ अश्विनौ

एतौ अनारम्भणे, अनास्थाने, अग्रभणे समुद्रेऽपि स्थातुं शक्यौ (१।११६।५)। जनेभ्यो दारिद्र्यतमनाशकं रसवीर्यदिव्यज्योतिर्युक्तमन्नं ददतस्तौ ( १।४६-११७।१)। बहुदाशुषौ एतौ सूर्यत्वचा रथेनायात:। अश्ववत्या इषा सह आयान्तौ तौ गोभि: हिरण्येन च यजमानान् परितोषयत:। पेदुनाम्ने राजर्षये श्वेतवर्णमश्वं तौ ददतु: (१।३०-४७-११६।६ )।

## अथानयो: यन्त्रविद: कर्माणि

परुष्ण्यां निवसतो गौतमर्षे: समीपमश्विनौ पिपासया उन्मुग्धं कूपं चक्रतु: ( १।११६।९)। यथाधुनिकै: यन्त्रविद्भि: तैलनिर्गमाय कूपा: जिह्मा: क्रियन्ते तथैव गौतमकूपमुख: कृतोऽश्विनीभ्याम् । पाताले निगूढं करिगत्या प्रवहन्तमतो

विश्लिष्टशरीरं कण्वं अश्विनौ स्वचालितयन्त्रैः अश्ववेगेन भूमौ प्रवाहयतः स्म ( १।११७।४)। पृथिव्याः गर्भेषु निहितं ' रुक्मं न दर्शतं ' जलं तमसि क्षियन्तं सूर्यं न ' अश्विनौ वन्दनाख्याय ऋषये उद्धृतवन्तौ ( १।११७।५)। नानारूपाणि धारयन्तः ( नानायन्त्रेषु भिन्नशक्तिरूपैः प्रयुक्तौ) क्षमौ सहस्रसंख्याकं, दृढमुष्टिभिः अप्रतिगतं धनं विशजनेभ्यः प्रतिपादयतः ( १।११७।६)।

## रक्तरजतवर्णौ अश्विनौ

अनेन कर्मवर्णनेन अनयोः देवद्वयोः, भौतिकदृष्ट्या, जलवायुरूपतैव सिद्धिं विन्दति, तत्रापि प्रायः सवाष्पवायुमयता यां भूगोलविदो ' मान्सून ' इत्यनेन नाम्ना व्यक्तीकुर्वन्ति । परं यन्त्रचिकित्सादीविषु एतौ कृत्रिममान्सूनस्य ( यथाधुनिकाः वाष्पपदेनैव व्यक्तीकरिष्यन्ति ) व्यञ्जकौ भविष्यतः। रक्तरजतवर्णौ अश्विनौ इति कीथः( भा०भा० पृ०३०)। तत्र मूलवर्णेषु रक्तवर्णौ वायुः रजतवर्णाश्चाप इति जानन्ति एव सर्वे ।

## अबाधितं देवत्वम्

अनयोः अनेन भौगोलिकेन वर्णनेन तयोः देवत्वं सर्वथास्पृष्टमेव मन्तव्यम्, यतोहि उपासिता देवशक्तिरात्मानं देवरूपेणैव उपस्थापयति यथा तुलसीराम कृष्णादीनां परमभक्तानाम् अनुभवैः ज्ञायते । देवरूपौ अश्विनौ सर्वव्याधिविनाशकौ अङ्गप्रत्यारोपणकुशलौ देवभिषजौ स्तः। अधोभौमिकवारिविद्याविज्ञौ तौ नानायंत्र विशारदौ स्तः। भुज्युं अश्विनौ मनोवेगेन गत्वा समुद्रपतितं जनमुद्धरतौ यथाधुनिकैः विमानादिभिः उद्ध्रियन्ते । कृत्रिमवृष्टिकुशलौ तौ त्रिचक्राश्वित्रिबन्धुरान्वितेन, समानयोजितेन, अमर्त्येन, सूर्यत्वचा रथेन हिरण्यवर्त्मना दिवि सञ्चरतः। स्वबुद्धिसामर्थ्यादि यथेष्टगमनसमर्थं बलाकृतिचक्ररथं तौ चक्रतुः( शत०ब्रा० ३।७।२।२८)।

## अथ स्वरूपविषये अन्येषां भावाः

कृषिदेवौ अश्विनौ इति मन्येते ए० डानियलः ( हि०हु० १२३)। औरर्णाभमतेन अश्विनौ द्वौ अश्वारोहिणौ राजकुमारौ बभूवतुः याभ्यां बहवो जनाः

रक्षिता:, समुद्धरिता:, चिकित्सिताश्च । इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनौ इति शतपथे ( ४।१।५।१६)। यास्को निरुक्ते अन्येषां मतानि --- द्यावापृथिव्यौ, रात्रिदिवसौ, राजर्षिणौ, सूर्यचन्द्रौ--- प्रतिपाद्य अर्धरात्रिप्रातमुहूर्तयो: मध्यवर्ती कालोऽश्विनाविति प्रतिपादयति द्वादशाध्याये ( घाटे: क० १७२)। उभय: पूर्ववर्तिनि काले यदा प्रकाशान्धकारौ समावस्थायां विद्येते तावेवाश्विनौ नाम्ना ज्ञायेते इति हॉपकिन्सो मीरियन्श्चयसौ गोल्डस्टूकरश्च ।लुडविगादय: केचिद्विद्वास: सूर्यचन्द्राविति मन्यन्ते ( लुड०ऋ०अ०३।३३४,हिल्वे०मा०१।५३५, हार्डी वे०पी० ४७-६)। प्रात:कालीन: तारेत्यपि केचिन्मन्यन्ते मैन०:त्सी०डॉ० ७।३१२,वाल्डेनसेन:त्सी ओ० ४१,४६६)।विद्यु-त्पावकाविति ( १।११६।८) अत्र त्रिवेणी प्र०सिंह ( हि०या०क० पृ०८७)। यशस्विनौ आयुर्वेदविशारदौ मर्त्याविति वेकर:( हि०वि०१।६३)। परमेतेषामु उक्तस्वरूपाणामु अनयो: गुणकर्मभि: सह तादात्म्यविशेषो न दृश्यते, मात्रैकं गुणकर्म प्रकटी कुर्वन्ति ।

वेका बोगाजकोई स्थाने ( लघुजम्बूखण्डे ) प्राप्ते प्राचीनहिट्टाइटलेखे नासत्यस्य उल्लेखोऽस्ति । श्री वेकरस्तु अश्विनौ अश्वजनजातीयौ भिषक्कुशलौ वीरौ बभूवतु: यौ पश्चादेषां शासकौ अभवताम् इति भावयति ( हि०वि०१,पृ० ६३)।

व्युत्पत्ति:

न असत्य इति नासत्य इतीमामस्माकं परम्परामु अपर्याप्तेति मन्यमाना: पाश्चात्या: अन्यव्युत्पत्तीनां सम्भावनां प्रकटयन्ति( ब्रून० फा०वि०ओंगा पृ०६७)। असौ नसु ( रक्षणे) धातो: निष्पन्न इति मन्यते यथा गाथिको ' नस्यनु ' अस्मादु धातो व्युत्पन्नो भवति । ब्रूनी तन्व्युद्धरणेन समर्थितामु अस्माकं व्युत्पत्तिं स्वीकरोति ( रेव्यू०ए०एन्सि १६०६, पृष्ट २८०, हापकिन्स, मध्युरा०१४६)। अवेस्तयामसौ दैत्योऽस्ति ( स्पीगेल: डी पी०२०७, काल्डेन्ट: वै०रै० ३,१६३)।

मातरिश्वा

अस्य विशेषणत्वम्

मातरिश्वा शब्दस्य ऋग्वेदे सप्तविंशतिवारं प्रयोगो लभ्यते । एकादशवारं

षष्ठमे , अष्टमे, नवमे च माण्डले, दशमे च सप्तवारम् । एतदतिरिक्तम् अथर्ववेदे सप्तदशवारम्, यजुर्वेदे च त्रिवारम् अस्य शब्दस्य प्रयोगो लभ्यते । नास्त्ययमं कुत्रापि सूक्तं त्रिषु वेदेषु । अग्निसूक्तस्य एकस्मिन्मन्त्रे ( १।६६।४) अग्नि पर्यायरूपेण अस्य व्यवहारोऽवगम्यते ।अन्यत्रापि ( ३।५[६]-२६[२]-२६।११)। सूर्यात्मकं विद्युदात्मकं वाऽग्निम् अनया संज्ञया ज्ञायते । परं बहुशस्त्वयमग्निं परावतो यद्वा दिव्यादाहरति अथवा पार्थिवाग्निं प्रबोधयति भवति च तत्र वायुरूपकः ( १।६०[१]-१२८।२;३।५-६[१०]।५;६।८।४) । अस्य नाम्नः कश्चिन्महर्षिः अपि श्रूयते यस्य पुत्रो भवति दधीचः ( १०।४८।२)। अत्र ( १।१६०।२) अयमेव शब्दो बृहस्पतेः विशेषणत्वेन प्रयुज्यते । अपि च अस्मिन् मन्त्रे ( १०।१०५।६) मातरिश्वा इन्द्रस्य विशेषणतया, अन्यत्र च वायुपर्यायरूपेण लभ्यते ( १।१६४।४६, १०।४६।६, अथर्व ५।१०।८)। यजुर्वेदे ( १।२) पात्रे वायोः विद्यमानत्वात् मातरिश्वा अन्तरिक्षवाचकोऽपि भवति--- वायुस्थाने तस्य अनिवार्यत्वात् । यजुर्वेदे ( ११।३६), अथर्ववेदे च ( ८।१।५,१ २।१।५१) अत्रापि वायोरपि विशेषणत्वेन दृश्यते ।

## अस्य यौगिकत्वम्

एवम् अग्नीन्द्रवायुबृहस्पतीनाम् उपाधित्वेन विशेषणत्वेन वा दृश्यते मातरिश्वापदस्य प्रयोगः। व्युत्पत्तिदृष्ट्यापि मातरिश्वा यौगिकशब्दोऽस्ति । मातरि + श्वि + कनिन् । मातरि अन्तरिक्षे श्वयते वर्धते इति श्री तारणीश झा ( सं० शब्दा०पृ० ८८३)। मातरि अन्तरिक्षे श्वसिति प्राणिति गच्छति वा, यद्वा सूर्यादिरूपेण चेष्टत इति सायणः ( १।६०।१,३,५[६]-२६।२)। अथवा मातरि फलस्य निर्मातरि यज्ञे श्वसिता ( मन्त्रोच्चारणं कुर्वन् इत्यर्थः) वर्तमानः सो मातरिश्वेति सायणो बृहस्पतिपक्षे ( १।१६०।२)। मातरि श्वयते यः सो मातरिश्वा। सुस्पष्टमेव अग्नीन्द्रवायुषु मातरिश्वत्वम्। प्रसङ्गानुरूपं विशेषणानि स्वविशेष्यान् आहरन्ति व्यञ्जयन्ति वा स्व । एवमेव मातरिश्वा भावानुरूपम् अग्न्यादीन् व्यञ्जयति । नोपलभ्यते अस्मिन् विशिष्टगुणसम्पन्नं भिन्नदेवत्वम् । अपितु उपाधिरिव स्वगुणानुरूपमसौ अग्न्यादिभिः समं सम्बद्धो भवति। तथा हि---- विद्युदादिरूपतयान्तरिक्षे

चेष्टन्तं, यज्ञेशं, विप्रं, होतारं, विप्रगन्तारम् अतिथिं शुभ्रं वैश्वानरमग्निम् आत्मरक्षायै यज्ञे उक्थैः हवामहे ( ३।२६।२)। अग्निप्रकरणे अत्र मातरिश्वाऽग्निं व्यनक्ति ।

## बहुवाचकत्वम्

चराचरगर्भस्थोऽग्निः तनूनपात यज्ञे ज्वलितश्च नराशंस इत्युच्यते । स एव यदा मातरि स्वं तेजो निर्मिमीते तदा मातरिश्वा भवति। एवं विधस्य अग्नेः शीघ्रगमने वातस्य सृष्टिः भवति--- तच्च भौगोलिकविज्ञानसम्मतमेव ( ३।२६। ११)। अपि च अत्र ( ३।५।९) सूर्यात्मकाग्नेः अर्थे अयं शब्दो दृश्यते । सूर्यविद्युदात्मकौ अग्नी अन्तरिक्षे चेष्टेते अतो मातरिश्वापदेः तत्र तत्र वाच्यौ भवतः।सूर्यो द्युवह् वायुरपि अन्तरिक्षे एव वर्धते चेष्टते वा अतोऽनेन पदेन सोऽपि वाच्यो भवति । वेदेष्वपि बहुशो मातरिश्वा वायुवाचक एव अस्ति,गर्भस्थानेषु च अग्न्यादीनामपि, परं ब्राह्मणारण्यकपुराणेषु यद्वा परवर्तिसाहित्येषु मात्र वायुवाचक एव ज्ञायते । वेदेषु वायोः अर्थे मातरिश्वा एवं क्रियाशीलो भवति ----

यदा मातरिश्वा वेधां हव्यवाहम्

आदित्यरश्मिभ्यः परिवर्धयति ( कृष्णो यथा भवति तथा दीपयति) तदा रोचनानामुभौ भवतु कृष्णोऽग्निः तेजसा नाकम् उदस्तम्नात् यजमानेभ्यः । गुहा यज्ञगृहे वेधां वा( १।१४१।३,३।५।१०)।

## कर्मनिरूपणम्

वायु मेघेषु प्रविश्य तत्र निलीनं विद्युदग्निं परिमन्थनेन निष्पादितं दिवो देवेभ्य आनयति । देवेभ्यो यज्ञेभ्य इत्यर्थः। विद्युज्जन्योऽपि भवति हव्यवाह इत्युपलक्ष्यते अनेन ( ३।६।५)। यद्वा[२] देवेभ्यो मातरिश्वा अरणिषु तिरोहितम् अग्निं मन्थेन यज्ञाय प्रकटयति ( १।१४१-१४८।१,१०,४६।९)। सूर्यादिरूपेण परमे व्योम्नि जायमानोऽग्निः भृगो आदौ मानवे आविर्बभूव ( १।१४३।२)। प्रथमं वायुनैव भवति वह्नेः संयोगः -- तस्या भावे प्रज्वलनाभावत्वात्। अथवा वायोरनन्तरमेव प्राणिनाम् उत्पत्तित्वात्। ( १।१६४।४६) अत्र अग्निम् आदित्यं वा एव मातरिश्वादीनां देवानां

नामधेयं ज्ञायते । यतो हि-- अग्नि: सर्वा देवता:( ऐ०ब्रा० २,३, निरुक्त ७।८) प्राणापानादिरूपेण प्राणिषु स्थितो मातरिश्वा मन्थनेन अग्निम् उत्पादयति ( १।७१।४)। मातरिश्वन: प्राणत्वम् अन्यत्रापि श्रूयते ( अथर्व ११।४।१५)। अनेन मन्थनेन ज्वलितोऽग्नि: दावाग्नि:, वज्राग्नि:, विद्युदग्नि इति नाम्ना वा ज्ञायते । देवानां दूतो मातारिश्वा दिवो विवस्वतो वैश्वानरमग्निम् आहरति (६।८।४)। अतएव सर्वा दिशो योजनम्न पवते (६।६७।३१,अथर्व १३।३।१६)। दीप्तिमन्तौ अग्न्यादित्यौ स्वतेजोभि: त्रैलोक्यं व्यापतु:। तथा चाऽऽम्नायते--- त्रिवृतो लोका: इति ( ऐ०ब्रा०१।१।२), मातरिश्वा च तयो: प्रीतिं जगाम (१०। ११४)। यतो हि स एव वह्ने: प्रतिपालकोऽस्ति आदित्यचराचराणाञ्च प्राण:। मातरिश्वा अन्तरिक्षेऽपो दधाति ( यजु: ४०।४) वर्तते च तानु अभिव्याप्य ( अथर्व० १०।८।४०)। अप्सु मातरिश्वनोऽनया व्याप्त्या सिद्ध्यति तेषां ( अपाम्) यौगिकत्वं यच्च विज्ञानाम्मतमेव। भुवनपतिना स्वप्रजाजीवनार्थं ये चराचरा उत्पादयित्वा दिक्षु विदिक्षु संस्थापिता: तान् तेषां प्राणत्वात् प्रजापति: मातरिश्वा प्रजाभ्यो धत्ते । अनया श्रुत्या वैदिकर्षीणाम् अचरेष्वपि स्पन्दक्रियाज्ञानम् ज्ञायते ( अथर्व १९।२०।८)

मातरिश्वन: प्राणत्वेन उल्लेखेन उक्तं भवति यद् मातारिश्वा सामान्यतया वायुतत्त्वस्य व्यञ्जकोऽस्ति --- अग्न्यादीनां व्यञ्जकमन्त्रान् परित्यज्य ।

नाऽस्ति कश्चिद् अभिधेयो बहुव्यञ्जकत्वम् । यतो हि-- अन्येभ्य:पृथक् कृत्वा अभिज्ञातुमेव भवति कस्यापि अभिधेय: । यदि एकेनैव नाम्ना बहूनां भविष्यति ज्ञानं तर्हि नामगरिमा हीनतां भजयति । वस्तु विषये तु नाम्नो बहुव्यञ्जकत्वं कथञ्चिद् उपयुक्ततां भजते परं नरदेवानां नामधेयानां विषये तु इदम् अनिश्चिततां जनयिष्यति येन स्वेच्छाचारिता पदं करिष्यति । अत एव अत्रापि मातरिश्वापदे बहुव्यञ्जकत्वाद् वेदेषु अनेन नाम्ना कस्यापि स्वतन्त्रदेवस्य सत्ता स्वीकार्या न भवति । यद्यपि वेदोत्तरवैदिकसाहित्ये मातरिश्वा मात्र वायो: अर्थे एव प्राप्यते तथापि यतो हि सर्वमान्या वायुदेवस्य सत्ता । अत एव मातरिश्वा नाम्ना भिन्न-वायुगुणविशिष्टदेवस्य सत्ताया: अपेक्षा नानुभूयते। वेदेषु उपाधिविशेषणयो: पदम् अलङ्कारत्वयं तदेव तत्र उचितम् परवर्तीसाहित्ये च वायुपर्यायत्वम् ।

अस्मिन् पृथक् देवत्वारोपणाय, मातरि अन्तरिक्षे श्वसतीत्यनया व्याख्यया अत्युच्चान्तरिक्षे विचरणशीलो वायुः, मातरिश्वापदवाच्यो भवितव्यः। तत्र मन्थनेन अग्निजनकत्वादस्य तीव्रगतित्वं सिद्ध्यति येनासौ झंझावातो भवितव्यः। परमन्त्र ( यजु०४०।४) अन्तरिक्षे अपां धारक इत्युच्यते येन उच्चान्तरिक्षीयवायुत्व- मस्य सिद्ध्यति । परावतोऽग्नि हरणकर्मणा देवदूतत्वेन च ( ६।८।४) अस्माकं मतेऽस्य झंझावातप्रतीकत्वमेवोच्यते । प्रचण्डवातागमनकाले तथा च उच्यते ग्रामीणैः।

## अहिर्बुध्न्यः

नगण्या वेदस्थितिः

त्रिभिः मन्त्रैः स्तुतोऽयं देवो नाम्ना द्वादशवारेषु आम्नायते ।

कर्माणि ।

तत्रास्य गुणकर्मख्यातिरपि प्रायः नगण्यैवास्ति । अस्य कानिचित्कर्माणि एवं श्रूयन्ते ----

अहिर्बुध्न्यः कुपितो भूत्वा स्वजनान् हिंसाय मा ददातु । अतः प्रार्थितो भवति यजमानैः । अनेन अनुगृहीतस्य यजमानस्ययज्ञो न भवति बाधितो राक्षसैः । समुद्रादिभिः देवैः सह असौ नः शिवाय कल्पते ( ७।३४[१७]-३५।१३, ५।४१।१६)। सवितुः मित्रभूतोऽहिर्बुध्न्यः सवितृविषयं स्तोत्रं शृणोति ( ७।३८।५)। अन्तरिक्षा- चारी अयं देवो न स्तोत्राणि शृणोति तुलयति च ( १०।६४[४]-१८६।५)। त्रितादिभिः सममसौ अनेभ्योऽन्नानि विदधाति ( ५।३१।६) । अयं स्वजनगृहे नियं मन्त्रान्च (क्रतादिसमृद्धिम् ) ददाति ( तै०ब्रा० ३।७।४।२६)।

स्वरूपनिर्णयः

असौ देवो मेघेषु सीदतीति श्रूयते ( १०।६३।५)। अग्निरेव अहिर्बुध्न्य इति यजुर्वेदे ( ५।३३)। अस्य स्वरूपविमर्शाय वेदेषु नान्याः श्रुतयः श्रूयन्ते । अद्यावधिः विद्वद्भिः अस्य नाम्नैव स्वरूप निर्णयप्रयासः कृतः। तथा हि----

बुध्नमन्तरिक्षं तत्र भवोऽहिः एत्यन्तरिक्षा इत्यहि। यद्वा अन्तरिक्षो भवो बुध्न्यः स्तीत्यहिः। बुध्नमन्तरिक्षं बद्धा अस्मिन् धृता आप इति। (६।३८।५, ७।३४।१६ अत्र सायणभाष्ये, निरुक्ते २।२७, १०।४४)। अहिश्च बुध्न्यश्चेत्यहिर्बुध्न्योऽग्निरिति सायणः ( ७।३४।१७)। यजुर्वेदे च ऊ अग्निर्वा अहिर्बुध्न्यः(५।३३)। यास्कायणौ विद्युद्रूपोऽहिर्बुध्न्यः इति स्वीकुरुतः। यत्र अग्निरिति उच्यते आचार्येण तत्र अपां नपातस्तनयोऽग्निः स च अन्तरिक्षभवः ३।६।१) , एवं पितापुत्रयोः समानाधा-दृष्ट्या, सोऽप्यत्र पितुः विशेषणात्मकेन नाम्ना उक्तः। अपां नपात् व्यापकरूपेण सर्वविधविद्युदन्वकोऽस्ति। परमहिर्बुध्न्यो जलव्याप्तां विद्युतमेव व्यनक्ति। बुध्न्य इत्यनेन पदेन अस्याः व्याप्तिरेव अभीष्टास्ति विद्युत् अहिरित्यनेन पदेन बहुशः श्रूयते स्म। नदीनां बुध्ने रकः सु सीदन् अपामहिर्बुध्न्यः गृणीषे (७।३४।१६)इत्यनेन वचनेन अस्य देवस्य सर्वाप्सु व्याप्तिरेव सूच्यते न मात्रमेघेष्वेव। अहिर्बुध्न्ये पुराणे अहेरिव बुध्नो ग्रीवा यस्य सोऽहिर्बुध्न्य इत्युच्यते ( ऋग्वेदे, उत्तरभाद्रपदनक्षत्रे, मुहूर्वेदे च )। बुध्ने पृथ्वीमूले पाताले भवतीति बुध्न्यः, अहिः सर्पश्चासौ बुध्न्यश्चेति अहिर्बुध्न्यः ( लि०पु० ६५।१२५) । अहिरसि बुध्न्यः ता०ब्रा०१।४।११)। अहिरसि हन्ता रुद्रः प्रभृतीनां बुध्न्यो बुध्ने मूले आदौ आधान काले प्रथमं जातोऽसि। अद्भिः सह जातोऽसि इत्यर्थः( ब्रा० भा० ४।२।१३)। पातालोत्पन्न इति बुध्वा केचिद् एनं तलीयः सर्प इति मन्यन्ते ( की० कुन्हन: वेद पृ०६४, सर्यकान्त वै०दे०पृ०२७४)। कुञ्चितकेश इति कीथः( पु०का०वै०दे०पृ०१६६)। परं नैवं सम्भवति श्रुतकर्मगुणविरुद्धत्वात्।

## रुद्रो हिर्बुध्न्यः

उत्तरवैदिकसाहित्ये अहिर्बुध्न्यो लाक्षणिकरूपेण गार्हपत्याग्निना सह सम्बद्धः कृतः( वा०सं० ५।३३, ऐ०ब्रा० ३।३६, तै०ब्रा०१।१।१० ।३)। पुराणेषु अयं देव एकादशरुद्रेष्वेकोऽस्ति ( आदि०६६।२-३, पद्मपु० ६।३०-३१, १८।१९- २१)। विष्णुधर्मोत्तरपुराणे रुद्राणामहिर्बुध्न्यः श्रेष्ठः इति पठ्यते ( १।५६।११)। वास्तु-पुरुषपूजायाः प्रसंगे अस्मै 'आज्य' दीयते ( १।६६।१५, तै०ब्रा० ३।१।६।६३)। पुर्वस्य अष्टाधिकशताभिधानेष्वेकोऽहिर्बुध्न्योऽपि अस्ति ( स्कान्दपुराणे)।

अस्य विद्युत्त्वम्

अस्य नाम्नः उत्तरपदं पूर्वपदस्य विशेषणमस्ति । निरुक्ते (१०।४४) बुध्नो वायुरित्युच्यते । तद्भवो बुध्न्यः। सं बुध्न्यो वायुभवोऽहिः इति अहिर्बुध्न्यः--- विद्युत । विद्युदुत्पत्तौ सर्वविदितो वायुयोगः। अतोऽनायमयुक्तम् । तत्रैव ( २। १७) एतदप्युक्तं भवति ----

अहिरयनादेत्यन्तरिक्षे । अन्तरिक्षे भवो बुध्न्यः ।

एतीत्यहिः ६।३८।५)।

लोकपूर्यः -

श्री भेंकडानन्द एनमहिवृत्रादभिन्न एव मन्यते । तत्र पृ०१३८)। परं नैवम । अहिः पूर्वः तं वृत्य जाता भूत्वा यो वर्तते सोऽहिर्वृत्रो मेघ इति। अहिर्बुध्न्यस्तु ततः सर्वथा भिन्न एवास्ति। अहिः सूर्यस्तद्भासमानो वान्यः तेजपुञ्जः। तैलादीन्धन पदार्थेभ्यो लोके मानवोत्पन्नो भासमानो ज्योतिपुञ्जः। बुध्नः स्थानःतच्च लोक एव संभवति। तत्स्थानीयः तत्र भवो वा बुध्न्यः उच्यते । अतः अहिर्बुध्न्यो लोकपूर्यः। सूर्यस्लोकोपकारिणी मानवोत्पादिता कार्यशक्तिरिति। नदीषु स्थिता लोकोपकारिणी विद्युदात्मनः सूर्यत्वं रात्रौ प्रकाशयत्येव । अन्यच्च अहर्निशं स्वशक्त्या असंख्यकलाव संचालयित्वा कोटिशः जनान् पालयति । तैलादिभ्यो जातानि तेजांसि अप्येवमेव असंख्यजनान् पालयन्ति नित्यम् । सर्वाः शक्त्यः तेजोरूपाः भवन्ति अतः पार्थिव- सूर्योपाधिमर्हन्त्येव। मेघोत्पन्ना विद्युदपि अनेन नाम्ना वाच्या भवति यतो हि बुध्नो मूलरूपेण तेजोत्पादकपदार्थव्यञ्जकोऽस्ति अनन्तरञ्च तेषां पदार्थानां पात्रस्थानानाम् मेघाः विद्युत्स्थानाः। अतः सापि अहिर्बुध्न्यपदेन वाच्या भवति । एवमहिर्बुध्न्यः सूर्यं परित्यज्य सर्वासां शक्तीनां व्यञ्जको देवोऽस्ति ।

अपां नपात्( विद्युत )

वाहनावासादीनां वर्णनम्

एकेन सूक्तेन स्तूयतेऽसौ देवः ऋग्वेदे। अन्यत्र प्रायः नाम्नैव स्तूयते न गुणकर्मभि मेघाः अस्य वाहकाः सन्ति ( २।३५।६)। यद्वा मनोजवाः अश्वा एनं वहन्ति

( तीव्रगामिनो मेघा एव ) (१।१८६।५) । कन्यारूपाभिः वाष्पराशिभिः प्रदीप्तोऽयं हिरण्यवर्णो मेघधेनोः स्वामी अस्ति । या धेनुः अस्य गृह एव मधुरं पयो ददाति ( २।३५।७)। विद्युद्दुग्धाः मन्थिताः प्रेरिताः वा मेघा एव पयांसि धारयन्ति, नान्यथा इत्यर्थः। भासमानोऽपां नपात् हिरण्यवर्णः ( स्वप्रभाभिः तथा कृतः ) वर्णाङ्कमपि ( २।३५।११) ।यह्वयापः स्वतनयाय वाष्पघृतं नीत्वान्तरिक्षे धावन्ति ( २।३५।१४)। यह्वा जलावृताय अपां नपाते तिस्रो दिव्याःस्त्रियः( सूर्यस्य रसशोषिकाशक्तिः, वायोः वहनशक्तिः, पृथिव्याश्च जलशक्तिः) जलरूपान्नं धारयन्ति । अतोऽयं मातृदुग्धं पिबति । मेघाः अस्य मातरो भवन्ति ( २।३५।३-५)। अपां नपात् यदा तिर्यग्भूतमेघानाम् उत्सङ्गे ऊर्ध्वरूपेण तिष्ठति तदैनं वहन्त्यो हिरण्यवर्णा आशुगतयो मेघाः तं परितो गच्छन्ति ( २।३५।९)। मेघविद्युद्रूपैः, नेत्रदृष्टघटनावर्णनमिव, दृश्यस्य वर्णनं प्रशंस्यमस्ति। कल्पय एवात्र कल्पनो । पततरूपेण ऊर्ध्वतां गच्छन् अयं देवोऽप्सु मध्ये शोभते ( २।३५।७)।

## कर्मनिरूपणम्

अथ कर्म वर्ण्यते ।

अपां नपात् स्वबलेन विश्वानि भुवनानि ( भूतजातानि( वृष्ट्या जनयामास ( २।३५।२)। अनिध्मोऽयं शुभ्रः तेजोभिः दीप्यमानो धनानि प्रापयति स्वजनान् ( यन्त्रप्रयुक्तो वृष्ट्या च )। (२।३५।४)। यदश्वशक्तिसम्पन्नं यन्त्रमस्माद् देवात् जायते ( अस्य शक्तिसंचालितं भवति) तदुक्तम् ( २।३५।६) । ऊर्ध्वस्थः असौ मेघेषु परिचरति विभाति च वृष्टिमाध्यमेन अन्नप्रदानाय जनेभ्यः ( २।३५।७)। अप्सु भासमानोऽयमेव ओषधीः जनयति २।३५।८)। वृष्ट्या सह भूमौ पतितोऽम्लानवर्णोऽयं चराचराणां शरीरेषु प्रविष्टो बभूव ( २।३५।१३)।पार्थिवाग्निः अस्य पुत्रोऽस्ति-- तेजःसु हीनत्वाद् तज्जस्थारणीभ्यां जातत्वात् ( ३।९।१)। अत्राग्निना सह संयुक्तो वृत्रं हन्ति । २।३५।१३, ६।१३।३)। अत्रास्य ताप एव अग्निपदेन उच्यते न भौतिकाग्निः। स्वजन्मबाधकात् असुरात् (अवर्षकमेघात्) हन्त्यसौ (२।३५।६)।

## अपांनपात्स्वरूपविमर्शः

शुचिं दीप्यमानम् अपां नपातं परितः आपो तिष्ठन्ति । मेघेष्वयं विद्युद्रूपेण समुद्रेषु च वडवानल[...] प्रविश्य वर्तते

तत्राप्ययमेव ( २।३५।३,७,१३)। यत्र आपस्तत्र अपां नपादपि वर्तत इत्यर्थः ।अप्सु विद्युत्स्थितिः प्रसिद्धैव । स्थानभेदेन असौ देवो ह्रस्वोऽह्रस्वो वा भवति । वडवानलत्वं गतस्यास्य शरीरं परिवर्तते नात्मा। अतो न भाव्योऽत्र कश्चिद्विरोधः। आमासु अप्सु नायं विद्यते ( २।३५।६) । आमास्विति विद्युत्पादानाय अप्रयुक्तकलशेषु स्थितोऽप्ययं अस्थित इवैव भवति, अतो न विद्यते इति सूक्तं । नाम्ना इळा ( पार्थिवजलशक्तिः), सरस्वती( वायुशक्तिः) , भारतीति ( सूर्यशक्तिः ) तिस्रो देवता सोमं ( विशुद्धं जलं रसमात्रं वा) धारयन्त्यस्मै। तत्र अरुणो जातं( रविरश्मिजातं) सोमम्(वाष्पजलम्) अपां नपाद् पिबति ( २।३५।५)। हिरण्यवर्णाः नद्योऽस्य माहात्म्यं वहन्ति । तासु अपि विद्यत इत्यर्थः (२।३५(६) । संगमनस्वभावाः नवजाताः मेघाः एनं समिन्धन्ते ( २।३५।११)। अयंत्रिविध उच्यते --- मेघस्य आपस्थो वीवस्यश्चेति (५।४१।१०)। एवमप्सु संचारिणी विद्युदेव अपां नपादित्यनया संज्ञया सूक्ता इति ।

अथ सामाजिकदृष्ट्याऽस्य प्रयोगः ।

अपां नपातःसानुः विशो जनः सम्पक्ष शोभयति ( २।३५।१२)। अत्र सानुपदेन विद्युच्छक्तिगृह सानूनि तत्प्रसाराय च संस्थापितस्तम्भानां सानूनि उच्यन्ते । एतेषां सानुषु शोभनाः काष्ठखण्डाः सज्जीक्रियन्ते स्म तद्युगे, यथेदानीं मृत्तिका-खण्डाः । एतेषु काष्ठशिखरेषु विद्युत्तन्त्रः परिवेष्टिताः भवन्ति स्म । २।३५।६,९) अत्रोक्तवचनेन अस्य लौकिकप्रयोगस्य एव पुष्टिः क्रियते ।

अपां नपाटेन सह तुलना स्वल्पविचारश्च

अवेस्तायामसौ देवोऽपां नपाट इत्यनया संज्ञया ज्ञायते । तत्रापि स्त्रीपरि-वृतोऽयं जलवासी देवोऽश्वैः नीयते । सिन्धुतले निवसन् सोऽस्य सागरस्य उज्ज्वलताम् अभ्यहरति ( तु०की०, हि०वै०भा० १।३७७-८)। अस्त्यत्र यद्यपि द्वयोः नामसाम्यम्, परमपां नपाटः सीमितशक्तिसम्पन्नो देवोऽस्ति । यो मात्रसिन्धुजलवासी अस्ति न पुनः जलमात्रव्याप्तः। । सम्भवतस्तत्रासौ बडवानलप्रतीकोऽस्ति । ओल्डनबर्गस्यमतानु-सारमपां नपाद् एको विशुद्धः सरलो व्यक्तिरासीद्, यः पश्चाज्जलोत्पन्नेनअग्निना सह सम्बद्धो बभूव। स्वमतपोषणाय असौ कथयतियदस्मिन्सूक्ते (१०।३०) अयं देवो जलसम्बद्धकृत्यैः सह सम्बद्धः कृतः परन्त्वत्र ( २।३५) अस्य जलमयो रूप एव प्रमुखो

भवतीति ( धर्म- वेद:पृ०११८-२०) हार्डीहिलेब्रान्टौ चन्द्रमेति मन्येते । बागरोस्थित: चन्द्रमेति धर्मकथैवात्र कारणमिति प्रतिभाति । परं एतानि गुणकर्माणि अस्य चन्द्रत्वं न सिद्धयन्ति । अतो नैतन्मान योग्यं मतम् ( हिल्वे०मा०१।३८५ -८०, त्सी०गै० ४८।४२२, हार्डीवे०पी०३८)। सूर्यो विद्युदिति मैक्समूलर:( चिप्स ४।२।४१०,मैक्स० प्रा०धर्म ५००, मॅगौन, ज०अ०ओ०सो० १६।२।१३७,ज०ज०फि० २१,२७४,ग्रे: आर्कि धर्म ३।१८)। सूर्यरूपोऽयमिति न सम्भवति केनापि प्रकारेण । अतो मान्यतां न भजते इदं मतंविद्वत्समाजे ।

त्रित आप्त्य:

देवै: सह स्तुति:

त्रित आप्त्यो न स्तुत: क्वचिद् स्वतन्त्रसूक्तमन्त्रै: वेदेषु । अस्य गुणकर्माणि अन्येषां देवानां गुण संवर्णनप्रसंगेष्वेव श्रूयन्ते । इन्द्रादीनां देवानामिव अस्य पितरौ, बान्धवौ वा न श्रूयन्ते । यौगिकमस्ति अस्य देवस्य नाम सोमाग्नीन्द्रमरुद्भि: साकमेवासौ प्राय: सन्निक्रियते ।

अथ गुणकर्मनिरूपणम्

तत्रादौ गुणरूपनिदर्शनम् । त्रित: तिसृभि स्त्वादिभि: देवताभि: धृता: ये पर्जन्या: तेभ्य आप्त्य: प्राप्यो यो देव: स: त्रित आप्त्य: --- भूमौ संगृहीता मेघविप्रुव। अस्य देवस्य कन्यारूपे द्विविधे धारे इन्द्रस्य पानाय हरिद्वर्णान् सोमबिन्दून्, पाषाणयंत्रं परिचाल्य सोमलताभि: निष्कासयत: ( ६।३२-३८।२ )। एवं सोम: पश्चात् त्रित आप्त्यस्य प्रयोगै: परिष्कृतो भवति ( ६।३४।४)। अस्य यन्त्रस्य अश्मचक्रयो: समीपे सुगुप्तस्थाने ( सुनिर्मिते वर्गाकारे आयताकारे वा अधोभौमिकपात्रे) स्तुतसोमा: संगृहीता: भवन्ति ( ६।१०२।२)। पश्चादसौ सोमोऽस्य देवस्य योगेन कृत्रिमवृष्टिहेतु: भवति यथा मेघविद्युत्संग्राहकयंत्राणां पृष्ठदेशा: आर्द्रा क्रियन्ते ६।१०२।३)। सोमो विद्युद्भगिनीभि: सह सूर्यं त्रित आप्त्यस्य सानुनि ( विद्युद्ग्राहक-यन्त्रशिखरे) प्रदीपयति ( ६।३७।४)। नात्र सूर्यविद्युद्विरोधो भाव्यो यतो हि

यन्त्रकामतानुसारमेव कृत्रिममेघानाम् उत्पत्तिः करिष्यति यन्त्रविद् । सीमितमात्रासु उत्पादिताः मेघाः आकाशं परिव्याप्य न वर्तिष्यन्ते, अतोभविष्यति सुप्रकाशः। विद्युद्योगेन अन्तरिक्षाक्षिप्ताः सोमाः यदा वृत्रकाण्डं प्रेरयन्ति तदा शिखरस्थो वृषभस्य: पर्जन्यो गर्जति । गर्जनं श्रुत्वा जनाः प्रशंसन्ति । सागरे वरुण इव तदानीं त्रित आप्त्योऽपि मोदते यतो हि गर्जनोत्पन्नविद्युदस्य गृहे प्रविश्य शक्तिं वर्धयिष्यति ( ६।६५।४)। यदान्तरिक्षागतः सोमस्ततो जलं सिञ्चति तदासौ स्वदेवनाम उच्चरति--- विद्युद्गृहस्थयन्त्रध्वनिसिद्धध्वनिमुत्पादयति वृष्टिकर्मणेत्यर्थः (६।८६।२०)। उक्तरीत्या सोमवर्धितोऽयं देवो वृत्रं हन्ति ( १।१८७।१)। पुनः कृत्रिमवृष्टिसमर्थो भवतीति भावः। सोमसम्पाकेन त्रित आप्त्येन सशक्त इन्द्रोऽर्बुद-मधोऽपातयत् अङ्गिरोभिश्च सह वलं जघान ( २।११।१०) । यदा शक्तिशाली मरुद्गणः प्रचलति विद्युतश्च भान्ति तदायं देवो बलानि च गर्जन्ति (५।५४। २)। देवपदेन अत्र शक्तिगृहयन्त्राणि तन्त्रायश्च उच्यन्ते । अन्तरिक्षे भासमानोऽयं मरुतां पथ आलोकयति आनयति च मरुत स्वरथेन विद्युत् भासमाने दृश्यते मरुतां प्रायः प्रकोपः। एतदेव कृत्रिमवृष्टिप्रसंगेऽपि भाव्यम् ( ३।३४।१०,१४)।

स्वसहयोगार्थं वायुभिः अन्विष्यते त्रित आप्त्यः ( १०।११५।४) । आकाशे सञ्चरन् असौ विद्युदग्निं प्रवर्धयति यथा कर्मकारः (५।६।५)। अन्विष्यता त्रित आप्त्येनाग्निः गोल्लाटे प्राप्तः---- रश्मीणां शीर्षभागेषु तापो विद्यते इत्यर्थः । यदायं देवो गृहेषु आलोकाय जायते तदा युवकमिव प्रकाश केन्द्रो भूत्वा आत्मानमावासेषु स्थापयति । ज्वालावृतोऽयं स्वस्थाने ( शक्तिगृहयन्त्रेषु) अवस्थितोऽभूत (१०।४६।३-६)। आकाशस्थितस्य अस्य भौमिकावासः सुरक्षितो भवति ( ५।६।५, ६।१०२।२)। चिकित्सा कार्ये प्रयुक्तोऽयं त्रित आप्त्यो नानाविधाः व्याधीश्च नाशयति यथा वय-मिदानीमपीत्थम् कार्ये विद्युत्प्रयोगः पश्यामः (८।४७।७,१३)। कूपपतितम् एनं देवं बृहस्पतिः ( वृत्रहन्तुः विद्युत्रस्य पतिरिति--- विद्युद्विज्ञः) निष्कासयति । विज्ञाः कूपाङ्गभिरपि तद्गुणे विद्युतं निष्पादयन्ति स्म इति ज्ञायतेऽनेन ( १।१०५।१७)। प्रान्तदेशे आधुनिकैः वैज्ञानिकैः निर्मितमेकं वाहनयन्त्रं चालितं एतेषु वर्षेषु (१९७१-७२)। अतो नेयं मिथ्या वेदोक्तिः यथा विमानादीनाम् । गर्तपतितोऽयं विद्युद्विज्ञं पितरं याचते पैतृकमश्नं विद्युत्प्रम। अन्ये मन्येऽसौ विश्वरूपेण सह युद्धरतो

दृश्यते वृष्ट्यर्थञ्च ( १०।८।७-८)।

सर्वाः यन्त्रविधः अस्मिन् देवे चक्रे नाभिरिव अवस्थिताः श्रूयन्ते (८।४१।६)। नानायन्त्राणि अस्य शक्त्यैव परिचालितानि भवन्ति न च दूषयन्ति वायुमण्डलम् । सूर्येण निर्मितं वायुना च प्रदत्तं दिव्यमस्त्रं ---- पर्जन्यास्त्रं विद्युद्रूपं वा ---------- बध्नाति त्रित आप्त्यः ( १।१६३।२-३)। चिकित्साक्षेत्रे प्रयुक्तोऽयं दीर्घजीवनं ददाति ( तै०सं० १।८।१०।२)।

## द्वौ भ्रातरौ

ब्राह्मणेष्वस्य द्वौ भ्रातरौ श्रूयन्ते ( न सहोदरौ ) ---- अग्निपुत्र 'एकतः' , वारिपुत्रश्च ( 'द्वितः' ( शत०ब्रा० १।२।३।१-२, तै०ब्रा० ३।२।८।१०-११)। त्रयोऽप्येते --- एकतो द्वितः त्रितश्चेति ( आप्त्यः) --- शक्तिदाः शक्तिपुत्राः सन्ति। आसन् वैदिकयुगे त्रिविधशक्तिसञ्चालितानि यन्त्राणि । तेषामेव वर्गीकरणं कृतमेतासु श्रुतिषु। यन्त्रपरिचालनाय यैः पदार्थैः प्रत्यक्षरूपेण अग्निरुत्पाद्यते ( शक्तिरित्यर्थः) ते तैलादय एकतो नाम्ना, यैश्च पदार्थैः( जलैः) परोक्षरूपेण शक्तिरुत्पाद्यते ते द्वितो नाम्ना, यैः पुनः त्रिषु क्रमेषु शक्तिरुत्पाद्यते ते त्रित इत्यनेन नाम्ना ज्ञायन्ते । श्री र०बी० पुराणी एकः पदार्थक पुरुषो द्वितो द्वयुत-चेतनापुरुषः, त्रितश्च तृतीयात्मारूपो विविज्ञानविकम्पयियुक्तोऽस्ति । ते सम्बन्धो मानविकमनसे लभ्याः सन्ति ( अ०बै० पृ०४२)।

### स्वरूपविचारः

त्रिलोकस्य इन्द्रः त्रित इति यास्कः ( नि०६।२५)। परं कर्मवर्णने कुत्रापि सूर्यादि विद्युद्ग्रहणकर्म न श्रूयते ।अतो मान्यमिदं मतमिति न प्रतिभाति। वृत्रवधकर्मणा इन्द्रेण समः त्रित आप्त्यः सोमनिर्माताऽस्ति, परमिन्द्रः सोमपानकर्ता-वास्ति। अवेस्तायाः 'थ्रितोऽनेन सम एवास्ति । यस्ने थ्रितो हओमं निर्माति (६।१०)। अन्यत्र प्रथमशामकरूपे वर्णितोऽयं अमरत्वप्रदं श्वेतं हओमं परितो वातान् दशसहस्रशामकतृणात् अहुरमज्दात् प्राप्नोति ( वेण्ड०२०।२)। अनेन वर्णनेन सिद्ध्यति यत् सोमेन सह त्रित आप्त्यस्य सम्बन्धो भारतीय-ईरानीकालादेवास्ति । स्वशास्त्रीय-दृष्ट्या 'त्रित' शब्दो यूनानी शब्दस्य 'त्रीतोसस्य' समोऽस्ति ( तृगमैन :

दुन्दिम २।२२)। (ऋ०१०।६३।२२६) अत्र पिल्क: ' त्रित: समुद्रार्थक आसीत् मूलत इति भावयति। आप्त्य इतीयमुपाधि: त्रितस्य इति मन्यमानो वान्सन ' आप्त्य व्युत्पन्नेयमिति कथयति। अत एव चैनं देवमसौ ' अपां नपात: सम: आशयेन ' इति भावयति ( इ०फा० ४,१३६,१४३ )। त्रित आप्त्य: चरित्रेण इन्द्रेण समोऽस्ति। परं पश्चादसौ वेदेषु गौणतां भवते। अत्र द्वे निमित्ते भावितव्ये। तत्र प्रथमस्तु इदमेवास्ति यद् इन्द्रो व्यापकवृष्टिदेवोऽस्ति त्रित आप्त्यश्च कृत्रिमवृष्टिदेवोऽतो न्यूनसीमितशक्तिसम्पन्नोऽस्ति। सीमितक्षेत्रमेव वृष्टिमिरार्द्री करोतीति। अलवतान्य लोके प्रतिष्ठा, अत इन्द्रोऽलंकारोति वृष्टिदेवपदं न त्रित आप्त्य:। द्वितीयञ्च--- सततं युद्धरता: आर्या: एतद्विज्ञानरक्षणे न शेकु:, यतो हि शस्त्रेण रक्षिते राष्ट्र ( एव) शास्त्रचिन्ता प्रवर्तते। यथा शनै: शनै एतद्विज्ञानो विस्मृतिगर्ते गत:, तथा तथाऽयं देवोऽपि विस्मृत इति।

अस्य देवस्य त्रितेन सह सम्बन्धं रौथो जलवायुदेव-~~इति~~ रूपेण मन्यते (त्सी०मे० २।२२४,म्यू० पृ०३१०)। पैरी महोदय ' इन्द्रादपि प्राचीनोऽयं झंझावातदेव ' इति स्वीकरोति( ज०अ० ओ०सो० ११। १४२-५)। दैवीकृतोऽयं मानव चिकित्सक इति पिशल: ( गौ०वे० १८६४,पृ०४२८)। एतेषु मतेषु विद्वद्भि: गुणविशेषं वीक्ष्य देवस्वरूपनिर्णयप्रयास: कृत:। अतोऽस्य देवस्य एकाङ्गीस्वरूप एव प्रस्तुतो एतै: मतै:, न सर्वाङ्गीणो रूप:। केचित् कवय एतम् इन्द्राग्निसूर्यदेवानां मिश्रमिति मन्यन्ते, सा च मैत्री सर्वथा असन्दिग्धैव अस्ति ( मैक०: तत्रैव १३०, कार्नोय, ज०अ० ओ०सो० ३८।२६४,लै०ब्यू० पृ०१६६)।

---

## अग्नि:

### वेदेषु स्थानम् :

प्रथमऋक्ऋचा स्तुतो विश्वाधिदेवमुख:, चराचरव्याप्त:, असुरसम्राड्, जनोपकारक:, तमारिनाशक:, सांस्कारिकवैदिककार्यकेन्द्र:, यज्ञपिता अग्निदेव: वैदिकदेवेष्विन्द्रानन्तरं प्रमुखं पदमलङ्करोति । ऋग्वेदे चतुरशीत्युत्तरशतसूक्तेषु प्राख्यातस्य अग्ने: एकाधिकशतसूक्तेष्वपि दृश्यते इन्द्रादिभि: सह कीर्तनम् । एवमेव अन्येष्वपि वेदेषु द्वितीयपदप्राप्ताग्नये समर्पिता सूक्तादीनां सङ्ख्या एषास्ति --

यजुर्वेदे सप्ताध्याया द्विषष्ट्युत्तरत्रिशतमन्त्रा:, अथर्ववेदे एकोनचत्वारिंशत् सूक्ता: सम्पूर्णतया द्व्युत्तरशतसूक्तांशतया अग्नये समर्पिता: ।

चित्ररूपिणोऽस्य देवस्य उत्पत्तिविषये रूपभेदात् प्राप्यते कारणभेद:। तथा हि--- यज्ञाग्नि: अरणिभि:, तापसनार्थञ्च प्रस्तरैरुत्पाद्यते स्म (१।६८।२, २।१।१, यजु: ११।२६) अतीतेषु, यदानीन्तु दीपवर्तिकया प्रज्वाल्यते । एवमेव वडवानलस्य समुद्रा:, विद्युतो मेघा:, दावानलस्य च वनानि कारणानि भवन्ति।

### पितरौ -

अग्निषु पूज्यो यज्ञाग्नि: । अतोऽस्य पितरौ आदौ कीर्तनीयौ । अस्य पितृषु--- त्वष्टृ (१।९५।५ , अथर्व० १।३३।१), भृगव:( ४।७।१, यजु:(१५।२६), अथर्वा ( ६।१६।१३), अङ्गिरस: ( ५।११।६), कण्वमेधातिथी ( १।३६।११), यजमानबाहू (१०।७।५ ), वरुणो मित्रोऽर्यमा च ( १।३६।४), मनु: ( १।३६।१९), वायु ( ४।४६।२), इन्द्राविष्णू ( ७।९९।४), असुर: (३।२९।१४), कैश्च नदीभ्योऽग्ने: प्रापकतारो देवा: ( ३।१।३, यजु: ३३।७-८), मातरिश्वा ( १।१४८।१), बलं (१।७४।५), मनुजा: ( १।१२८।२,१०।७।५) प्रमुखा: स्तुता: । एतदतिरिक्तम् अरण्यौ ( ३।२९।३) पितरौ--- ऊर्ध्वमुखी अरणी माता अधोमुखारणिश्च पिता कथितौ, अत्र च ( १।३१।२) द्विमाता शब्देन एते एव मातरावित्यपि सूक्तौ ।

प्राकृताग्निभेदा:

चतुर्थी प्रकृतिरन्योऽग्नि:। तत्र दावानलस्य वनोत्पन्न: ( १।१४५।५, २।१।१), वडवानलस्य सागरा: ( १।६६।८, १०।६१।६, अथर्व ३।२१।१), अन्तरिक्षाग्निद्योतकस्य विद्युतो (१।६५।६, यजु: १२।१०, अथर्व०३।२१।७) मेघा:, ज्वालामुखोद्गताग्नेश्च ज्वालामुखाचला: ( २।१२।२) जनका: आख्याता: ।

बहुश:, अन्तरिक्षीयजलमन्थनेन अग्निजनक ( १।१४१-१४८।१) [3], अभिमन्थ्याकाशात् ( १।६३।६), आदित्याद्वा इमं लोकमग्निप्रापको मातरिश्वा (६।८।४) उक्त: । यथाग्न्युल्लेखाभावे अवगन्तव्योऽत्र प्रचण्डझंझावातेन मेघेषु विद्युदग्नेरुत्पत्ति:, भूमौ विद्युत्पातश्च ।

यत्र जलपुत्रोऽयमग्निदेव: ( १०।६१।६,अथर्व० १।३३।१) इत्युल्लिखति तत्र विद्युदेव न माननीया, अपितु सामान्यजलमन्थनेन अनलोत्पत्तिरपि। तथा च उक्तं यजुर्वेदे ----

पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने। त्वामग्ने
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघत: ।।११।३२।।
एवमेव यत्र (३।१। ३,६,११) नदीजलेषु देवै: यज्ञार्थमग्नि: प्राप्त:

तत्राप्यस्योत्पत्ति: मन्थनेनैव ज्ञेया ।

दिव: शिशु:

दिवस्थस्य अग्निदेवस्य पिता तत्र द्यौरेव मत: तत्र उक्तोऽयं, 'दिव: शिशु: ( ४।१५।६,६।४६।२, १०।४५।८)। अत्रानेन सूर्यचन्द्रादीनि ग्रहनक्षत्राण्येव अवधारयितव्यानि ( १।६६--७१--१३४।४ ) [१,५ ५], यत: स एव ज्योतिषां संस्थापक: ( १।६३।५), ज्योतिश्चक्रेषु तापप्रकाशरूपयो: किरणशीलत्वात् दिवि विद्युत्सञ्चारक: ( प्रकाशसञ्चारक:) ( अथर्व० ३।२१।७) ज्योतिषु त्रिगुणसंस्थापको वा ( १।७०।५) उक्त: अथवा तेजोरूपेण अग्निरेव स्थितो ज्योतिषु ( १।१४६।१)।

अन्ये पितर:

उक्तौ प्राय: द्यावापृथिव्यौ अपि अग्ने: पितरौ ( ३।२-३-२५।१, १०।१-२-१४०।२) [२ ११; २ ७]। अत्र द्यौष्पिता पृथिवी च माता उक्ता। अन्यत्र नैकवारमु इळापुत्रो

(३।२६।३) बलपुत्रो ( १।७४।५,१।७६।४) वा ऽपि कथितोऽग्निः, परमत्र बलः पूनो दक्षो ( ४।२।२) वा पदेषु लाक्षणिकतैव वर्तते । इन्द्राविष्णुभ्यां (२।१२।३), इन्द्रेण वा मेघेष्वपि सूर्योऽस्योत्पत्तिः ( ७।९९।४)। अपि च दिवो मूर्धानं, पृथिव्याः अरतिं वैश्वानरं देवाः सुनायाः जज्ञिरे ( यजुः ३३।८) । एकवारं दैववातोत्पन्नोऽप्युक्तः ( ३।२९।३)।

बृहदारण्यकोपनिषदि वायुविष्ण्वादिषु च पुराणेषु अग्निः, दक्षप्रजापतेः दुहितुः स्वाहः खलु प्रधानो धर्मोत्पन्नः पुत्रः (बृ०उ० ३।९।३, वायु ५।१७-२१, विष्णु०१।१५।१०६-१११)। विष्णुपुराणेऽत्र ( विष्णु १।८। २,६,८) अयमेव देवः पद्मनाभेः कुमारस्य पशुपतेः मूर्तिरुक्तः ।

वेदेषु यत्र तत्र असुरगर्भोद्भूतः ( ३।२९।१४), उषापुत्रोऽपि (३। १७।३, ७।७८।३, १०।८।२) कथितोऽयम् ~~किञ्च~~ असुरघ्ना दिव्यैः पुनरुद्दीप्तोऽयं (यजुः १२।४४) तनूनपातोऽरुषस्य वायोरस्ति ( १०।९२।२) दिशः सप्तधातवश्चाप्यस्य स्मृताः मातरः (१।१४१।१,५) ।

अस्तिवाहवा दाोऽसौ ( १।७६।१२) जायमान एव स्वमातृभक्षकः (१०।७९।४) तथापि वृष्ट्या वनस्पतीनां जनकत्वात् उक्तोऽयं जनिजनकः ( १।९५।४) । देवानां पुत्र एव दूतो भूत्वाऽपि हविर्भिः तेषां पालयिता भवतीति उक्तोऽयं देवपिता ( १।६९।१)। एवमेव मातरिश्वाऽग्निः पित्रोः द्यावापृथिव्योरप्यस्ति पिता (१।६९।४), तच्च सत्यम्, यतो हि द्वयोरपि लोकयोः प्राणरूपेण अग्नेः व्यापकत्वात् प्राणिषु पितृत्वात् --- तत्रैव लोकानां गत्युत्पत्तिकारणत्वाच्च । आदौ गतिः, ततो लोकानामुत्पत्तिरिति विज्ञानसम्मतम्, अतः गत्यनन्तरमुक्ता उत्पत्तिः। द्यावापृथिव्यौ तु तदंशात्मकौ अत एव स्मृतौ पितरौ, वस्तुतः अग्निरेव तयोरुभयोरपि पितेति। अत्रादौ लाक्षणिकप्रयोगएव वगन्तव्यः ।

पुत्राः

अन्येषामपि बहूनामस्त्ययं जनकः। तथा हि--- तीव्रज्योऽश्वः ( ४।११।४), अश्व ( १०।१२।३-४) , शत्रुपाणयो मरुतोऽपि ( १।३१-७८।८) सन्त्यस्य सन्तानः

श्रीमद्भागवतमहापुराणे प्रवणिका दय: ( भा० ६।६।१३), हरिवंशे कुमार:(हरि० ३।४२), विष्णुपुराणे शुचि पावकपवमाना:( वि० १।१०।१५) अप्यग्नेरेव तनया: श्रूयन्ते ।

रूपविमर्श:

अथ अथ: श्वा ग्ने:( यजु: ५।८) रूपविमर्श:। उक्तान्यस्य त्रीणि शरीराणि ( ३।२०।२), सम्भावनीयानि च तानि ज्वलितज्योतिस्वजठरा ग्निरूपाणि। जठरा ग्नि: वायुवत् चरा चरा न्यस्थोऽग्नि: एतान्येव व्यञ्जितानि सायणा चार्येणास्य ( ३।२०।२) मन्त्रस्य भाष्ये पावकशुचिपवमानशब्दै: क्रमेण । परं यत्र नरा ङ्गारोपणं तत्र यज्ञा ग्निरेव विशिष्यते क्वचिच्च दावा नल: ( १।१४३।५)। वेदो निधानत्वात् सोमोऽप्युक्तमस्य शरीरम् ( यजु: ५।१)।

यज्ञा ग्निरूपे घृतप्रतीकस्य ( अथर्व०२।१३।१) अस्य घृतान्येव केशमुखपृष्ठनेत्राणि ( ३।१-२६।७,८,६०।२) , ( वनस्पतय:)हरितकेशकूर्चा:(३।२।१३,५।७।७), अयोमया: ( १०।८७।२), हरिण्यमया: वा ( ५।२।३) शुचिदंष्ट्रा: ( ५।७।७) सन्ति। ज्वाला: वै अस्य दंष्ट्रा: ( १।५८।५), जिह्वाश्चोक्ता: ( ४।१।८)। मन्द्रजिह्वस्या स्य (५।२५।२) मधुमत्य:( १।४४।६) , अमृतमय्या: वा ( १।५८।४, ३।२६।७) जिह्वा: सन्ति त्रिः,सप्त वा( ३।२०।२, यजु: १७।७६)। अनन्तरं दृश्यते नामकरणं मुण्डोष्णिषादि ( १।४) । श्मश्रव: हिरण्यवर्णा: सन्ति ( ५।७।७)। अभिधीयतेऽस्य मुखमेपान्नपात् ( यजु: ८।२४)। ज्वालामुखो ( यजु: ११।५८) बहुमुखो वा प्यस्यैव नाम्नी स्त:( यजु: १५।३६) । मूर्धास्या स्ति मेघराशि: वैश्वानरस्य (६।७।६)। परमत्र उक्तोऽयं " त्रिमूर्धानि: " ( १।१४६।१ )। यज्ञा ग्निपक्षे गार्हपत्या दय:, त्रिषधस्थस्य अग्ने: पक्षे सूर्यवायुपावका: मूर्धारिति विशेय: । प्रकाशा दा: (३।२६।७) यज्ञा दा:( अथर्व०१६।५८।५), चतुरक्ष: ( १।३१।१३) सहस्रा क्षो ( १।७६। १२) घृतचक्षुश्च ( ३।२६।७) : सन्त्यस्यैव नामानि । गुहाशिरो ( १०।७६।२), नाना हनू ( १०।७६।१) एतेऽप्यग्ने: उपाधी, तथापि उक्तोऽयं " अपादशीर्षा " (४।१।११)।

त्रिवर्णस्या स्य ( ५।४३।१०) रोचना: ज्वाला: ( ७।१५।१०) वायुर्विद्युषमपर्जन्यवागर्तोपि: इव गर्जनशीला: ( ५।२५।८,३,२,११;८।६३।५ ; १०।१४२।४ ), वृष्णमृगेव कूर्दनशीला: ( अथर्व ६।४६।३)। कपिगता/यस्व सन्ति ( अथर्व० ६।४६।१)। वनानि मदायन्ती अस्य ज्वाला: उन्मुका श्वानामिव ततो गच्छन्ति ( ६।६।४)। अस्य गतिशीला: ज्वाला: विराजन्त्यद्भुतरूपेण क्रीडड पृथिव्याम् ( ६।६।४) । प्रतारयत्येषु ऐश्वर्य तशकज्वाले: भूमण्डले (६।६।६)। वीराणां शौर्यमिव तन्त्यप्रतिरोध्या स्य ज्वाला: (६।६।५)। ज्वाला वै अस्य शृङ्गाणि । अत उक्तोऽयं ' तिग्मशृङ्ग (६।१६।३६), वज्रशृङ्गों वा( अथर्व० १३।१।१२)।

कृतोऽयं देवै: तप्रकाश: ३।१।४)। अस्य शुद्धं हिरण्यं तेजो भूषणमिव रोचते ( ४।१०।६)।

सर्वभुगीन: ---

---

विविधान्यस्या न्नानि--- सोमा ज्योंनबिल्लाणि ( ३।२०।२)। यद्यपि कों सर्वभक्षी अस्ति ( ८।४४।२६) तथापि श्येनं सुपर्णस्य(यजु: १७।७२) प्रियभोज्येषु वनानि ( १।१४३।५), काष्ठानि ( २।७।६) , तद काष्ठं यद ' उपजिह्विका ' , वम्री वा अतिसर्पति ( यजु: ११।७४), पलाशकाष्ठस्य ( यजु:११।७०), ओषधीश्चैव सन्ति ( ३।१।१०) । यथा काष्ठान्येवा ग्ने: प्रिया न्नानि (१०।६१।५) अतो ज्वालादन्तै: काष्ठा दीनि खादति तथैव अपि यथा नरो कात्र (७।३।४)।

आज्या युतोरिग्ने:( यजु: ५।२) प्रियमेवं घृतमस्ति (७।३।१,यजु:१ १।७०) । अपि च सोमरसेन वर्धितोऽयं (यजु: २६।१३) सोमगोपा ( १०।४५।१२) आमन्त्रितो नैकश: अन्यै: देवै: सह सोमपानाय ( १।१६।६, ३।२६।४), तच्च पीत्वा तृप्तोऽसौ शत्रुजयिनीं शक्तिमवाप्नोति । पृथिव्या: सानौ पदानि कृत्वा अस्य ज्वाला: उच्च: स्थानीयान् मेघान् लिहन्ति ( ~~[illegible]~~(१।१४६।२)। आहवनीया दिक्षेण नियतस्य वैश्वानरस्य जिह्वा गो: औधस्यं पातुमिच्छतीति ( ४।५।१०),। हविष्या वृधानोऽयमामन्त्रितो भवति प्राणिनां रक्षणा थैं गोघृत पानानन्तरम् (यजु:३५।१७)।

रथाश्वाद्य: ---

दुन्दुभि: हविर्भिश्च वर्धितमेनम् ऋषय: प्रतिमासर्तुसंवत्सरे मन्त्रै: परिवर्धयन्ति( यजु: २७।१) । वायो: प्रेरणाऽप्यस्य प्रवृद्धिकारणम् (५।१९।५)। एतदतिरिक्तं वसवो वैश्वानरं कुर्वन्ति बलम्( ७।५।१ ) इत्यपि श्रूयते । कौशिका: अप्येनं वर्धयन्ति (३।२६।३) । रूपेण हृदयस्थस्य धूमध्वजस्य ( १।६७-४४।३) वाहनं हिरण्मयो रथ:( ४।१।८) विद्युद्रथो वा ( ३।१४।१) प्रकीर्तित: । योज्यन्ते अस्य रथे मनोजवा: ह्वा: ( ४।२।३)। अश्वा: रोहिता: ( १।४५।२ यजु: ११।७ २), हरिद्वर्णा: वा ( ४।१।८) उक्ता:। ऋत्विग्भि: समाहूता: रोहिदश्वा: मुखनासापुष्टेभ्य: फेनकं दारद्र ऋजुमार्गेण गच्छन्ति । शोभना तेषां गति:। दर्शनीयास्ते सन्ति युवान: आरोचमानाश्च ( ४।६।९) । प्रकीर्तिता: अत्र ( ३।६।८) दिवान्तरिक्षाव्यापका: सर्वे देवा: अस्य रथ्या ह्वा: । आकाशवासिन्यो गाव:( रश्मय:) अप्यग्ने: सन्ति अश्वा: ( ३।१-७।२)। यजुर्वेदे ७।७) उक्तान्यस्य दशशः वाहनानि, सारथिश्च रणकुशलो वसन्तर्तु:( यजु: १५।१५)। स्वच्छन्दा रथस्य गति:( यजु: ३।३६)। सर्वलोकाश्रयो वैश्वानर: सोमरूपेण यानेन त्राणार्थमामन्त्रितोऽत्र (यजु: २६।७-८)।

तिग्मपथ: ---

यदा सहस्रम्भर: शुचिजिह्वोऽग्नि: ( २।९।१) अगोपपशुरिव चरन् (२।४।७), वायुयोगेन वनानि भस्मी करोति ( ६।६ ।३), यथा श्मश्रु नापित:(१०।१४२।४), पशव: तृणानि ( ८।४३।३), तृषितो वा जलम् ( २।४।६), तदाऽस्य गमनपथ: भवति कृष्ण:। अस्य देवस्य यात्रासमाप्त्यनन्तरं रजोमुक: कृष्णवर्त्मैवा वशिष्यते (१।१४१।७, ८।४३।६)। तिग्मोऽस्य पथ: ( ६।३।४)।

## वाससासनादीनि

उक्तमस्यायु: आज्यम् ( यजु: ५।२) । आसनं कृष्णाजिनम् (यजु:११।४०) कुशा वा ( १।१२।४)। प्रार्थितोऽत्र ( यजु: ११।४०) स्वासनं कृष्णाजिनमेव वसनं कर्तुम् । अत्र ( १।२६।१) तद्वेव स्व वस्त्रसुकम्, अत्र च ( ३।१।६) जलम्। मतोऽयं पवित्रो विनैव स्नानम् ( १०।४।५)।

शस्त्रास्त्राणि

अस्य लोहदन्तात्मा: ( १०।८७।२) ज्वाला एवायुधानि ( यजु:१७।१५) बाणा: वा (१०।८७।४) बहुधा ज्ञायन्ते । अस्य क्रोध एव बाण:( १०।८७। १३)। तेजो शनि:( तत्रैव ।५, अथर्व ८।३।४ )। उत्साहो वायुधम्( यजु: १३।१२)। व्याघ्रादय: हिंस्रा: पशवोऽपि स्मृतानि आयुधानि( यजु: १५।१५)। अस्य ज्वालारूपाणि शृङ्गाण्येवाजराणि सन्ति शस्त्राणि ( अथर्व ८।३।२५)। अयं देवो दिव्यायुधधरो (१०।८७।१६) धनुर्धरो वा-व्यायुक: (१०।११५।६) यत्र रक्षाति बाणै: स्वजनान् ।

## त्रीणिरूपाणि

एवं मानवत्वारोपितोऽयमग्निदेव: आदौ अव्यक्त:, पृष्ट्यनन्तरञ्च व्यक्तो जात:( १०।५।७)। तत्र तावदस्य सूर्यरूपे प्रथमा उत्पत्ति:, विप्रै: यज्ञाग्निरूपेऽस्य द्वितीया उत्पत्ति:, तृतीया चाप्सु वडवानलरूपे(यजु: १२।१८)। जरावर्जितं सूर्यात्मकं वैश्वानरं यज्ञकर्मादिनो देवा: जज्ञिरे ( १०।८८।१३), वडवानलञ्च प्रजापति: जज्ञे ( यजु: १२।२०)। पापरहितमग्ने: दर्शनम्, तच्च सूर्यदर्शनमिव रक्षति पापात् (६।३।३)। महद्रूपेण दीप्यतेऽस्य रूपम् ( ६।३।४)। रात्रौ सूर्यतेजोऽग्नौ, अहनि च अग्नितेज: सूर्ये समाविशति ( विष्णु० ८।२३-२५)।

## उपमा:

अस्य सौम्यप्रचण्डरूपानुसारम् उपमीयते असौ हंसश्येनाभ्याम् ( १।६५।५, ७।१५।४), अहिना वा ( १।७६।१) क्वचिच्च सकेशाश्वेन ( १।२७।१), क्रन्दनश्वेन (३।२६।३), धेनुना वा ( ६।३।३), बहुशश्च वृषभेण ( १।५८।५,४।५।३)। अथर्ववेदे ( ४।३६।२) पृथ्वी गोशब्देन, अग्निश्च वत्सशब्देन व्याख्यात:। ऋग्वेदे (१०।५।७) दृश्यते एकत्रैवास्य गोवृषभत्वम् । द्यावापृथिव्यौ गावौ , अग्निश्च द्वयोरपि संयुक्तवत्सोऽस्ति ( १।१४६।३)। असौ गौरिव श्वसिति (१।१४०।१ ०)। पश्वेव निस्तृतोऽयं (१।६५।३)शिशुवत् प्रदीप्तो भवति ( १।६५।५) । विभाति कृ मातृप्रकम्पकोऽग्निदेव: सद्यकिशोरोऽइव ( १।१४०।३,१०)। गच्छति यथा तृषित-वृषभो जलाशयं तथैवायं काननं जलानि प्रति ( १०।४।५)।

दिवो मूर्धा

अग्निरेव पृथिव्याः पतिः, दिवो मूर्धा ककुद्वा देवानां शिरोऽथवा स्कम्भस्य शिरोऽस्ति ( ८।४४।१६; ६।७।१; अथर्व०१०।७।१८)। अपि च उक्तोऽयं नाभिः भूमीवादित्यानां द्युलोकस्य वा ( १।५९।२, १०।४५।३)। यथा शरीर सञ्जीवनार्थं तच्छिराकेन्द्रो नाभिः मुख्यस्तथैव आदित्येऽग्निः , जीवेषु जठराग्निः, पृथिव्याञ्च तद्गर्भस्थाग्निः मुख्यो मतः। सुस्पष्टा तावदत्र जीवादित्ययोः अग्नेः स्थितिः पृथिव्याञ्चानेन ( २।१२।२) मन्त्रेण । व्याख्यातात्र पृथिवी व्यथमाना, पर्वताश्च प्रकुपिताः। अनेन कथनेन ज्वालावलिविस्फोटैः भूकम्पनं सुस्पष्टम् । आसीदेवम् कण्वयो भूगर्भस्थाग्नेः ज्ञाता, ततस्तैः उक्तोऽग्निः पृथिव्याः नाभिरिति ।
प्रतीयतेऽत्र विलेब्रान्टमहाशयेन , वेदिशे मायथालाजीत्याख्ये ग्रन्थे ( १।१७६), हांगमहोदयेन च एतरेय ब्राह्मणाख्ये( पृ० ६२) ग्रन्थे, प्रतिपादितेयं धारणा एकदेशीयैव यत् ( पृथिव्याः) नाभिशब्दः मात्र यज्ञार्थंखनितवेदिकामेव- अग्निकुण्डम्- व्यञ्जयति। यत्र जीवादिषु व्याप्तिः द्युलोकस्थितिः वा उक्ता( १।५९।१-२, यजुः १८।५४) तत्र यदि दृश्यते प्रयोगो नाभि शब्दस्य सह पृथिव्या तर्हि अयं नाभिशब्दः पृथिव्यामग्नेः व्याप्तित्वव्यञ्जको, नाभिवद् देहबन्धको वायमित्येव वक्तव्यः। अन्यत्र ( १।१४३।४, २।३।१) यत्र यज्ञाग्निरूपे भूयोऽस्य स्तुतिः तत्रैव वेदिकानिहितोऽग्निः ग्राह्यः न च सर्वत्र ।

अस्य द्वे रूपे

दृश्येते ऐश्वं सर्वान्तस्थग्निदेवस्य द्वे रूपे ज्वालिमन्तर्हितञ्च। तत्र प्रथमं रूपं तु सामान्याग्निकाया यज्ञगृहेषु, दावदामिनीवडवानलतया प्राप्यते वनवारिदसागरेषु। द्वितीयं पुनः, अर्चिः वनजीवापाश्मौषधीषु जठराग्निरिति कृत्वा ज्योतिषु च (१।६३।५, २।१।१, अथर्व १।७।२, ४।२३।१)। किं बहुना सचराचरनिखिलब्रह्माण्ड-व्याप्तोऽयं ( ३।२।६ ) नृणां नृपतिः ( २।१।१) परब्रह्मण्यपि विभो तत्सत्ता ।

लोकजीवनहेतुः

अत एव नाकाधिलोकप्रकाशकस्य (१।१६।६) सिद्ध्यति सर्वव्यापकत्वम्, अनिवार्यत्वञ्च जीवनेभ्यः । यत्रोच्यते सृष्टिस्थितिलयहेतुरग्निः नेयं काचिदत्युक्तिः,

यतो हि नाग्निं विनानुभूयते जीवनम्, दृश्यते च तदभावे प्राणहानि: । असंशयमयमेव ज्योतिषामपि जीवनम् । अत एव यथा यथा पृथिवी शीतलतां भजते तथा तथा हीयतेऽस्या: गति:, प्राकृतिकोत्पादनशक्तिश्च। तदेवो पूर्वं ज्योतिषां गतिरिति विज्ञायत्यनेन । गत्याकर्षणाभावे एव वर्ण्यते प्रलयेषु ग्रहपिण्डसङ्घट्टनम् ।

आवासा:

अथ व्याप्त्यनन्तरमावासवर्णनम् । यत्रास्यव्याप्तिस्तत्रैवावास: इत्यसन्दिग्धं तथ्यम्, यतो हि उपरि व्यक्ता यत्र व्याप्तिस्तत्रैव अन्यत्र उक्ता: आवासा:।तथा हि-- देवनरपशुखगद्विचतुष्पदा: ( तैत्तरीये ४।६।१।२, अथर्व ३।२१।२, १२।१।१९, क० ८।३६।६) , ध्यापाश्मौषधय: ( २।१।१, अथर्व०१२।१।१९), ज्योतींषि च (१,६८।५)अथवा प्रत्येव वर्ग एवास्याप्यावासभूता: । आदित्यरश्मिष्वप्यूर्ध्वं वसति (१०।५।६,७)।

त्रिगुणात्मकोऽग्नि: त्रिषधस्थ:, त्रिषस्थो वा( ८।३६।८,३।२ ०।२) आख्यात:। अत्र अस्यावासक्रमविषये विद्यते विचिकित्सा । तत्र बहुशस्तु अस्यावासक्रमेषु व्यतिक्रमेण भूद्युव्याकाशा: एव लिखिता: ( ८।४४।१६, १०।२-४५।१) परमत्र (१।६५।२) भूद्व्याकाशाय:। अत्र तावद् बहुपठिते प्रथमे क्रमे न दृश्यते अन्तरिक्षीयोऽग्नि:। न सुस्पष्टतया, परमप्रत्यक्षरूपेण अप्सु एव समाहित: इत्यवधारणीय:। अत्र अमरत्वादाकाशीयोऽग्नि:--- ज्योतिषाम् -- प्रथमतया पठित:। तत्रापि सूर्य: प्रधान:।उक्तञ्च निरुक्ते( दुर्गा०निरुक्त १२।१६), अपि च व्यवहारे, ज्योतिष्केषु सूर्यैव प्राणिनां प्राण: उक्तोऽकश्च अत एव अग्रण्यो द्युस्थानीयोऽग्नि:।

विश्वव्यापको ( ३।२।६) यज्ञपावनप्रकाशनशीलश्च पार्थिवाग्नि: दैनिकजीवनेषु अपरिहार्यत्वात्, पुनश्च लोको जीवप्रधान:, अतोऽस्यैव सर्वथा द्वितीयं पदम् । यद्यपि उत्पत्तिक्रमे तृतीयं पदमलङ्करोतीति ।

तृतीयावासे जले गरूपमानानि अवगन्तव्यानि अग्निवासस्थानानि न च मात्र सरसरित्सागरजलम् । अग्निना ( सूर्याग्निना) सागरोत्थापिता वाष्पराशिरेव

अन्तरिक्षे भवते मेघत्वम् ( १।६५।७)। सा च जलमयी । अत एव तत्रस्थाग्निः अन्तरिक्षीयोऽपि भूत्वा वस्तुतः जलस्थानीय एव । अतः कथमेव अन्तरिक्षीयोऽग्निः अधिगन्तव्यः ।

यश्चायमपरा आवासक्रमः --- समुद्राकाशाप्सु ( १।६५।३)--- अत्रोद्दिष्टो वृष्टिक्रमः, न च विश्वव्यापकस्य अग्निदेवस्य ब्रह्माण्डनिकायव्याप्तिसूचकोऽयम् आवासक्रमः , दृश्यते यथा प्रथमक्रमवर्णने । विवेकबुद्ध्यापि, न कथमपि स्वीकार्यं समुद्रस्य प्रथमावासत्वम्, तयोर्द्वयोरपेक्षा अस्य हीनमहत्त्वशीलत्वात्, 'अप्सुसमुद्र' शब्दयोश्च प्रत्यक्षाप्रत्यक्षपार्थिवाग्नेः व्यञ्जकत्वाभावेऽपि । अनुपेक्षणीयश्च पार्थिवोऽग्निः।

अत एव नायं त्रिधावस्थस्य सर्वव्यापकत्वसूचकः आवासक्रमः अपितु वृष्टिक्रमनिर्देशक एव। तत्रैव अग्निना सागरोत्थापिता वाष्पराशिः आकाशमधिगम्य भवते मेघत्वम्( अत्राकाशो मात्र अवकाशव्यञ्जकोऽस्ति । अतोऽनेन आकाशशब्देन व्यञ्जितमन्तरिक्षम्।) विद्युदग्निश्च तत्र। अत उक्तः आवासः। अनन्तरं, यदा वर्षति तदा तदेव भूमिं प्राप्य 'आपः' इति कथ्यते, तदर्थमेव अत्र ( १।६५।३) 'अप्सु' कथितोऽग्न्यावासः। अनिवार्या कारणव्याप्तस्य कार्यव्याप्तिः। अपि च 'पूर्वामनु-प्रदिशि' वृष्टिं कुर्वन् सूर्यात्मकोऽग्निदेवः पार्थिवानां कृते ऋतून् निर्माति तच्च विद्धि --- वृष्ट्यनुसारिणः ऋतवः ।

एवमत्र ( १।६५।३) वृष्टिक्रम एवाख्यातः, न च अग्न्यावासव्यतिक्रमः यथा च सन्दिग्ध मैकडानल महाशयः( वै०मा० अनु०रा०कु०पृष्ठ १७६)।

यास्कमतेन ( निरुक्त ७। २८) अस्य पूर्ववर्ती शाकपूणिः अत्र (१ ०।८८।१०) त्रिगुणात्मकस्याग्नेः( तापनप्रकाशनोत्थापनात्मकस्य) अस्तित्वं भूम्याद्याकाशेषु मन्यते। सायणाचार्योऽपि , अग्नेः अग्निवायुसूर्यरूपाणामत्र ( ३।२६।८) उल्लेखं कृत्वा, शाकपूणिम् एव अनुसरति । अत्र वायुशब्दः अन्तरिक्षाग्निव्यञ्जकोऽवबोध्यः। यतो हि अयमेव त्रिषु अन्तरिक्षव्याप्तेषु-- वायुविद्युन्मेघेषु--- प्रमुखतमः, सर्वैः सर्वदानुभवगम्यः, अनिवार्यमहत्त्वयुक्त एव । विप्रतिपत्तिविहीना वायौ अग्निव्याप्तिः यतोऽनुभूतोऽस्य दाहकत्वं जीवैः शरीरेषु वायोः प्रकुपिते सति ।

अपि च उक्थस्य परीक्षत्वमत्र ( २।२०।१,४।४०।६ ) अथर्ववेदे । अतो व्यतिक्रमेण सातत्यानुसृत्यभावे नार्हतः अन्तरिक्षायोऽग्नेः व्यञ्जकत्वं सत्यपि तत्राग्नेः व्याप्तिः ।

यत्र च दृश्यते वायोः स्थाने इन्द्रः(साम० पू०आ० १।५।१०।७) तत्रापि नास्ति काचन आपत्तिः। हि क्रियात्मकदृष्ट्यायमिन्द्रः वृत्रं हत्वा जीवनोन्मोचकत्वात् ( ४।१६।२, ६।२०।२) , वज्रश: अपरिदैत्यनाशकत्वाच्च ( २।१४।७) अन्तरिक्षीयदेवेषु, वैशिष्ट्यप्रशस्तिदृष्ट्या च सर्वेष्वपि देवेषु प्रथम एव ज्ञायते । कार्यं हि महत्त्वपददायकम्। अथवा वायुः इन्द्रसारथि ( ४।४८।२)। अतोऽनुचरो वायुः इन्द्रस्य। स्वामिनो बलिष्ठस्य वा सर्वत्र प्रतिष्ठा । एवं इन्द्रो वायोस्स्थानापन्नो सदाम:, असन्दिग्धत्वादस्य अग्निप्रतिनिधित्वं सूर्यात्मकत्वादस्य ( १।६।१) । अथवा ऋग्वर्णकाग्नीन्द्रयोः( १० ।१२।३-४) वृत्रादिदैत्यानाशककार्येष्वपि दृश्यते सामञ्जस्यम् ( १।५६-३६।२०,३।२०।४), अतोऽपि युक्तियुक्तमेव इन्द्रस्य अग्निप्रतिनिधित्वम्-- सति सामञ्जस्ये उभयोरपि अन्योऽन्यपदप्रतिष्ठायां समर्थत्वात् ।

पाश्चात्यविद्वांसः आमनन्ति यदत्र विद्युत्त्वात्म्यत्वं तात्त्विकपर्यायाभावे वा अन्तरिक्षाग्निपदे इन्द्रवायुशब्दयोः आगमनकारणम्। परं न तथा। अपितु अन्तरिक्षस्थाग्नेः स्थाने वायोरनन्तरम् इन्द्रागमनं सूचयति सूक्ष्मीकरणप्रवृत्तिः अस्मिन् विषये । या चेयं धारणा,यद् विद्युदेव अन्तरिक्षीयाग्नेः व्यञ्जिका, सा तु निर्मूलैव प्रतिभाति-- तत्र एकदेशीयतायाः सिद्धत्वात्। इयन्तु केवला मेघस्थस्य दृश्यान्तरिक्षीयाग्नेरेव व्यञ्जिका भवितुमर्हति। स्थूलत्वं तत् रूपं तत्रस्थस्य अग्नेः। अत्र एकदेशीयत्वपरिहारार्थमेव सूक्ष्मीकरणप्रवृत्त्या प्रेरितैः वैदिकर्षिभिः विद्युत् स्थाने वायुः अनन्तरञ्च तद् स्थानेऽपि इन्द्रः पठितः। सुव्यक्तात्र सूक्ष्मीकरणप्रवृत्तिः।

## कर्मनिरूपणम्

अथ कर्मविमर्शो निरूप्यते । नैकशरीरस्य ( १०।६८।१०), द्विजन्मिनोऽस्य (१।६०-१४६) क्रियासु देवेभ्यो हविर्वहनम् ( ७।१०।३, अथर्व४।१४।४) तेषामाह्वानम्, यज्ञस्थलेषु च प्रापणम् ( ११।१-१३१,४, अथर्व० ५।१२।३) , समरदाऽरिनाशनम्

( तै०ब्रा० २।१।३।१। इति श्रुतेः तै०५ ।४।३) । पेवते एवं पृथिवीं (६।४।५)।

अग्निः अन्येषां देवानां विनेव ( १।३६।२० ७६।३, अथर्व १।२८।१-४, २।१८।४), सहयोगेन वा ( अथर्व ५।२९।२-१०) वृत्रदानां हन्ता कथितः। रक्षोहन् ( १०।८७।१), वृत्रहन् ( १।७८।४) उपाधी अप्येनमिन्द्रवदेव अलङ्कुरुतः। तत्र इन्द्रः प्रधानरूपेण वृत्रादिदैत्यघातकः ( १।५७।६, ६।।२०।२) सहायकाश्चास्य सोमसरुतः ( ६।६१।२२, शत०ब्रा० ३।२०) उक्ताः। तुलनात्मकदृष्ट्या कृता द्वयोरपि कर्मणां विवेचना सिद्ध्यति यत् भवति ननु अग्निमिन्द्रः-- अशक्तत्वात् तथैव हविवहनवज्रोत्पत्त्योः।कार्याणि शक्तिप्रतीकानि। अतोऽनुमेयमनेन इन्द्रस्य हीनशक्तित्वम् अग्नेरपेक्षा। सम्भवतः एनमेव संलक्ष्य इन्द्रं वृत्रादीनां वधकार्येष्वपि अग्निमनु मन्यमानाः ओल्डनबर्गमहाशयः कथयति, निर्विवादमेवं यत् पूर्वसंस्कारेषु रक्षोहन् रूपेण इन्द्रस्य अपेक्षा अग्निरेवप्रमुखतां भजते ( धर्म- वेद,पृ० १२८)।

## सम्बन्धाः

सम्बन्धस्य दृष्ट्या उक्तोऽयं बहुशः भ्राता पुत्रो वा नरदेवादीनाम् । तथा हि--- सिन्धूनाम् ( १।६५।४), वरुणस्य ( ४।१।२), स्तोतृयजमानानाम् (८।२८।१६, ८।४३।१६), मेधचारिणाञ्च अग्निः भ्राता अस्ति। अस्ति यमजो भ्राताऽस्य इन्द्रः ( ६।५६।२)। सूर्यवायू अग्रजौ (१।१६४।१) स्तः। भूपतिर्भुवनपतिर्भूतानां पतिरिति अग्नेः स्योऽग्रजः ( १०।५१।६)। ।द्यावापृथिव्योः मातरिश्वनः,नरदेवादीनाञ्चायं पुत्र इत्यत्र दृष्टव्यास्योत्पत्तिः । गुहायां सतोऽस्य वायुः अस्तित्वमभिव्यनक्ति ( ३।१।६, १०।११५।४)। सूर्यस्य दुहितरौ रात्रिदिवसौ अस्य अनुगामिन्यौ स्तः ( ६।४६।३, यजुः २७।१७)। कं पितामहः( यजुः १२।१०८,२७।४४),मरुद्देवाश्च पुत्राः सन्ति ( १।३१।१)। दशाङ्गुल्याकाः अङ्गुल्यः स्वसारः स्मृताः ( ३।२९।१३)। सत्यबलः पुत्रः, शीघ्रगामी च अश्वोऽग्नेरेव भवति ( ४।११।४)। भूदेवाद्भिः सार्धमपि दृश्यतेऽस्य सख्यम् (१।६५।१, ७।७।२)।दक्षिणाग्निः, गार्हपत्याग्निः, आहवनीयाग्निश्च अथवा शुचिपावकपवमानाः( वि०१०।१५) अथवा कुमारोऽस्य ( हरि० ३।४२,मत्स्य० ५।२६) स्वाहायां जातः पुत्रः प्रकीर्तितः । जातवेदसः एव श्रूयते ज्ञानस्तुतीनामुत्पत्तिः ( ४।११।३, ८।९१।८)।

स्वाहा अग्नेः वामपार्श्वोत्पन्ना कन्या पत्नी च उक्ता ( ब्रवै० ब्र०।४)। अन्यत्र अस्मिन्नेव पुराणे स्वाहा, देवाराधितायाः भगवतः कृष्णस्य मूलप्रकृतेः अंशोत्पन्ना अग्नेः दाहिकाशक्तिः, अर्धाङ्गिनी च भवति( ब्रवैप्र०।४०)। विष्णु-पुराणे स्वाहा दक्षकन्या अस्ति ( वि० ७।२५)। इमां विना असमर्थोऽग्निः हवींषि भस्मसात् कर्तुम् ।

## चित्ररश्मिः अग्निः

अस्ति दक्षाङ्गुलिका कला अस्य धारिका ( ३।२७।१०)। अयं देवो वायुरिव बलवान्, इन्द्रेण समञ्च दिव्यगुणयुक्तः इत्यपि श्रूयते ( ६।४।७)। अग्निः मरुद्गणस्य बलं क्षीणतां नयति ( ६।३।८)। तप्तैः रश्मिभिः अन्तरिक्षमुपस्पृश्यासौ सूर्येण संगच्छति ( ७।२।१, यजुः २७।१५)। अन्तरिक्षमापकस्यास्य तापोऽस्के दायोऽस्ति (३।२७।७)। अस्य रश्मयः सप्तवर्णाः स्मृताः ( १।१६४।१,२।५।२,३।१।६)। अन्यत्र बहुवर्णाः, त्रिवर्णाः चापि कथिताः।------- गार्हपत्यादीनि त्रीणि अग्नेः ज्योतींषि सन्ति ( अथर्व०१८।३।७)। अस्य भानवः स्वर्णिमाः भवन्ति( २।८।४)। चित्रभानुः( २।१०।२) इत्यपि अस्यैवोपाधिः, विद्युतो यथा भानुना कैवर्णत्वम् । अग्नौ एव हविपक्तिसोमादीनि एकविंशतिसंख्याकानि यज्ञलक्षणानि पदानि निहितानि सन्ति ( १।७२।६) --- अस्या भावे तेषां सम्पादनम् अशक्यत्वात् । विश्वेदेवाः अग्निदेवे एव वर्तन्ते तदन्तरेण तेषां जीवनात् ( ५।३।१)। एकत्वेन अराग्निं सर्वे देवाः अनेनैव परिभूताः( तेजसा पराभूताः) सन्तीति कथ्यते (५।१३।६)।

## अमृतोऽग्निः

च्छायाः श्वेतमृग इव दुष्करहोतृकर्मभीतोऽयं वरुणमुपगतः, अतोऽयञ्च यत्र निविष्टानि मे शरीराणि बहुधाऽप्सु अथवा वक्षु गुह्यस्थलेषु-----त्रयो लोकाः, त्रयो देवाः -- अग्निर्वायुरादित्याः, आप , ओषधयो, वनस्पतयः प्राणिशरीराणि चेति ( १०।५१।३-४)। भीतिहेतुश्च एतदेव कर्म कुर्वन् अस्य त्रयाणामग्रजानाम्--- भूपतिभुवनपतीनाञ्च मरणमस्ति ( १०।५१।६)। अनन्तरं देवैः स्तुतः, प्रवचायुः,

अलङ्कृतोऽग्निः उवाच -- सर्वस्यापि हविषः सारभूतं यज्ञपुरोडाशादेर्भागम्, अपां सारवन्तमाज्यम्, ओषध्युत्पन्नं पुरुषं भागम्, दीर्घमायुः मह्यं देहि ( १०।५१।८)। स्वीकृते च देवैः अग्नेः याञ्चापत्रे ( आधुनिकभाषायाम् ) तेन पुनः अङ्गीकृतं स्वीयं कर्म १०।५१।९)।

अस्य पञ्चदशपुत्राः

अक्रविष्णु कविः( ७।४।४) स्वर्गदा ( अथर्व० ७।८४।२) वैद्योऽग्निरस्ति देवानां सेनापतिः( अथर्व०४।२६।१, ३।१।१)। स एव विष्णुः कालाग्निरुद्रश्चेति अवगम्यते अस्यैव मुखात् ( अग्नि० १।१३)। सृष्टेरादौ पद्मोत्पन्नोऽग्निर्देवो वाग्भूत्वा मुखं प्राविशत् ( ऐ०उ० २।४), स एव एकोऽग्निः नानाविधान् अग्नीन् परिव्याप्य तिष्ठति ( १।२६।१०, ३।२४।४)। अस्य परिवारस्य सदस्यानां सङ्ख्या एकोनपञ्चाशत् ( वि०पु० १।१०।१५-१७) पठिता । आग्नेयदिशः दिक्पालस्य( अग्नि० २१।८) परिवारस्य इयं सदस्यसङ्ख्या एकोनपञ्चाशत् मरुतां सङ्ख्यया साम्याय एव सम्भवतीति प्रतीयते । अथवा अग्निदेवः, शुचिपावकपवमानेत्याख्यास्तस्य त्रयः पुत्राः, एतेषाञ्च पञ्चचत्वारिंशत् पुत्राः--- द्यौः, उषाः, पूषन्, द्वादशादित्याश्चेति पञ्चादश पुत्राः शुचेः, विद्युदर्कपर्जन्याः तत्रस्थ वैदिकोऽग्निः, एकादशरुद्राश्चेति पवमानस्य पञ्चादशात्मजाः, पञ्चप्राणाः( अग्निः ह वै प्राणः ( जाबाल०४), गार्हपत्यादयः पञ्चाग्नयः, काष्ठाश्मसागराणिषज्वालोद्भवाः पञ्चक्रव्याग्नयश्चेति पञ्चदश पुत्राः पावकस्य --- सन्त्यस्य एकोनपञ्चाशत् गृहसदस्याः ।

देवत्वं न भयानकम्

अग्निर्देवेभ्यः समर्पितैः सूक्तैः प्रकीर्णमन्त्रैश्च यत्र निःसारा प्रशस्तिरेव न अवबोध्या, यथा मन्यन्ते पाश्चात्यमनीषिणः तेषु भक्तिमन्तश्च भारतीयाः यद् रुद्रादिभ्यो भीताः, सूर्यपर्जन्यादिभ्यः उपकृताः आर्यजनाः इन्द्रार्कादीनां देव इति कृत्वा पूजां प्रारभन्त । कामी स्वतां पश्यतीति ' कालिदासवचनेन , भविष्यति पाश्चात्यानां भयस्वार्थपरा देवपूजा परमार्थिनान्तु आशाप्रेमपराविज्ञान सम्मता एव माननीया भवति। आर्यास्तु यं देवमर्चन्ति तमेव श्रेष्ठगुणगणैः विभूषयन्ति,

न कुर्वन्ति तेषां मनांसि अन्यत्र पदानि। अत एव दृश्यते इन्द्राग्निरुद्रवरुणादिषु प्रायः गुणकर्मसाम्यः। वैदिकप्रशस्तिषु पौराणिकाख्यानेषु च पदे पदे लभ्यन्ते वैज्ञानिकतथ्याः, ते च पाश्चात्यैः वर्विकैः भारतीयैर्वा अन्धविश्वासाः इत्युपहसिताः भवन्ति । नान्यथा भवेत् सूर्यरश्मयः सप्तवर्णाः इति न्यूटनमहोदयस्य प्रतिपत्तिः, न नूतनविश्वान्वेषकः कोलम्बसः। वार्तवपवनः, ज्वालाचलविस्फोटैः भूकम्पन इ, त्रिवर्णोऽग्निः चित्रवर्णो वेति प्राचीनानां शोधविषयाः नाजायन्त ।

## विज्ञानसिद्धान्ताः

अग्निविषयकमन्त्रेष्वपि सन्ति बहवः मान्याः विज्ञानसिद्धान्ताः। तथा हि--

१- तेजसो नित्यत्वम्

विश्वविधायकोऽग्निः ( ३।२१।६, ४।५३।३) अविनाशीत्युच्यते (२।६।५, ५।१४-१८।१ ) । विज्ञानानुसारं सन्ति पदार्थाः अविनाशिनः, परिवर्तन्ते तेषां रूपाणि। एवमेव सिद्धान्तम् ऋषयः स्वं प्रतिपादयन्ति यत् प्रज्वलितोऽग्निः स्वैः रश्मिभिः अन्तरिक्षमुपस्पृश्य सूर्यं संगच्छति ( यजुः२७।५, ऋ० ७।२।१) भवति च तत्र परिवर्तितरूपेण प्रकाशगुणान्वितोऽयम् । यद्यभवत् वस्तुनाशे तेषां विश्वासः तर्हि यदाग्निं नरो जलेन शामयति, नाभवत् तस्मिन् अमरबुद्धिः। अग्निनैव प्रजीवेषु क्रिया अतोऽसौ विधायकः ।

२- तेजोमूलाकर्षणशक्तिः

अग्निः सूर्यसंस्थापको ज्योतिश्चक्रस्तम्भकश्च ( १०।१५६।४,१।६३।५) उक्तः। कथितोऽयं यत्र ( १।६७।३, ६८।३) दिव्यन्तरिक्षयोः धारकः तत्रापि ऋग्वेदमन्त्राण्येव भवन्ति माननीयानि। अन्यत्र सूर्यो द्यावापृथिव्योः स्तम्भकः स्मृतः ( ४।१३।५, ५।१६।४, १०।१४६।१) ज्ञायतेऽनेन सूर्यस्य सौरमण्डलस्य तदस्थानां स्वाकर्षणशक्त्या नियामकत्वम्, तदनुसारेण पृथिव्याः अपि सूर्याकर्षणशक्त्यैव स्वकक्षायां वर्तित्वम्,

पृथिव्यो शासमासीत् । ज्योतिषां स्थितिमूला तेषामाकर्षणशक्तिः इत्यपि वक्तुं शक्यतेऽत्र । आकर्षणशक्तिः तस्याः दीर्घं वा तच्छ्रमणगत्यधीनमस्ति गतिश्च तत्तस्याग्निर्तेजमूला। अत एव अग्निरेव ज्योतिश्चक्रसंस्थापको मतः--- मूले एव गौरवत्वात्। यद्यपि प्रत्येकस्य ज्योतिषितः स्थित्यां बहूनां ज्योतिषाम् आकर्षणशक्त्यः साहाय्यं कुर्वन्ति तथापि गौरवत्वानां प्रतिष्ठायां मूर्धशक्तेः एव प्रधान्यत्वात् मूर्धं तेषां संस्थापकः उक्तः।

३- अग्निर्वै प्राणः

अग्निः ह वै प्राणः( जाबाल०७४) , प्राणः क्रियाहेतुः क्रियया च वृष्टिः, अतोऽयं भवति वृष्टिकर्ता ( ४।५३।३)। यावज्जीवेषु प्राणाग्निःतावदेव देहधारणम् तस्माद्विश्वधारको देवोऽग्निः ( १।१२२।१, ४।५४।४)। नाग्निं विना जीवनम्, अतः सूक्तेऽस्य आयुरिति संज्ञा ( १।६७।४) । सर्वमिदमग्निमयम् ( १।६६।४)। स च स्वतेजसा सचराचरक्रियाणां स्वामी भवति अतो विश्वकर्मेति अस्योपाधिः(यजुः १२।४३)। अन्नानां वनस्पतीनाञ्च अङ्कुरीकरणे अग्नितेजः जलस्य च ( जलस्यापि वृष्टिहेतुत्वादग्निरेव भवति हेतुः) प्राधान्यत्वात् अतो एव हविर्दुग्धवनस्पतीनाञ्च उत्पादको भवति ( १०।८८+९१।६) । अग्नितापं विना असम्भवा वनस्पत्युत्पत्तिरिति विज्ञानक्रियासिद्धः। अपरिहार्या उत्पत्तौ क्रिया--तैजसगुणमूला। तेजोऽग्निमूलम् । अतः क्रियामूलोऽग्निः तस्मादेव उक्तोऽसौ चराचराणां जनकः ( ४।३६।२)।

४- पथशोधकः

विशां पतिः ( ८।४३।२७) अतो धूमपङ्क्त्यां पथशोधकः उक्तः ( अथर्व० ५।२७।२) । तद्धूमकिरणानां प्रभावेण तेषां पथस्थानां कीटानामभावो जायते एवं तेन क्रियते पथशोधनम् । कीटानां नाशाय प्रार्थितोऽयम् अथर्ववेदस्य अस्मिन् (अथर्व० ५।२३।१) मन्त्रे । कीटनाशनेन पथशोधनमेव अत्र उक्तं भवतीति स्पष्टम् । अग्निदेवस्य अहिंस्यगवामभूतं रक्षां कृते विषं भवत्वित्यत्र ( १०।८७। १६,१८) प्राणिनां

प्राणरूपा: रश्मयो भवन्ति जीवजीवनानि, कीटरक्षोभ्यश्च विषमिति व्यवहार-गम्यम् । तथाहि-- यज्ञाग्निमाज्यो धूमश्च परकर्णां त्वचा व्याप्तात् कीटान् नाशयति करोति च नीरोगं कश्चिन: । अथवा रक्षसां निशाचरशीलत्वात् गोरूपत्वात् च तेषां दुश्चरत्वात् अत: शत्रुभि: सरलतया वध्यत्वात् भवन्ति गाव: तेभ्यो विषरूपा:, तेषां शत्रुभ्यश्च अमृतरूपा:। यथा स्वामी सेवकान् क्रियासु नियोजयति स्वमेव जीवाङ्गानि स्वतेजसाग्नि:। अतोऽयं प्राणिनां स्वामी (२।२८।३। मत: ।

५- चित्ररश्मयो ज्वाला:

अग्निदेवस्य ज्वालानां वर्णविषये प्रतीयो भेदो, या मात्र प्रतीतिरेवास्ति यत्रैकस्य रङ्गस्य उल्लेखोऽस्ति तत्र पावकार्चिष: प्रधानवर्ण एव वर्ण्य इत्यवगम्य:। तथा हि-- अग्निं पिङ्गलार्चिषं वदन्ति ( ३।२।१३)। बहुशस्तु सामान्यरूपेणैवासौ हिरण्यवर्ण:, नीलपृष्ठो वा उक्त: ( ५।४३।१२)। ( ५।४३।१३,८।७२।९) अत्र त्रिधातुमग्निं सायणाचार्यो रक्तश्वेतकृष्णवर्णान्वितमिति विचारयति । परं वैज्ञानिकास्तु अग्न्यर्चिषु त्रयो वर्णा: नीलपीतलोहिता:--- मन्यन्ते। एते त्रयो वर्णा: पृथक् पृथक् मन्त्रेषु विहिता: सन्ति ( ५।४३।१२,यजु: ११।७२)। सर्वे योऽरोचयत्, तेन तत्र एव उक्त्वा व्यन्वितोऽग्नि:। नात्र काचिद्विप्रतिपत्ति: ।

सायणाचार्योक्तेषु अग्निवर्णेषु श्वेत: पाण्डुवर्णस्य द्योतको भवति यथा वैज्ञानिकानां पीतवर्ण: पाण्डुरङ्गस्य। आचार्यस्य कृष्णवर्णस्य मान्यताऽपि व्यवहारसिद्ध एवास्ति। प्रज्वलिताग्नेरर्चींषि यदा आधारत: त्र्यङ्गुलप्रमाणे उज्ज्वलन्ति तदा अस्मिन् त्रिकोणस्य पार्श्वयो: क्वचित् नीलवर्णस्य, क्वचित्कृष्ण-पर्णवर्णस्य प्रतीति: जायते, त्रिकोणस्य अविच्छिन्नभागे बभ्रुवर्ण: आधारसूक्ष्मदाविशिष्टदौ च ईषत्कृष्णवर्णो दृश्यते । अथवा कृष्णधूमान्विता: अर्चिषाम् उपरभागा: दृश्यन्ते कृष्णा: इति। अत: साधु: एवात्र आचार्य:।

अन्यत्र विश्वज्योतिरग्नि: ( १०।७०।२), सप्तवाजिन् सप्तरश्मि: ( १।१४६।१,१०।१२२।४), चित्रो ( १०।१।२) वाष्णुक:। यत्र असौ सप्तवाजिन ,

अथवा 'वृष्ट वाणी:' अग्निं गर्भं दधते (३।१।६), अथवा 'उष्टवाणी:' मातरि विविशुः (३।७।१)इत्युक्त्वा स्मृत:, तत्र पूर्वं च अत्रापि रश्मय: उष्टवर्णाः अवगम्या:। वर्णेषु शितिपीतरक्तहरितानाम् भिन्नस्थानेषु ( ३।७।१,५।४३।१२, १,६४।१०, अथर्व १३।२।८) दृश्यते वर्णनम् । अन्येषाम् रतः सार्धं स्वल्पाधिक सामीप्यत्वात् उल्लेखो नावश्यक एव सिद्ध्यति अथवा कर्षे: दृष्ट्या मन्त्रे यस्य वर्णस्य विशेषणतया उपयुक्तता आसीत् तस्य प्रयोगो दृश्यते अन्येषां गणन । 'उष्ट' शब्दे मान्येति ।

यत्र चित्रोविश्वरूपाख्यो वायसुक्त: तत्र अस्य अग्ने: नानावर्णत्वम् अभीष्टंभवति । नानाविधद्रव्याणां रञ्जितपदार्थानां वा संयोगेन अग्नि: चित्रत्वं विश्वरूपत्वं वा भवते इति, व्यवहार ज्ञेयाश्चास्य नचाधिकवर्णाः। अङ्गारोत्थिता ज्वाला इन्द्रधनुर्नीयवर्णस्य नीलवर्णस्य वा एव भवति। असन्दिग्धा एवमग्ने: विभूति:। अत्र ( १०।१।२) 'चित्र' इति पदस्य भाष्ये सायणाचार्यो मुण्डकोक्ता: (मु०२।४) काली कराली इत्यादय: सप्त जिह्वा: पठति । परमहीन्त भवितुमेतानि नामानि अग्निकर्मव्यञ्जकानि सामान्यविशेषणानि एव तस्य, न च वर्णबोधकानि। सप्त जिह्वासु सुलोहिता लोहितस्य, सुधूम्रवर्णा:शितिवर्णस्य, विश्वरुची हिरण्य-वर्णस्य, काली च कृष्णधूमावृतत्वात् कृष्णवर्णस्य द्योतिका भवितुमर्हति, अन्यास्तु भवन्ति अग्निज्वालाद्योतिका: ।

६- उल्कापिण्डानाम्

अत्र ( ४।४।२) सवेगपतमानाम् उल्कापिण्डानां वर्णनं विद्यते रक्षोहाग्ने: प्रकरणे । सिद्ध्यत्यनेन उल्कानाम् अग्निमयता न च जीवात्मता । उल्कासु जीवात्मानां धारणा सर्वथा वैदिकोत्तरी धारणा एव अस्ति ।

७- तेजोलीनता

सन्त्यमृता: अग्निरश्मय:, अन्तरिक्षं समधिगम्य ता: रविरश्मिषु नीलीयन्ते ( ७।२।१) अमरतान्च तत्र गच्छन्ति। घृतादिभि: मधुमया: कृत्वा

तल्यलोकमार्गाः तानास्वादयति अग्निः रोचति च ज्योतिर्मयमार्गम् (१०।५३।६, अथर्व०५।१२।२)। यथा पार्थिवाग्नेः गावः सूर्यं प्राप्य तस्य तापं वर्धयन्ति एवमेव सूर्यमण्डलस्थैः अन्यैः ग्रहैः समागताः तापरश्मयः उल्काश्च रविताषम् एधन्ते। अत एव सूर्यो वै एधते सूर्यमण्डलेन ( ४।३६।५) विज्ञानप्रसिद्धम् उल्कानामनन्ताकाशेषु विहरणम् ।

८- रोगहेतुः अग्निः

अग्नेः ज्वरोत्पत्तिः, शत्रुषु च मोहोत्पत्तिरपि तर्कसङ्गता एव अस्ति (१।२५।२, ३।२।१-२ )। यतो हि तापवृद्धिपरको ज्वरः तत्र अग्निसम्बद्धः, ततोऽग्निरस्य कारणमिति । अग्नितापाधिक्येन जायते भ्रमः उन्मादश्च ततो मोह इति सामान्यलक्षणः। कश्चिदत्र आत्मानं तस्य मोहकतापाद्रक्षितुम्, तच्च शत्रुषु प्रेषितुमग्निमर्चति । जठराग्निना पचितमन्नं रसरूपं भवति । अनन्तरं तत्तापसञ्चालितं रसं नेत्रप्राणेभ्यः प्रापयतीति ( ३।३१।६)। यद्वा आग्नेयास्त्रैः नानारोगोत्पत्तिः ज्ञेया यथाधुनिकैः विस्फोटैः क्रियते ।

९- अग्निं परितो जलम्

यदाग्निः प्रज्वलति तदा भवति एनं परितो वायुः( ५।४३।१०, १०।१५५।४)। अत्र एतदाख्यं भवति यत् यत्र वर्धते अग्नितापो तत्र जायते तत्र न्यूनभारता। अन्यत्र यत्र भवति न्यूनतापस्तत्र अतिभारप्रदेशः। एषो भारवैषम्य एव वायोः गतिकारणं भवति, आकर्षति च वायुः न्यूनभारदेशं अतिभारप्रदेशात् । एवं भवति अग्निं परितः वायुः। आगच्छति यो वायुः विद्यते तस्मिन् वाष्पांशोऽपि अतः अग्निं सर्वतः कथयन्ति जलम् ( ८।३६।१०)। एवंविधेन सूक्ष्मनिरीक्षणेन आर्तवपवनज्ञानस्य अनिवार्यता सूच्यते ।

१०- यज्ञवृष्टिविज्ञानम्

आर्द्रता धूमस्य जननी, अनिवार्या च तत्र वाष्पस्थितिः अतो धूमो मेघकारणम् ( अथर्व० ६।४६।३)। अत एव वृष्ट्यभावे यज्ञपरम्पराणां ~~विधाना~~ विधानो निर्दिश्यते स्म वैदिकैः ।

११- वृष्टिप्रक्रियाज्ञानम्

वैदिकयुगे भारतवर्षे शीतग्रीष्मर्त्वोः वृष्टिः कथं भवतीत्यस्यापि विषयस्य प्रतिपत्तिः आसीत् ।अत्रत्न भूगोलविज्ञानानुकूलमेव वैदिकऋषयो विचारयन्ति यत् सूर्यात्मकाग्नेः रश्मयः समुद्रेभ्यो बाष्पमधिकृत्य वायुयोगेन अन्तरिक्षं गच्छन्ति ( अथर्व० ४।१५।४,१५-१६; ६।६।१)। तत्र वरुणार्यमामरुतः मेघान् एकत्री कुर्वन्ति (१।७६।३)। ततो वृष्टिः जायते ।अथवा वर्षेभ्यो वस्तुभ्यः सूर्यो रसं कर्षति अनन्तरञ्च जलजननीभ्यो वर्षति ( १।६५।७) । शोषणम् - वृष्टिः — शोषणञ्च सूर्याग्निरश्मीणां शाश्वत क्रमः( अथर्व० ६।६।५) । अन्यत्र ( अथर्व० ४।२२।१) अन्तरिक्षं प्राप्य सूर्यरश्मयः पार्थिवरसेन सार्धं तन्मण्डलमङ्कुर्वन्ति पश्चाच्च ततः वृष्टिं कर्तुमागच्छन्ति। अत्र अल्पुच्चस्थानीयानां मेघानां विषये ये भवन्त्यशक्ताः अल्पुच्चित्वात् वर्षणे ते एव अनुकूलवातावरणे सति निम्नभूमिं सम्प्राप्य समर्थाः भवन्ति इत्युक्तं भवत्यनेन ।

पृथ्वीतः सूर्यशोषितं रसं पर्जन्यो निश्चित कालपर्यन्तम् अन्तरिक्षे धारयतीत्यनेन ( अथर्व० १।२६।३) भवति स्पष्टं यत् वृष्ट्यनुरूपतापमाने सत्येव जलं वर्षति नान्यथा ।

१२- शिशिरर्त्वौ वृष्टिः

शीतकालिकवृष्टिमुपलक्ष्य वैदिकर्षिः कथयति यत् रविरश्मयो रसमादाय दिवमुपयन्ति पुनश्चयदा दक्षिणायनो भवति भानुस्तदा ततः( जलस्थानात्) प्रत्यावर्तन्ते वृष्ट्यर्थम्( अथर्व० १३।३।६)। ग्रीष्मार्तववायुः पर्वतः प्रतीचीं गच्छन् सुदरदेशं याति । स एव शीततो पश्चिमोत्तरी वायुः अथवा प्रत्यावर्तितार्तववायुरिति कथ्यते । एतो रश्मीणां तेन सह शाश्वत सम्बन्धः( तस्य अग्निमयत्वादपि) कारणत्वादस्ति । अतस्तेषु गौरवप्रतिष्ठा क्रियते ।

१३- ग्रीष्मर्तुवृष्टिविधिः

ग्रीष्मकालिकवृष्टिविधिसम्मतं भौगोलिकज्ञानं भृगुः एवं पश्यति ----
समुद्रोत्थिता जलदरूपावाष्पराशिः दक्षिणतः देवयानमार्गः गच्छन् उदीचीं ( हिमालयम्

प्राप्नोति प्रच्छादयति च नभः। हिमाच्छादितत्वात् शुभ्रवर्णस्य (शुभ्रस्य) हिमाचलस्य पृष्ठोपरि चरन्त्यः हरितः याः हरिणतोयाः अतः 'पुराणीः' कथिताः ताः एव शेषां नवागतानां नीरदानां नवीनैरुपकृताः 'नवाः' (नवीनाः) भूत्वा चरन्ति (अथर्व० १२।२।४१)। अत्र अरबसागरोत्थितौ दक्षिणीपश्चिमी ग्रीष्मार्त-ववायुः यो विन्ध्याचलमतिक्रम्य श्येनमार्गेण ---

हिमाचलं प्राप्नोतीति प्रकीर्तितो भवेत् । पूर्वतः प्रतीचीं वृष्टिमात्रा क्रमशः हीयते इति 'पूर्वमिन्दु प्रविश' (१।६५।३) इत्यादिभिः वचनैः ज्ञेयो भवति तच्च सत्यमेव ।

१४- समुद्रधाराः

अथर्ववेदे (१३।३।२) सागरीयधारणामपि उल्लेखोऽस्ति। नात्र पठितं कारणम्, तथापि वायुगतिकारणमिव न्यूनाधिकभारमेव सागरेषु धाराणां कारणं मन्तव्यम्, मन्त्रेषु हेतूल्लेखनप्रवृत्तेः क्षीणदर्शनत्वात् ।

१५- अष्टधाग्निप्रवाहः

अष्टधा अग्नेः प्रवाहो मतः (१३।३।१६) । प्रवाहस्य माध्यम एव उत्कप्रवाहभेदः। अतोऽत्र वारिवायुधातुवृक्षकाष्ठाश्मज्योति नृशरीराणि पठनीयानि तत्र तत्र अग्निप्रवाहस्य सिद्धत्वात् ।

१६- गोशृङ्गे पृथिवी

भारतीयेषु पृथ्वीसम्बन्धिनी येयं धारणा प्रचलिता दृश्यते यत् सा गोशृङ्गे तिष्ठति, एकतो च यदा तच्छृङ्गं तदा कम्प्यते ।परमियं सर्वथा वैदिकेतरी धारणा एवास्ति । अथवा कालान्तरे सामान्यजनेषु गोशब्दस्य (स्त्रीलिङ्गे) धेनुपर्यायरूपे एव अवशिष्टत्वात् प्रसारितेयं कथा सम्भवतः । समूहे गोशृङ्गस्य स्वकल्पनत्वम्। वस्तुतः गोशब्दोऽत्र ज्योतिषां वाचकोऽस्ति । शृङ्गाशिरो ज्योतिषाम् आकर्षण-शक्तेः सीमान्तो भवति यस्मिन् प्रतिष्ठिता पृथिवी, शृङ्गस्याकर्षणशक्तिः । न श्रूयते विज्ञाने आकर्षणशक्तिः ग्रहविस्फोटकारणम् । अतो न शृङ्गेचलनं भूकम्पकारणं

भवितुमर्हति । परं यतः सह पृथिव्या सर्वेषु ज्योतिष्षु एक एवाग्निः वर्तते (३।२४।४) । तेषामग्नेः किरणानां माध्यमेन सन्ति परस्परसम्बद्धाः। अग्निः आकर्षण शक्तेः कारणम्, यतोऽसौ गुरुत्वोऽपि अग्निपरको भवति गुरुत्वः पृथिव्याः आधारः, आधारे च गौरवप्रतिष्ठा करणीया । भूकम्पकारणन्तु ज्वालाबलविस्फोटः तस्माग्निः सरणीयपदार्थस्य परिस्थितिवशात् भूगर्भे स्वावस्थितिः वा भवति । अत्रास्ति भूकम्पहेतोः भूगर्भाग्नेः आधारपृथ्वी, तस्याश्च गौरुत्वः। अतः आधाराधारे अतिगौरवत्वात् स्वमुक्तं भवति यद्गौरुत्वजनं भूकम्पकारणमिति ।

## १७- पृथिवीभ्रमणसिद्धान्तः

पृथ्वी स्थिरेत्यपि वैदिकोत्तरी एव भावना भवति यतो हि उक्तेयम्, महत् सधस्थम्, महान् वेग च एवमेव पूर्वं परितः वेगेन परिक्रमम् महोच्चपदं प्राप्नोतीति ( १।१६४।८-६, अथर्व १२।१।१८)। सर्वेषां ग्रहाणामिव ज्योतिष्मती पृथ्वी इत्यपि अस्ति वेदविहितम् । अथर्व०१२।१।१८) आधुनिकं सत्यम् । अत्र ( अथर्व० १२।१।१८) भ्वादिगणस्य परस्मैपदीयो कर्मकधातुः एज् दीप्तनार्थे प्रयुक्त इति अत्रैव वेपथुः शब्देन ज्वालाबलविस्फोटजन्योऽथवा निःसरणशीलस्य भूगर्भीयोष्णपदार्थस्य बहिरागमने अशक्तत्वाद्भूगर्भे एव तस्य प्रचलनजन्यो भूमौ कम्पः प्रोक्तः। प्रसिद्धा भूमौ अग्निस्थितिः ( अथर्व०१२।१।१६ )। ज्वालबलप्रकम्पितायाः पृथिव्याः अत्र उल्लेखो दृश्यते ( २।१२।२)।

दृश्यते एवमग्निशक्तिसम्बन्धिनी महती विज्ञान ज्ञानपरम्परा अस्माकं वेदेषु ।

## १- जीवनकोऽग्निः

अस्वीकरोति कुनमहोदयोऽत्रीकमेनं वैदिकं विश्वासं यदग्निः मानवजात्याः पितेति ( १।६६।२)। असौ तु एनं विचारम् अग्निः भूमिजलानि पुनातीत्यस्याः धारणायाः मात्र विस्तारणं मन्येते ( हेगा० ६६ परवर्ती मन्त्राव्यस्य)। परं श्रद्धा नादधाति यदं कुनमहाशये यतो हि अग्निरेव चराचरेषु वीर्यमादधाति( ३।२। १०, १०।८८-१८३।३) अतः स एव चराचरपितेत्युक्तं भवति । असम्भवाः अग्नितेजो

विना तवाँ: क्रिया: ।क्रियामूलो गर्भाधान: अत: स एव जनको भवति मानवजातेरिति । अथवा आधुनिकवैज्ञानिकानां मतानुसारमपि--- सूर्योत्पन्ना पृथ्वी आसीदादौ अग्निमयी , शनै: शनै: शीतलतां भजन्ती एतद्रूपं गता क्रमशश्च जातानि भूतगणानि । अनेन अग्नेरनन्तरमेव अन्येषामस्तित्वं सिद्ध्यति अतोऽपि सत्यं तस्य जनकत्वम् । अथवा शाश्वती कार्येषु कारणव्याप्ति: अनेनैव भावेन दृश्यते नरेषु अग्निव्याप्ति:। अतोऽपि सत्यमेतद् यदग्निरेव मानवजाते: जनक:।

## अग्निपर्याया:

प्रयुक्ता: नैका: पर्याया: अग्नये वेदेषु । क्वचित्तु एते पर्याया: अग्नि-विशेषणस्य द्योतका: प्रतिभान्ति परमन्यत्र गुणवर्णनसाम्यत्वात् सर्वे एते लोकव्यापकस्य यज्ञात्मकस्य अग्ने: एव व्यञ्जका: भवन्ति। वेदप्रयुक्ता: प्रमुखा: पर्यायवाचका: शब्दा: एते सन्ति ---

विभावसु: ( ८।४४।६), पावक: ( १०।१२।८ ), जातवेद: ( १।९४।१, ४।५।११ ), विश्ववेद: ( ४।८।१),तनूनपात् ३।४-२९।११) , वाजंभर: ( ४।११।४), नेष्टाग्नि: ( १०।१८८।१-३), यजु: २६।२१), आशुशुक्षणि:( २।१।१), नराशंस: (२।३।२, ३।२९।११), अपान्नपात् (२।३५।१३),मातरिश्वाग्नि: ( १।९६।४, ३।२९।२), कृशानु: ४।२७।३), वैश्वानर: ( १।५९।१), धूमकेतु: (१।४४।३), विश्पति: ( १।१२-३१।११), चित्रभानु:( २।१०।२), विश्वायु: ( १।१२८।८), सहस्राद:( १।७९।१२), सहस्रम्भराख्य: ( २।९।१)। तत्र जातवेदवैश्वानरौ (४।५।२, ३।५७।६, अथर्व० ८।३।११), पावकविश्ववेदसौ ( ४।५।६, अथर्व०२०।१०९।१), तनूनपादाशुशुक्षण्याख्य: पर्याया: प्रायोऽग्निशब्देन सह दृश्यन्ते तत्र ते विशेषण-रूपेण सन्ति, क्वचिच्च मात्र पर्यायरूपेषु ( १।५९।४-५;२।३५।१-३,७; ४।२७।३, १०।१८८।१-३)।

एतदतिरिक्तमग्निविशेषणस्य व्यञ्जकान्यपि सन्ति कानिचिदस्य नामानि तथा हि----

मितद्रु: (७।७।१), हव्यवाहन:( अथर्व०१८।४।७१,यजु: २।२९), हविष्पति: ( १।१२।८), क्रव्यभुक:( अथर्व०८।३।१२,१२।२।८), मधुजिह्व: (१।४४।६), विकसुक:, निर्ऋथ:, निस्वशदय:( अथर्व० १२।२।१४)।




अत्र आमादग्निः चुल्ल्यग्न्यर्थे प्रयुक्तोऽवगन्तव्यः न च वाजसनेयि संहितानुसारं अपक्वमांसभक्षकः ( वा०सं० १।१७)। अपक्वान्नानामामत्वमपि परिसमाप्नोतीति आमाद् तच्च सम्भवति चुल्ल्यग्निना ।

## व्युत्पत्तिः

संस्कृत शब्दार्थकौस्तुभकारः श्री तारिणीशो 'झा' अग्निशब्दम्-- अङ्ग + नि, ङलोपः-- एव निष्पन्नं मन्यते, सेन्ट पीटर्सबर्गस्थ स्वकीये कोशे एनमेव अङ्ग धातोः व्युत्पन्नमिति विचारयति । अत्र श्रीमान् पीटर्सबर्गः अस्य गत्वं भाषाविज्ञानपरकमेव परिवर्तनमिति भावयति, नास्ति यस्मै कुत्रापि पदं संस्कृतव्याकरणे तस्मात् 'झा' महोदय एव मान्यो भवति ।

## उपसंहार:

अथ सिद्ध्यत्यनेनाग्ने: विश्वव्यापकत्वम्, चराचर जनकत्वम्, अस्माकञ्च दैनिकजीवनेषु अपरिहार्यत्वम्। अत: सत्यमेव प्रथमसूक्तका स्तुतोऽयंदेवो गुणगणदृष्ट्या देवेषु प्रथमपूज्योऽस्ति । अपि च , मात्र अस्मिन् एव देवे हविर्वाहकत्वात् देवजीवनमित्यपि वक्तुं शक्यते अस्मै देवाय ।

---

## बृहस्पति:

### सूक्तसंख्या

पौरोहित्यकर्मणि दक्षस्य बृहस्पते: स्वर्गीयदेवेषु महत्त्वपूर्णं पदमस्ति । ऋग्वेदेऽस्यै एकादशसूक्तै: स्तुतो स्वतन्त्ररूपेण द्वाभ्याञ्च इन्द्रेण सह ।

### रथाश्वमानवत्वादिवर्णनम्

रूपेणायं सप्तास्य, सप्तगु:, सप्तरश्मि:, नवग्वा:( नवरश्मि:), दशग्वा:( दशरश्मि:), विशुद्धो हिरण्यवर्णोऽस्ति ( ४।५०।४,५।४३।१२, ७।९७।७, एव्वी० पुराणी: अव्वै० ६६)। नीलपृष्ठोऽयं देव: तिग्मशृङ्ग, सुजिह्वश्च अस्ति (१।१६।१, ५।४३।१२, १०।१५५।२)। ऋतरथारूढो देवोऽङ्गिरा बृहस्पति: ऋतज्यधनुर्धारिणेन सह अयो निर्मितं स्वर्णनिर्मितं वा परशुमपि बिभर्ति यं त्वष्टा तीक्ष्णयति (२।२३[३]-२४, ७[८]।९७।७,१०।५३[६]-१०३।४)। अरुणाश्वा: अस्य रथं वहन्ति (७।९७।६)। अनेन वर्णनेन आदौ बृहस्पतिगृहस्य प्रभुता: प्रभावशीला: रश्मय: श्रूयन्ते। तदनन्तरं मूलदृश्यवर्णो श्रूयते । अस्य शस्त्रास्त्रै: केचिद्रश्मीणां हानिकरं मन्यामुच्यते यत् सूर्यप्रभावेण वृद्धिं गच्छति ।

ग्रहपिता

महज्ज्योतिषः ( जूपिटर ) आकाशे आदौ बृहस्पतिरेव जातो येन स्वकीये दीर्घे व्याप्तं तमो दूरी कृतम् ( ४।५०।४, २।२३ १७ ।तु०की० १०।६८।१२)। सौरग्रहेषु मध्यस्थानीयत्वादसौ लोकयोः सन्ततिरिति स्मृतः ( ७।९७।८)। ग्रहमध्यगतोऽयं सर्वेषां ग्रहाणां पालकोऽस्ति । अत एतेषां पितुः पदवीमलङ्करोति। अस्य भ्रंशादन्येषां नाशो ज्ञेय इति ( २।२४।३)।

देवभक्तिप्रकाशकः

असौ देवानां ( ग्रहाणां) पुरोहितः( पुरोहित इव जनहितसाधकः), उद्गाता ( ग्रहेतराणां कर्मफलवक्ता- निर्देशकः( चास्ति( तां० महा० ६।५।५, ऐत०ब्रा० ८।२६)। जनहृदयेषु अयं देवभक्तिं प्रकाशयति। रुष्टोऽयं विनाशकरो भवति अतो जनाः मनोयोगेन उपासन्ते । अनेन अनुगृहीताःयज्ञाः सफलाः भवन्ति नान्यथा ( १।१८।७)। अस्मै यजन्तो जनाः अन्यान् देवान् अपि तर्पयन्ति हविर्भिः अत उच्यते यदसौ देवेभ्यः सुगममार्गान् निर्मिमीते ( २।२३।६-७)। समस्ताः स्तुतयोऽनेनैव कृताः सन्ति। मर्त्य-पुरोहिताः अपि अनेन निवेदिताः स्तुतीः एव गृह्णन्ति ( १।१०९।२,१०।९८।२७)। अत एव परवर्तिनि कालेऽसौ वाचस्पतीति[1] संज्ञया श्रूयते ( मै०सं० २।६।६, तु०की० शत०ब्रा० १४।४।१।२३)। गायकगणेनसह सम्बद्धस्य अस्य छन्दांस्येव सामग्रीरूपाणि सन्ति( ४।५०,मै०सं० १।६।२)।

रूपवर्णनम्

(१।१८।१६, ५।४३।१२, १०।१८२।२) एतान् मंत्रान् समुद्धृत्य श्री मैकडानलो विचारयति यद् ' बृहस्पतिः नराशंसाग्निः ( तत्रैव पृ०१९४) । अयं पुरोहितः शवसो नपात् , आङ्गिरसो वास्ति । प्रकृतिदृष्ट्यात्रास्य ग्रहत्वमुच्यते ( १।४ ०।२, २।२३।१८)। यत्रासौ पुरोऽकल्पयदुत्वावारव्यापक आम्नायते तत्राप्यस्य ग्रहत्व एवाम्नायते ( १०।६७।१०)।रश्मिभिः लोकत्रयं स्पृशति अतोऽयमपि त्रिणवस्थ इति श्रूयते (४।५०।१)।

---

१ वारे, हिलेब्रान्ट : वै०मा० १।४१६ , मरुद्गण, वेद०१०।

तारास्य पत्नी भवति ( स्थान? व० शब्द०पृ०६४)। हरिश्मश्रुकमण्डलुहस्त:, परशुधरो रुक्मवस्त्रो हिरण्यो बृहस्पतिरिति श्री ऐय्यरः ( हि०दे० पृ० २२४)। यदा बृहस्पति रुच्छति तदा हरिरागच्छतीति श्री मा०कुमारप्पा ( दे०हि०पृ०६४)।

## कर्मविवेचना

अथ कर्माणि ।

अन्येषां ग्रहाणामिव सूर्येन्द्रजो बृहस्पतिः। अतोऽत्र पितुः गुणाः मान आरोप्यन्ते, तद् दृष्ट्या च ---

इन्द्र स्वात्मैं तमसावृतानि जलस्रोतांसि गोष्ठद्वाराणीव अपावृणोति:, तदा पर्वता:( मेघा:) तदधीना: भवन्ति( २।२३।१८, तुल्नी० ११५६।५)। ऋक्वता ( मरुद्भिः) सह गर्जनं कुर्वन् वलं विदारयति उन्मोचयति च गाः( ४।५०।५) । तेजोज्वलानि कामयमानो बृहस्पतिः ज्वालाभिः शत्रून् हन्ति ( ६(७३।३)। स्वशौर्येणासौ अश्मुखमधुपान् बभंज ( २।२४।३-४)। पापानि तमांसि च विबाध्य जनान् सन्मार्गे: नयति रक्षति चापद्भ्य:। ब्रह्मद्विषो मन्योश्च हिंसकोऽस्ति ( २।२३।३, ४,६,८) । तिग्मया हेत्यासौ स्वनिन्दकान् राक्षसान् तापयति.( २।२३।१४)। स्वजनानां चौरं हिंसकं वा तीक्ष्णायुधैः विध्यति ( २।३०।६) । रथेनागत्य बृहस्पतिः सेनया सह शत्रून् राक्षसांश्च विनाशयति ( १०।१०।३४)। दुर्गहा बृहस्पतिः पापान् दुर्मतिञ्च अपहन्ति ( १०।१८२।१)। शशिसूर्ययोः उदयास्तकर्म अनेन कृतमेवास्ति ( १०।६८।१०)। असौ पादपान् अपि विकासयति ( १०।६७।१५,१६)।

## स्वरूपविचार:

उत्तरवैदिकसाहित्ये बृहस्पतिः ताराभिःसह अपि सम्बद्धः कृतः ( तै०सं० ४।४।१०।१)। तत्रायं तिष्यनक्षत्रपुञ्जस्य देवोऽस्ति[1] । वैदिकोत्तरसाहित्ये च बृहस्पति-नामको ग्रहोऽस्ति। विल्सनादयो बृहस्पतिः अग्निप्रकार एव इति मन्यन्ते (मैक्स०:

---

१ वेबर: नक्षत्र २।३७१ ।

वै०अन्स, पू०प० पु० ३२।६४, विल्सन: ऋ०अ० १।३७, ऊँडग, ऋ०अ० १।२४६,२५४, ५७८)। परमनयो: भेदोऽत्र द्रष्टव्य: --- ( २।२५।३, ७।१०।४, १०।६८।६)।
इन्द्रात् पृथक् कृत: तस्य पुरोहितश्च बृहस्पतिरिति बेरगादय:( वाजपेय १५प्रांगकिन्स: इ० १३६, तु०की विल्सन: ऋ० अ० २।६, ब्राक्के :वा० ११)। औणविनतिरिन्द्र: इत्यन्ये ( हिलेब्रान्ट, वै०मा० १।४०४,४१८-६, तु०की ओल्डेनबर्ग: त्सी०गे० ४६।१७३, हार्डी, वै०पी० ४६-७ )।

## भृगुगण

### उत्पत्तिविचार:

ऋग्वेदे एकविंशतिवारं प्रयुक्तोऽयं शब्द एकवारमेव एकवचनान्तोऽस्ति । अतो वर्गविशेषस्य व्यञ्जक: प्रतिभाति। उत्तरवैदिकसाहित्ये मन्त्रद्रष्टा भृगु: जाति-विशेषस्य प्रतिनिधिरस्ति ( अथर्व० ५।१६।१, ऐ०ब्रा० २।२०।७)। अस्य उत्पत्ति: ब्राह्मणग्रन्थेषु एवं श्रूयते -------

तस्य ( प्रजापते:) यद् रेतस: प्रथमुददीप्यत तदसावा-दित्योऽभवद्, द्वितीयमासीत्तद्भृगुरभवत्तं वरुणो न्यगृह्णीत तस्मात् स भृगु: वारुणि: ( ऐ०ब्रा० ३।३४,तु०की० पञ्च०ब्रा० १८।६।१)। ताभ्य: श्रान्ताभ्यस्तप्ताभ्य: सन्तप्ताभ्यो ( अद्भ्य:) यद्रेत आसीत्तदभृज्यत यदभृज्यत तस्माद् भृगु: समभवत् तद् भृगोर्भृगुत्वम् ( गो०ब्रा० १।१।३)। शतपथे ब्राह्मणे अयं सुस्पष्टरूपेणैव वरुणपुत्र उक्त: (११।६।१।१)। गोपथे ब्राह्मणे वायुरापश्चन्द्रमा इत्येते भृगव: ' क्ता: ( २।२।८-६)। अग्निरिति बर्गेन: ( ल०रि०वे० १।५२-६, तु०की० हापकिन्स: ज०अ० ओ०सो० १६।२८०), विद्युदिति कुनबार्थौ ( कुन: हे०गो० ६-१४, त्सी०१०) मन्येते । परं सुदासेन सह भृगूणां वैरम्, मरुस्थल: पलायनम्, जलेषु अग्नीनां प्राप्तिस्, रथनिर्माणञ्च वीक्ष्य एतेषां विद्युच्छिल्पनैपुण्यं रणकौशलञ्च सहजेन अनुमेयं भवति ( ४।१६।२०, १४ ७।१८।६, ८।१०१।१३, १०।३६-४६।२)।

### कार्याणि

अथ कानिचित् कर्माणि । मातरिश्वा धनागाररूपं गुप्तमग्निं भृगुभ्य:

प्रज्वालयति ( १।६०।१, ३।५।१०)।मातरिश्वा देवाश्च मनवे अग्निमुत्पादयन्ति भृगवश्च स्वशक्त्या। भृगव: स्तुतिपूर्वकं काष्ठस्थमग्निं गृहीत्वा( विद्युतं मन्त्रेण संगृह्य इत्यर्थ: ) प्रकाशार्थं यज्ञप्रज्वालनाय च मानवावासेषु संस्थापयन्ति । आयुषे ( रोगोपशमनाय) च तमेव चिकित्सालयेषु स्थापयन्ति (२।४।२,१०।४६।२,६, तुल्की० २।४।४)।ते मित्रमिव विद्युदग्निं काष्ठेषु स्थापयन्ति ( ६।१५।२)। विद्युतो रक्षणाय तदानीं बहुधा काष्ठानामेव प्रयोग क्रियते स्म, अत एवं सूच्यते । अत्रानेन वचनेन शक्तिसंग्राहकयंत्राणामपि काष्ठमयत्वं उच्यते । मनुष्येषु वा तै: धनोत्पादिकाशक्तिरूपे संस्थापिता ( १।५८।६)। अयमग्निर्वै भृगूणामुपहार: ( ३।२।४)। मन्त्रोच्चारपूर्वकं तै: आदौ वा विद्युत दारुस्तम्भशिखरे प्रकाशिता ( ४।७।१, १०।१२२।५)। इमां विद्युतं ते यज्ञगृहेऽपि प्रकाशनाय योजयन्ति ( १।१४३।४)। तै: एको रथोऽपि निर्मितो यो भविष्यति सम्भवत: विद्युच्चालित:( ४।१६।२०, १०।३६।१४)। आपत्सु भृगुभि: इन्द्र आहूयते (८।३-६।१८)। सुदासेन सह भृगूणां वैरोऽभिधीयतेऽत्र (७।१८।६)। सूर्येण तुलिता: भृगवोऽन्यै: देवै: सह सोमपानाय आहूयन्ते ( ८।३।१६,५६)। अपि च एकदा भृगुभि: कश्चिन्मखाख्यो राजा: पराजित: ( ६।२०१।१३)।

अनेन कर्मवर्णनेन तेषां पौरोहित्यं न सिद्ध्यति, अपितु भृगुगण: पुरातनयाज्ञिकानां पूर्वजानाम्[१] द्योतकोऽस्ति यस्य प्रधानो भृगुरासीत् ।

## व्युत्पत्ति:

अथ व्युत्पत्ति:। भ्रस्ज + कु, सम्प्रसारणम्, कुत्वम् = भृगु: ।

## ऋभुगण:

**ऋभूणां नामानि -**

पार्थिवदेवेषु गण्योऽयं देवगणो दिव्य प्रकृतिसंयुक्तो न दृश्यते । एकादशसूक्तै: स्तुतेऽस्मिन् गणे- ऋभु:, विभ्वा, वाजश्चेति नामानि पठ्यन्ते ।

---

१ मैकडानल: तत्रैवपृ०२६७ ।

क्रमेण एते ज्येष्ठमध्यमकनिष्ठाः सन्ति। एतेषु बहुवचनान्तप्रयुक्तम् एकमपि नाम सम्पूर्णं गणमेव व्यनक्ति। तत्र ऋभुशब्द एव बहुधा बहुवचने प्रयुक्तः। क्वचिच्च त्रिभिनामान्यपि बहुवचनान्तानि एव सन्ति ( ४।३६।३, ६; ८।४८।१)।

## सम्बन्धाः

ऋभवः प्रायः सुधन्वनः पुत्रा इति श्रूयते ( १।१६१।२)। परं यत्र तत्र "इन्द्रसूनवः", "शवसो नपातः", "मनोः नपातः" इत्यपि श्रूयते ( ३।६०।३,४।३४[६]-३५[१]-३७।४)।इन्द्राग्निबृहस्पतयोऽश्विनौ चैषां भ्रातरः सखायो वा सन्ति ( १।१६१, १,३,६;३।६०।३)।

## उद्योगेन अमरत्वप्राप्तिः

यशोभिरुत्पादितस्थिताःते सोमपानाय प्राय इन्द्रमरुदादित्यादिभिः सामन्त्रिताः भवन्ति ( ३।६०।४,६; ४।३४[४,८,११]--- ३७[३] )। सुकण्ठधाराः , क्वचिनो मानुष्याः ऋभवः पृषत्यश्वाकृष्टेन रोचमानेन रथेन द्युलोकपर्यन्तं, वायुवर्त्मेन ( वायुसंचिताः-- पेटिकासु वायुम् संग्रह्येत्यर्थः) विचरन्ति। अश्वानां पृषुतात्र उड्डनशक्तिव्यञ्जिकास्ति। धारशब्देन ग्रैवेयकानि यन्त्राणि उच्यन्ते यानि अन्तरिक्षयात्रिणो बिभ्रन्ति। मानुष्यत्वेन तेषां कौशिकप्रसादा उच्यन्ते । अन्यद् स्पष्टमेव अन्तरिक्ष यात्राप्रसङ्गे । ( १।११०[४,६]---१६१।७, ४।३७।४, ७।४८।१)। एते: मर्त्याः स्वोद्योगैः अमरत्वं गताः ( १।११०।४, ३।६०।३)। कर्मपुण्येन तैः देवानां मैत्री जिता ( ४।३३[३-४]---३५।३)। ते द्युलोकात् रथेन अवातरन्तीत्यनेन वाक्येनापि शक्ति रथेन तेषामन्तरिक्षयात्रावगम्यते ( ४।३५।८) । कर्मप्रान्तवैः कनिष्ठो वाजो देवानाम्, ऋभुः इन्द्रस्य, विभ्वा च वरुणस्य शिल्पीपदे नियुक्तः ( ४।३३।९)।

## धनसुखपुत्रादीनां लाभाय स्तुतिः

अग्नीन्द्रादीनां देवानामिव ऋभवोऽपि गवाश्वसुखशक्तिसन्ततिसम्पत्तीनां प्राप्त्यर्थयजमानैः स्तूयन्ते ( १।२०[७]--१११।२[८], ४।३३-३४।१०)। रणे सहयोगार्थमपि क्वचिदेते आहूयन्ते ( १।१११।५)।

## कार्याणि

अथ कार्याणि ।

अश्ववलादीनं[८] त्रिचक्रं अन्तरिक्षगामिनं रथं संघटयन्ति ऋभवः ( [illegible][३], [१]१।१११-१६१।३ , ४।३३-३६।२,१ )। (४।३४।६) अत्राश्विनौ ( जलम्च वायुश्च ) ऋभुभिः निर्मितौ उक्तश्च रथो भवेंषु अन्तरिक्षे च समानरूपेण गमनसमर्थो भवतीति ।

निश्चर्मणो गामरिणीत धीतिभिर्या जरन्ता युवशा ताकृणोतन ।
सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवां अयातन ।।

- १।१६१।७।।

अत्र अतक्षत इत्यस्य पदस्य प्रयोगेण तक्षणकर्मणा अश्वनिर्मितःसूचिता भवति, नोत्पत्तिः। अतोऽश्वादश्वमित्यनेन यंत्राद् यंत्रोत्पत्तिः ज्ञेया । नाश्वोऽत्र वाहनः। यत्र ऋभव इन्द्राय युयुजौ ( युगपरीत्या सञ्चालनयोग्यौ) अश्वौ ( वृष्टि-कर्मसहायके यन्त्रविशेषौ) अकुर्वन्[१०] ( ४।३३-३४।५)। देवेभ्य एते अंसत्राणि कुर्वन्ति प्रकाशश्च द्यावापृथिव्यौ (रात्रौ ) पृथक्कुर्वन्ति( ४।३४।६) । अयश्शिप्राः अश्वा इत्यनेन यन्त्राणां मुख्यरूपेण अयोमयत्वं ज्ञायते ( ४।३७।४-५)। ऋभुषु वाजो जनान् रणे रक्षति ( ७।४८।२)। आग्नेयास्त्ररूपबलेन रक्षतीति भावः।

निश्चर्मं गाम् ऋभवः पारस्परिकयोगेन एवं कुर्वन्ति --- श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतम् । आ निम्रुचः शकृदेको ऽपाभरत्किं-स्वित्पुत्रेभ्यः पितरा उपावतुः ।। १।१६१।१०,४।३३।४ ।।

अत्र कृत्रिमा दुग्धनिर्माणशाला निश्चर्मणाम गवा उक्ता। ऋभुषु ज्येष्ठः ऋभुः रसरूपं कृत्रिमपयः सम्पादयति, मध्यमो विभ्वा अस्मिन् दुग्धे मांसरूपतां जनयति, वाजश्च पिण्डरूपेषु खण्डयति । इमाः शालाः नानारूपा आसन् -- आकारतया ऋभुनिशालाः ( ४।३३।८)।

वृद्धौ पितरौ, जीर्णदारुणकायांश्च पितॄन् एते पुनः यौवनानि[४] प्रापयन्ति ( १।२०- १६१।३,७;४।३३-३५।५)।[२] अत्र एतेषां कायकल्पे नैपुण्यमुच्यते ।

त्वष्टाकृतं चमसमिमं[1] चतुः तंस्याकाइ अकुर्वन् ( १, १६१)।[2] श्री रेले त्वष्टुः चमसो मस्तिष्क इति मन्यते । एनमेव वेदे स्वर्गनाम्ना ज्ञायते । विकसितोऽयं चतुर्षु भागेषु विभक्तो भवति । अत एवम् आम्नायते ( वी०जी० रेले: वै०गा पृ०३५-३६)।

एते गोत्राणां निर्मातारो: जलधाराणाञ्च निर्देशका इत्यपि सूक्ते ( ४।३३।७, १।१६१।११)। अत्र एतैः स्वतक्षैः यन्त्रैः वा गोत्राणां समीकरणकर्म कर्षणकर्म चोच्यते । अपि च कृत्रिमवृष्टिकर्म तथैव । एते लोकद्वयनिर्मातारोऽपि ( ४।३४।६)। कृतिभिः वृष्टिकर्मणा च भूलोकं निर्मान्ति अन्तरिक्षञ्च मेघैराच्छाद्य तस्य नवां व्यक्तिं कुर्वन्ति अतस्तस्यापि निर्मातार इति ऋभु: ।

## ऋभुस्वरूपविमर्शः

त्रिधाविभक्तस्य मस्तिष्कीयस्य स्नायुतन्त्रस्य व्यञ्जकाः ऋभव इति वी०जी० रेले महाशयः ( वै०गा० पृ०३५-३६)। सूर्यरश्मय इति एच्०डी० पुराणी (व०वै०पृ०३२)। ऋतुनियजनका इति केचित् पाश्चात्याः ( त्सिमर : आ० ले०,उल्थ्या०, लुडविग: ऋ०अ० ३।३३५, के०ऋ०५३।७४ , हिल्ब्रान्ट: वै०मा० १।५१५, हार्डी: वै०बी० १००)। कालत्रय वर्धका इति वेबर:( वै०लै०)। यज्ञाग्निग्रन्थीसम्बद्धाः अमरत्वप्राप्ताः पुरातनाः कुशलाः याज्ञिका इति बर्गेन: ( ल०रि०वे० २।४१२)। वायुरापश्चन्द्रमा इत्येते ऋभव इति गोपथे ब्राह्मणे ( २।२।८-६)।

ऋभवः त्वष्टो नपातः श्रूयन्ते । अतस्ते सर्वे शक्तिकर्मकुशला आसन् इति सुस्पष्टमेवास्ति यथा इदानीं महाराजः शिवा जी शक्तिपुत्र इत्युच्यते । त्रयोऽपि ऋभवो भिन्नशक्तिषु ( त्रिषु) निपुणाः आसन् इति कृत्रिमदुग्धनिर्माणशालाप्रसंगेन ज्ञायत एव। यद्वा एक एव वाजो जनाइ रणे स्तातीत्यनेन वचनेन । एतेषु ऋभु महच्छक्तिसम्बद्ध आसीद् येनासौ ज्येष्ठ इत्याम्नायते। तथा च अस्य नाम्ना-पि ज्ञायते— धरि अदितौ भव इति ऋभुः। अदितिर्हि परमाणुशक्तिमाता । ऋभुश्च परमाणुशक्ति-विशारदः। अतोऽयमदितौ भव इति ।

---

१ चन्द्रमा, म०क० तत्रैव पृ० २५४ ।

२ निरुक्ते ११।१६- आदित्यरश्मयोऽप्यृभव उच्यन्ते ।

एवमेव वि वियति प्र भवतीति विभु-- विभ्वा । तत्र विशारदो विभ्वा तस्याः पुत्रः। अत्र भूमौ कलोत्पादिता विभुरपि पठितव्या अस्य कर्मसु तज्जातीयत्वात् ।

वाजोऽन्नं बलं वा । तत्र बलोऽभवोऽग्निः । यतो हि आयासासाधिते इन्धनैः तैलकाष्ठकृष्णसर्वैः सः सम्भाव्यते । तच्छक्तिनिपुणो जनो 'वाज' इत्यनेन नाम्ना ज्ञायते ।

एकस्मिन् काले ऋभवः देवेषु उच्चपदारूढाः आसन् इति श्री सी०पी० रामस्वामी अय्यरः ( वां० भा० २।८२)।

अथ व्युत्पत्तिः --

ऋ + भू + डु = ऋभुः । वज + घञ = वाजः ।

## सोमः

सूक्तसंख्या ---

वेदेषु सोमः ऋग्वेदेषु बहुशः स्तुतेषु देवेषु एकोऽस्ति । वैदिकसंस्कारेषु सोमयज्ञोऽपि महत्त्वपूर्णं पदम् अलङ्करोति। अतोऽयं देवः ऋग्वेदे षड्सूक्तोत्तरेण नवमेन मण्डलेन स्तुतो भवति। एतदतिरिक्तम् अग्नीन्द्रादिभिः साकमपि नैकसूक्तेषु असौ स्तूयते । ऋषिमानसेषु अस्य भौतिकं रूपं सदैव वर्तते । अतोऽस्य देवस्य मानवाङ्गानि कृत्यानि च गौणरूपेण एव स्तूयन्ते । अन्येषां देवानामिव असावपि यज्ञेषु हविषा पूजितो भवति कुशासनेषु स्थित्वा यज्ञभागञ्च भुनक्ति (९।९१।२०, वर्गेन: ऋ०रि०वे०१।१८२ )।

## सोमव्यञ्जकानि पदानि

वेदेषु सोमरसव्यञ्जकानि नानापदानि दृश्यन्ते । तथाहि--- मधुः ( ४।२७।५,८।६९।६), मदः( शत०ब्रा०१२।७।३।८, हिलेब्रान्ट: वै०मा० १।२६४अ, पितु ( ऋ० १।१८७ सू०) अन्धः( हिलेब्रान्ट: वै०मा० १८७), अमृत: ( ६।३७।३, वा०सं० ६।३४, शत०ब्रा० ६।५।१।८), पीयूष: ( ३।४८।२), दुग्ध:( ९।१०७।१२),

मधुरस: ( ५।४३।४), हरि: ( नि० नै० ४।३।१६), इन्दु: ( ६।१०६-११२-११३ पु० )
अंशु: ( ६।७२।६-, ६।६५।४)।

## अस्य गुणा:

अथ सोमगुणा:। मदकरो वै सोम:। परिणामे यो बलकरो भवति
१,८ ४
(६।८-६०-६६।१६)। अग्नीन्द्राद्यो देवा: एनमेव पीत्वा मदन्ति घ्नन्ति च शत्रून् । यदि ब्राह्मणग्रन्थानाम् अध:कृतानि वचनानि वयं श्रृणुम: तर्हि यत्किञ्चिद् हितकरं सुखकरञ्च जगति विद्यते तत्सर्वं सोमपदेन उक्तं भवति । तथाहि----

श्रीर्वै: सोम: ( श०ब्रा० ४।१।३।६)।सोमो राज्यम् ( ११।४।३।३)। ज्योति: सोम: ( ५।१।२।१०, ५।१।५।२८)। राजा वै सोम:( २४।१।३।१२)। सोमो रात्रि: ( ३।४।४ ।१५)। पशुर्वै--- सोम: ( ५।१।३।७)। आप: सोम: सुत: ~~[struck-out text]~~ ( ७।१।१।२२)। वर्च: सोम: ( ५।२।५। १०-११), रेतो वै, सोम: ( १।६।२।६ ,२।५।१।६)। गिरिषु सोम: ( ३।३।४।७ )। अन्नं सोम: ( ३।३।४।२८, कौ०ब्रा० ६।६, तै० महा० ६।६।१)। सोमो दधि: (कौ०ब्रा० ८।६)। यशो वै सोम: ( तै०ब्रा०२।२।८।८)। पुमान् वै सोम: ( तै०ब्रा०१।३। ३।४)। पितृलोक: सोम:( कौ०ब्रा० २।४।२।१२)।

## सोमस्य त्रिविधिता

यत्र सोमो मधुमदिति श्रूयते तत्र मधुघृतादीनामनेन सह सम्मिश्रणम् उच्यते (६(६७।१४) । त्रिविधं भवति चैतत् मिश्रणम् -- गवाशिर, दध्याशिर, यवाशिर
६ ३ ५-६ ५,७ ३,५ १३
चेति ( ६।६-१०-११-२४-३२-~~६६।~~ -६६ )। इदं मिश्रणं लाक्षणिक रूपेण वस्त्रं, वासोऽत्को वेत्युच्यते यद्वा निर्णिग् इति ( ६।६४ ।५, द्वितीयान्त: वै०मा० १।२१०)।

## सोमवर्णा:

असौ सोमो वर्णेन बभ्रु:, अरुणो हरितो वा भवति ( ७,६८।१,६।६२।१, तै०सं० ६।१।६।७, शत० ब्रा० ३।३।१।१४ )।त्रित आप्त्येन निष्ठ्यूत: सोमो हरिद्वर्णोऽस्ति ( ६(३२-३८।२)। अयमेव वर्णश्च इन्द्रादीनां प्रसंगेषु श्रूयते । रक्तबभ्रुवर्णो तु मध्वादीनां सम्मिश्रणेन जायेते स्म ।

## सोमविधिः

स्वग्रोमश्पृष्ठवारपवित्रादिभिः आख्यैः शुचेन ऊर्णवित्रेण सोमः परिष्क्रियते स्म। परिष्कृतःसोमः 'शुचिः', 'शुक्रः' इत्यादिभिः शब्दैरपि श्रूयते (१,५-३०+२,६,२३।२)। सामान्यजनैः दैनिकप्रयोगार्थं सोमो हस्तगृहीताश्मैः लताः[2] पीडयित्वा निष्कास्यते स्म, परं विशालोत्सवेषु शक्तिचालिताश्मयन्त्रैः (६।३२-३८।२)। सोमधाराः द्रोणेभ्यो महिषाणामिव धावन्ति। यद्वा तान्[1] अधिकीन्तुं सोमो विश्व स्वोत्पतति इत्येतैः वचनैरपि यन्त्रप्रयोगोऽवगम्यते[1] (६।३-३३-६२।६)।

## अवस्थादिभेदैः नामानि

सुश्रुतसंहितायां जरामृत्युनाशः सोमो ब्रह्मणा निर्मितो यस्य शक्तिरूपस्थितिभेदैः चतुर्विंशतिनामानि भवन्ति। तानि एतानि सन्ति ---

अंशुमान्, मुञ्जवान्, चन्द्रमा, रजतप्रभः, दूर्वासोमः, कनीयान्, श्वेताक्षः, कनकप्रभः, प्रतानवान्, तालवृन्तः, करवीरः, अंशवान्, स्वयंप्रभः, महासोमः, गरुडाहृतः, गायत्र्यः, त्रैष्टुभः, पाङ्क्तः, शाङ्करः, जागतः, अग्निष्टोमः, रैवतः, उडुपतिः, गायत्र्या त्रिपदा युक्तश्चेति (२६।३-८)।

## प्राप्तिस्थानानि

'गिरिष्ठा' 'पर्वतावृध', मौञ्जवत शब्दैः सोमानाम् उत्पत्तिः पर्वतेषु श्रूयते येषु पर्याप्तमात्रायां वृष्टिरपि भवति। एतद् दृष्ट्या सोमानां देशो हिमालयो इति ज्ञायते। श्री सातवलेकरः सिन्धुकुणामामौञ्जवत्क्षेत्रेषु शर्यणावदार्जीकीयादक्षेत्रेषु च सोमोत्पत्तिः कथयति।

## नायं भङ्गाख्यपेयः

केचित् कवयः 'सोमो भङ्ग[1] इत्याख्यस्य आधुनिकःपेय एवासीत् यद्वा तज्जातीय एवासीदिति मन्यन्ते (रा०सां० क०आ० २००)। अत्र श्री राहुलो विचारति

१ डावेल: ज०रा० ए०सो० १९२१, पृ० २३६।

यद्व तिब्बतदेशे मङ्गणाभिधान: पेय: ' सोमराजेति नाम्ना, ईरानदेशे च ' ओम ' इत्यनया संज्ञया अद्यापि ज्ञायेत । अतो मङ्गणाख्य अब आधुनिकपेय एव आर्याणां सोम आसीदिति । अपि चासौ चन्द्रकलया समं वर्धमाना क्षीयमाना च भविष्यति कापि लतेति ' न स्वीकरोति। सत्यं नास्ति रूपेण क्षीयमाना वर्धमाना वा कापि, परं गुणैरपि चन्द्रेण समं कापि न क्षीयते वर्धते वेत्यपि वक्तुं न शक्यते । गुण परिवर्तनं तु नित्यकर्म, अतिकोमलाङ्गणी च भवति सोमलता। अत: सा गुणैश्चन्द्रेण सार्कं वर्धते क्षीयते वेति नाश्चर्यविषय:। श्री वैद्यनाथायुर्वेदभवनेन आयोजितायाः वनौषध्यन्वेषणयात्राया: सदस्यै: ( १९।६६) अस्मिन् ईसवीयाब्दे अन्वेषिता सोमलता। यस्याश्चित्रं अग्रिमवर्षस्य पंचाङ्गणे ( १९७०)अस्ति । अतो मङ्गणाख्यपेयो न सोम इति ।

## कार्याणां ख्याति:

अथ कर्माणि। तेषु प्रथमंवृष्टिकर्म । अत्र वृष्टि कर्मणि विनियुक्त: सोमो
३
वै विद्युत्परिशोधित: सोमलतारस: , उपयुज्यो च स: कृत्रिमवृष्टिप्रसङ्गणे (९, ३१-
३ १ ३ १ ३ ३
४१-४९-७४-८०-८४-९६-१०८।९-१०)। रविरश्मिशोधितोऽयमित्यपि श्रूयतेऽत्र
३ ४ ३
(९।१।९)। मेघेषु प्रदीप्त: सोमो वारिधारा: प्रवाहयति ( ९।३१~~।२~~, ९५-१०२)। अपां पतिरूपेऽसौ वृष्टिं शास्ति ( ९।७४।२)। वारिधारेश: सोम आकाशेऽ वृष्टिं
५ १७
जनयति ( ९।१५-९७-१०८।९-१०)। गर्जनशील: सोमो वृषभेण उपमीयते । मेघा
६ ५ ४
गावो भवन्ति यास्वयं तद्रूपेण विचरति दधाति च रेतांसि तासु ( ९।१६-१९-६९-
९ ४
७१-७२-८६।४३, १०।३६।८, तुल्की० ९।१९।५)। आदौ तत्र सोम: परिघट्टनेन विद्युतं जनयति पश्चाद्वृष्टिमिति । दिवं गतो विद्युद्भिश्च तिग्मश्रृंग: सोमो रश्मिवान्,
४ ७ ४
सूर्य इव यद्वा तद्रश्मिवेष्टित इति श्रूयते ( ९।१५-७०-७६-८६।३२)। अन्तरिक्षे तद्रश्मिभि: भ्रियते मेघत्वं गत: सोम इत्यर्थ:। यस्मिन् कस्मिन् रूपे सोम: सदैव वर्तत एव, अतोऽमर इत्याम्नायते ( १।४३।९, ८।४८।१२)।

१०
वृष्टिकर्ता सोमो वै अपां रसो योऽप्स्वेव विकसति ( ९।८५-~~८९~~ ।२)। अद्भि: वर्धितासु सोमलतासु विकसितो भूत्वासावपां रसत्त्वमाप्नोति । अतोऽयम्

अपां गर्भस्तनयो वा उच्यते ( ६।६७।४१, छा०ब्रा० ४।४।५।२१)। आपो वै अस्य मातर: सन्ति ( ६।६१।४)। यत्रासौ दिव उत्क्रोशनदिशणा आनीयते तत्र विद्युत्प्रभावै: ताम एव आपो भूत्वा वर्षतीत्युच्यते ( ५।४५।६, ६।४१।१०, १०। १४५।५)। इन्द्र एव श्येन इति श्री कुहन: ( हे०फा०पृ०१६५)।

औषधत्वेण प्रयुक्तोऽयं द्विविध: सोमो ( आप्लुतो विद्युज्ज्योतिश्च ) नानारुजो नाशयति। स्वयोगेन प्रत्यारोप्याऽङ्गानि सम्पादयति,प्रापयति च पुन: दर्शनशक्तिम्( ८।६८।२, १०।२५।११)। अतएव सर्वा ओषधी:, अप:, सर्वांश्च पशून् उत्पादितवान्। अस्य धामानि( तेजांसि) दिवि, पृथिव्यां, पर्वतेषु, ओषधीषु, अप्सु च वर्तन्ते । सोमो वनाऽङ्गान्यपि अभिव्याप्य वर्तते ( १।९१।४,२२; ८।४८।६)। अत एव बहुनेत्री सहस्रनेत्री चेति श्रूयते ( ६।२६[५]-६०।१ )। अयं देव: त्रिषधस्थ: ( लोकत्रयव्याप्त:( श्रूयन्ते ( ८।८३।५)। अत्र सोमयज्ञे व्यवहृतानां पात्रत्रयाणां ( तैत्सं० ३।२।१।२, का० श्रौ० ९।५[१७]--७।४, तुकी०श्र०८।२।८) । व्यञ्जकोऽयं शब्द इति मैक डानल: ( तत्रैव पृ०२०३) । सोमेनिश्च इन्द्रपीतत्रिकलशस्यानां व्यञ्जको मन्यते ( ऊ०रि० वै० १,१७६)। त्रिपृष्ठोऽयमित्यनेन वचनेन ( ७।३७।१) श्री सायण: पाश्चात्याश्च अस्य त्रिविधं मिश्रणं भावयन्ति( हिलेब्रान्ट: वै०मा० १।३६२-३ )।

अयं सोमो विद्युता, ऊर्णावस्त्रै: , रविरश्मिभिश्च विशोध्यो भवति ( रश्मिभि: ६।१२[४]-२७[५]--३७।३)। स्वर्विद्युत्‌स्रष्टा इन्द्रस्य सत्यास्ति यतो हि सोमं विना कोऽपि देहं न प्राप्नोति ( ६, ३८[५]--८५ ।३)। सोमो वै विद्युद्: अत इन्द्रवज्रोऽयमिति श्रूयते ( ६ ।७२[७]-१११।३) । सोम इन्द्र इव मेघदुर्गाणि नाशयति (६ ।८८।४) । इन्द्रसारथी सोमो दिव्येन्द्ररथेन याति यस्मिन् विद्रूपं कलशोऽपि यन्त्रमपि वर्तते । विद्युद्रूपस्य सास्य अश्विन्यौ भवन्ति -- सूर्यरश्म्यपेक्षा न्यूनप्रकाशकत्वाद् अश्विनीति उच्यते ( ६।८६।३७)। अस्य( दिव्यसोमस्य) धनु: द्रुतगामी बाणश्च सहस्रशृङ्गोऽस्ति --- विद्युदित्यर्थ: ( ६।८३[५]--८६[४०]--९०।३)। रामायणे शिशिरो वै अस्यास्त्रं भवति( ब्रह्मास्त्र( रेप्पूर: हि०पा० पृ०२५०)।

## स्वरूपविचारः

यद्यपि वैदिकोत्तरसाहित्ये चन्द्रमा सोमनाम्ना अभिधीयते तथापि सर्वथा न लुप्तः[1] सोमरसः यथा विचारयन्ति पाश्चात्याः ( मैक० : तत्रैव पृ०२१३, ह्यूगन: सि०वे०४१५)। तत्र हिलेब्रान्टः सोमचन्द्रयो ऐक्यं मन्यमानः, ऋग्वेदस्य नवमेन मण्डलेन ' चन्द्रः स्तुत इत्येव कथयति ( वै०मा० पृ०३०६)। शाकलकदृष्ट्या चन्द्रमति-सूर्यमिति मन्यमानोऽयं वैदिकदेवेषु इन्द्रानन्तरं द्वितीयं पदं प्रापयति एनं देवम् ( तत्रैव पृ०३१५, गुबर ०: मि०आ० २।३५१, पिशल वे०स्टू० १।८०)। केचित् पाश्चात्याः एनं देवं ' सोमलतारसस्य एव मूर्तीकरणमिति ' मन्यन्ते ( ह्विटने: प्रो०आ०१८६४ पृ०११६)।

गुणपदहेतुस्थानवाक्यानां दृष्ट्या अवेस्तायाः ' हओमः ' सोमेन सम एवास्ति ( मैक०, तत्रैव पृ०२१५, ओस्टेटर: ओ०व्या० १४०, स्पीगेल: ब०अ० २।७२)। परं कालवर्णमिश्रणदृष्ट्या न्यूनत्वं सोमेन ( यस्न : १०।२ हिरण्यस्य, १०।१३ पाण्डुवर्णो दुग्धमिश्रितश्च )।

' मेथु ' इति ग्रीकशब्दो ' मेडु ' इति च आंग्लसैक्सनशब्दो वैदिकमधुशब्दस्य सजातीयोऽस्ति। एतेषां रसानां वाक्येषु साम्यं दृष्ट्वा केचित् पाश्चात्याः ' वृष्टिः आपो वेति मन्यन्ते सोमम् । ' मधुलश्चन्द्र ' इति विनिश्चये यदि पुराख्यान एव हेतुः तर्हि एतयोः एकता सुस्पष्टा ( रॉशेर: ने०अ० ७६, ओल्डनवर्ग: धर्म-वेद १७०, हेनरी, ब अ० ४७०, इ०ह० मेयर:अ०मा०१८)। विलियमो जोन्स , ' सैक्सनानां ' मौन्थ मोना ' इत्येतिवासिनां ' ल्यूनस: ' सोमेन सम ' इति मन्यते ( ए०मि० भाग २, कार्यभाग १३ )।

अथ व्युत्पत्तिः ।

सु + मन् = सोमः ।

---

१ पापो हि सोमविक्रयी । न वै सोमविक्रय्यनुविधेः । ऐ०ब्रा०३।१ ।।

## पृथिवी

### श्रुतिस्थितिः ---

इयं सामान्यतया दिवा सह एव श्रूयते । ऋगथर्ववेदयोः एकेन सूक्तेन वा स्तूयते ( ५।८४,अथर्व १२।१)। इयं दृश्यमानपृथिव्याः गुणान् एव धारयति नातिश्योक्ति- बन्धान् , येन वेदोक्तदेवगुणानां यथार्थता ज्ञायते ।

### अस्याः महत्त्वम् ----

चराचराणां जननी धारिणी चेयं " विश्वमाता " इत्यनेन विशेषणेन शोभते ( ३।२५।३, १०।१८।१०)। इयं सामा वर्षणशीलैः मेघैः भिद्यते परं वा तद्भेदेन बिभर्ति ( ५।८४।१) ।वृष्टिजलम् इयं स्वोरसि विस्तारयति। मेघाः अस्याः एव सन्ततयः सन्ति। इन्द्रो वृष्टिकर्मभिरेतां विस्तारयति। तथा च वयं पश्यामो यन्नदीभिरानीता मृत्तिका जलप्रवेशेण भूमिं प्रथयति जनयति वा ( २।१५।२)। पृथिवी दृढया भूम्या सह वनस्पतीः ओजसा ( स्वान्तस्थेन तेजसा) धारयति (५।८४।३)।

## भ्रमणशीलानन्ता पृथिवी

इयं भ्रमणशीलास्ति। अन्तरिक्षस्थेन दृष्टेयं " शतचा " दृश्यते । अन्येषां ग्रहाणामिव अस्माकं पृथिवी अपि भासते इत्यर्थः ( ७।१००।३)। सा विचरणशीलापि अस्ति( ५।८४।२, १०।६२।५)। पृथिवीपरिभ्रमणसिद्धान्तो वेदविहितोऽस्ति, न परवर्तिना अस्माकमार्यभट्टेन प्रतिपादितोऽन्यैः वैदेशिकैः विद्वद्भिः प्रतिपादितो वर्तुलत्वमुच्यते ( १०।६२।५)। नीवृत्स्वरण योऽन्येयं पर्येति उच्यते ( १०।६०।१४)। पुरुरूपाणि वपूंषि एनामाच्छादयन्ति। अस्यां निवसन्तीति भावः ( ३।५५। १४)।

## धेनुरूपा पृथिवी

पुराणेषु दुष्टदुःखितेयं धेनुरूपेण हरिलोकं गच्छति ब्रह्मादिभिः देवैः सह । तथा प्रसादितो हरिः भूमौ अवतरति नानारूपाणि गृहीत्वा, हन्ति च असुरान् धर्मसंस्थापनायेति। तथा च गीतायाम् ----

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।। (४।७-८)।।

अग्निना सह सम्बन्धः

अग्निपृथिव्योः सम्बन्धो जैमिनीये उपब्राह्मणे एवं श्रूयते ---
स यत्राग्निः तत्पृथिवी यत्र वा पृथिवी तदग्निः। ते द्वे योनी।।
४।१२।२ )।

देह चेतनात्मा

श्री एन्नी० पुराणी एतां शारीरिकी चेतने ति मन्यते पृथ्वी वा
(अर्वै०पृ०६४)।

द्यौः पती ---

शतपथे अस्याः द्यौः पती श्रूयतां तां चैतां एतः ---(१) --- वराह
उज्जघान सोऽस्याः पतिः प्रजापतिः ( १४।१।२।११)।
(२) अस्मा ह वा इयं ( पृथिवी) भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापतिः
( १४।१।३।२५)।

माता पृथिवी

आग्नेयी पृथिवीत्यनेन अस्याः अग्निपिण्डाद् सूर्याद्उत्पत्तिरिति उच्यते
( तै०ब्रा० १५।४।८)। अग्नेः पत्नी पृथिवी देवानामपि पत्नीति श्रूयते ( श०ब्रा०
१।२।१।१५, १७;गो०ब्रा० २।२।६)। अग्न्यादिषु चेतनशीलेषु सर्वेषु देवेषु
पृथिवी स्वतत्त्वेन विपक्ष इत्यर्थः। अग्निपृथिव्यौ अन्योऽन्ये व्याप्यव्यापकभावेन
वर्तेते (श०ब्रा० १।६।२।१३, ७।३।१।२२)। इयं वै पृथिवी अदितिः ( अखण्डनीया)
अस्ति या मातेव जनान् बिभर्ति( श०ब्रा० २।२।१।१६,३।३।१।४,५।३।१।४)।
धेनुरूपायाम् अस्यामेव हि इदं सर्वं क्षितम् ( श०ब्रा० ७।४।२।७,१२।६।२।११)।
अनेन वर्णनेन अस्माकमार्याणां भूविज्ञानो ज्ञायते ।

## आपो देवता:

### अपां भेदा:

वेदेषु चतुर्भि: सूक्तै: स्तुता: आपो देवता: अन्येषु मन्त्रेषु प्राय: अन्यै: देवै:सह श्रूयन्ते । एता: मातृरूपेषु, पत्नीरूपेषु, वरदादेवतारूपेषु वा तत्र दृश्यन्ते । आवासदृष्ट्या एता: द्विविधा: भवन्ति। एका पार्थिवदेवता: अन्या: दिव्या: ( १।२३।१७) अन्तरिक्षीया: वा। किन्तु नैघण्टुक: ( ५।३ ) पार्थिवदेवतासु एवाप: पठति ( तु०की० यास्क: निरुक्ते ९।२६) । ऋग्वेदे पार्थिवाप: त्रिविधा: श्रुता: --- खनित्रिमा: चरणशीला:, खननप्राप्ता:, स्वयंजाश्चेति (७।४९। २)।

### सामान्यवर्णनम् --

आपो देवता: अग्निमातर: सन्ति ( १०।९१।६,अथर्व० १।३३।१)। एता एव मातृतमा: आप: चराचरात्मकस्य जगतो जनयित्र्यो भवन्ति (६।५०।७, १०।१७।१०)। चराचराणां रेतस उत्पन्नत्वादेवं श्रूयते । आपोमया:जङ्गमाचरजीवा:। अतस्ता: लोकपत्न्य इति दृष्ट: । वयोत्पत्तिदृष्ट्या सर्वा: समा: सन्ति ( १ ०।३०।१०)। सानुषी: आपो( खनैनेन प्राप्ता:( ददति प्रभूतमन्नं स्वजनेभ्य: ( ६।५०।७) । एता: आपो देव्यो मधुश्चुत:, शुचय:, शोधयित्र्यो भवन्ति ( ७।४९।३)। अप्सु नानारोगापहरणशक्ति: अपि विद्यते। अत: आम्नायते भिषज आप ( ६।५०।७)। सूर्यपवित्रा: ( रविरश्मिपवित्रा: -- वाष्पत्वंगता:) आप: स्वधया मदन्ती: इन्द्रादीनां लोकेष्वपि प्रविशन्ति ( ७।४७।३)। सूर्यो रश्मिभि: अपो विस्तारयति ( ७।४७।४)। अपां राजा वरुणो लोकेषु सत्यासत्यं वीक्ष्यमाण आसु मध्ये विचरति ( ७।४९।३)।
४
अपां मार्गा इन्द्रवज्रखनिता:कृता: ( ७।४७-४९।१) । जलशक्तिखनिता:इत्यर्थ:। एता: जनान् उदकेन घृतेन पुनन्ति ( १०।१७।१०)। नानापापेभ्यो मुक्त्यर्थंम् आपो देवता एवाहूयन्ते ( १।२३।२२।१०,९।८) ,गृहेष्वेता: जनस्वास्थ्य निरीक्षिका: भवन्ति( हि०गृ० २।४।५)।आपामोणविरूपाणि जलचिकित्साग्रन्थेषु द्रष्टव्यानि । रेवती: आपो जीवानां प्रीणयित्र्य: सन्ति ( १०।३०।१२,१४)। अमरत्वदायिन्य
५
एता: समृद्धिस्वामिन्योऽपि सन्ति( १०।९-३०।१२)। यज्ञे सोमपानाय आहूता: भवन्ति आपो या कुशासनेषु तिष्ठन्ति ( १०।३०। १४-१५)।

आपो मातरः स्वकीयानि पयांसि मधुषु सम्मिश्रयन्ति । तेष्वपि ताः सारभूपैः विधन्त इत्यर्थः ( १।२३।१६)। अपां तरंगाः अपि मधुपर्णाः दर्शनीयाः तत्स्वयुक्ताः वा भवन्ति, नोपेक्षणीयाः। घृतमिश्रिताप: पीत्वा इन्द्रः प्रसीदति ( ७।४७।१-२)। वृत्रहन्त्वाद इन्द्राय अपस्तस्मै मधुपेयं पाययन्ति विप्रः ( १०।३०।७-६)। विद्युत्प्रभावात् वर्षितं बलं पुन इन्द्रौजोभिः पीयते इति भावः। घृतादिभिः युक्ताः आपो देवताः सुरामहर्षैः पुरोहितैःसमाःकृताः। अप्सु मध्ये लताप्राप्तः सोमरसः सुकन्यासु युवक इव राजते ( १०।३०।५-६,१३)।

अनेन वर्णनेन अपां सनिज्युक्तायाः( १०।३०।१२,१४), वृष्टिप्रदत्वस्य: ( १०।३०।७-६) ,चिकित्सादौत्रे प्रयोगानाम् ( १।२३।२२,६।५०।७, ७।४६।३,१०।६।८), जीवद्दृष्टिहेतुत्वानाञ्च (~~[illegible]~~ ६।५०।७,१०।१७।१०) ज्ञानं भवतीति ।

-----

## पर्जन्यः

**वर्षणशक्तिः मित्रावरुणाधीना --**

ऋग्वेदस्य त्रिषु सूक्तेषु अथर्ववेदस्य कैकस्मिन् सूक्ते स्तुतः पर्जन्यः केषुचिन्मन्त्रेषु वाताग्निमरुदादिभिः देवैः सह अपि स्तूयते । अस्य वर्षणशक्तिः मित्रावरुणा-धीनास्ति ( ५।६३।३-६)---तयोः शासकत्वात् । अस्य अस्त्रस्थानीयायाः विद्युतो विश्वानिभूतानि बिभ्यति ( ५।८३।२-३)। ऋग्वेदे पृथिवी अस्य पत्नीति विश्रुतः ( ५।८३।४,७।१०१।३) यथा पतिसिक्तरेतसः सन्तानास्तयो जायन्ते तथैव पर्जन्य-सिक्तापरेतसः पृथिव्यां चराचराणि भवन्तीति । परमथर्ववेदे ( ~~१०।१०।६~~ १०।१०।६), अत्र 'वशा' अस्य पत्नीति ख्यातः। इयं वशापि पृथिवी एवास्ति या वस्त्वावासदानैः शास्ति सर्वाणि भूतानि । अस्याः वशायाः पर्जन्यः पयोधर इत्युच्यते । मूलोत्पन्न-त्वात् पयोधरः पर्जन्यः अस्याः पयोधरत्वमर्हत्येव। वर्तुलां पृथिवीं परितः स्थिताः

पर्जन्याः दृश्यन्ते यद्यपि ऊर्ध्ववर्तिनः तथापिवस्तुतः गोपयोधर एव अधोवर्तिन एव भवन्ति। अतो नेयमिश्या वेद श्रुतिः। तत्र विद्युतो भवन्ति स्तनाः। यथा स्तनाः पयोधराद् दुग्धनिःसारणहेतवो भवन्ति तथा विद्युतोऽपि वृष्टिहेतवः भवन्ति।एवम् अथर्ववेदे ( १२।१।१२) अभोक्तं पृथिव्याः पत्नीत्वं वशापत्नीत्वेन बाधितो न भवति ।पर्जन्यस्य तनयः[1] सोमो स्ति ( ९।८२।३)। सोमेन वनस्पतिरसः पेयञ्च हितकं जगदुच्यते ।

अथकर्माख्यानम् ।

अहर्निशमुत्पतनशीलाः पर्जन्याः वृष्टिभिः पृथिवीं तर्पयन्ति विद्युतश्च विश्वं प्रकाशयन्ति ( १।१६४।५१)। ते वृष्टिभिः लोकवत्म् -- धन्वादिदाम् --- आर्द्रां कल्पेक्ति कुर्वन्ति (५।५३।६) गर्जन्तः पर्जन्याः मण्डूकान् उद्बोधयन्ति (७।१०३।१) दृतिकोशपयोधरशब्दैः व्यक्तीकृताः पर्जन्याः पयोरथे बारुह्य आकाशे विचरन्तो जलानि अपकर्षन्ति ( ५।८३।७-९, ७।१०१।४)। अतिवृष्टिप्रसंगेऽमी: तन्निवारणाय प्रार्थिताः भवन्ति ( ५।८३।१०)। जीरदानवस्ते विद्युद्भिः पापकृतो जनान्, वृक्षान्, रक्षांसश्च निघ्नन्ति ( ५।८३।१-२)। यदा पर्जन्योरेतसा पृथिवीमुन्दति तदा वाताः प्रवान्ति, विद्युतःसञ्चरन्ति, ओषधयः उद्गच्छन्ति, भूमिश्च अन्नोत्पादनयोग्या भवति ( ५।८३।४) । विश्वस्य जगतो देवः पर्जन्यः आत्मनः त्रिभिः रूपैः-- क्षिप्रभाष्यकारलूपैः--- जीवान् पुष्यति । एवमेवास्य त्रिवृतः ज्योतिरपि प्रकाशयति भूतानि । त्रिवृतः ज्योतिरिति--- द्विविधे ज्योतिषी अस्माभिः प्रयुक्ते, तृतीयञ्च मेघविद्युत् या वृष्ट्या मोदयति।( ७।१०१।२,तैत्ति० २।१।२।५)। पर्जन्येषु विश्वानि भूतानि लोकाश्च अवतिष्ठन्ते । पौरस्त्याः , प्रतीच्याः, उदीच्याश्चेति त्रिविधाः मेघाः महन्तं पर्जन्यमभितोमधूदकं वर्षन्ति ( ७।१०१।४)। अस्य अनुग्रहेण वृष्ट्यो मयोभुवः भवन्ति। अनेन गुप्ताः ओषधयः सुपिप्पलाः भवन्ति ( ७।१०१।५)।

मूर्तिकरणम्

मूर्तिकिरणप्रसंगे अत्रौ प्रायः वृषभेन तुलितो यो गर्जन् वनस्पतीषु रेतो दधाति ( ५।८३।१, अथर्व० ४।१५।१)। यद्वा वन्ध्याधेनुरिव अस्ति पर्जन्यो यो यदा कदा वृष्टिहेतुः भवति ( ७।१०१।३)।

---

१ सुब्कीo व्लूमफील्ड:फॅ०रॉ०१५३।

स्वरूपविचार:

पर्जन्यशब्दस्य अभिधात्मको भावो 'वर्षा मेघ:' इति विचारयति श्री मैकडानल:( तत्रैव पृ०१५७) । परं यद्येवं समभविष्यत् तर्हि एतेषां मंत्राणां मेघो देवता भवति स्म। वस्तुत: पर्जन्यो दृश्यमाप्यराशिमात्रव्यञ्जकोऽस्ति । यत: समुद्रादिभ्यो जलाशयेभ्यो जन्य उत्पन्न इति पर्जन्य:। मेघश्च वर्षणशीलानां घनानां व्यञ्जकोऽस्ति। मेहं जलं घातयति पातयति इति मेघ: । वृष्टिझंझावातयो: देव: इति घाटे कवि:, वृष्टिदेवश्च सी० कुन्हनोराजा( क०पृ०१६१,वेद पृ०६४)। नार्हत्यसं देवोझंझावातगुणश्च ।

केचित् पाश्चात्या: चारित्रिकं साम्यं वीक्ष्य पर्जन्यं बहुधा लिथुआनियन-गर्जनदेवेन 'पर्कुनेस' सह समीकुर्वन्ति ।परन्तु अस्मिन् विषये ध्वन्यात्मिका समस्या अनिर्णीता वर्तते । ( वेनफे: ओ०आ० १।२२३, हर्ट: इं०फो० १।४८१-२, बूह्लर: ओ०आ० १।२१४-२६, ब्रेहूक: त्सी वी० १८५५,पृ०२७५, का०हू० ५६ द्वारा वर्णेन, तुल्की० त्सिमर: आ०ले० ३।३२२ पश्चाच्च, त्सिमर: त्सी०आ०१६।१६४)।

अथ व्युत्पत्ति: ।

पृष + अन्य , नि० षकारस्य जकार: = पर्जन्य:।

------00------

## विश्वकर्मण: स्वरूपविमर्श:

यथा देवेषु केचिद् देवत्वं वहन्तोऽपि प्रकृतितत्त्वपदमपि अर्हन्ति, न तथाविधेषु कैष्वयं देवशिल्पी विश्वकर्मा। असौ आद्योपान्तं शरीरनिर्माणशिल्पकर्मरतो देवोऽस्ति। अन्येषां देवानामिव असौ न याचते क्वचिदपि साहाय्यं स्वकर्मसम्पादनाय। मात्र केषुचिद् स्थानेष्वेव अस्य पुत्राद्यो बान्धवा: दृश्यन्ते । अयं सर्वथा साधुशीलो देवोऽस्ति, य कर्म कृत्वा प्रयाति। शिल्पप्रसिद्धोऽयं स्वबान्धवान् अथार्थि: प्रथयति ।

### त्वष्टृविश्वकर्म शब्दयो: विशेषणत्वम् --

वैदिकयुग एवासौ नाम्ना एतावतीं प्रसिद्धिं गतो यद् देवा: अपि आत्मनो धन्या: चक्रु: तन्नाम्ना । स्वयमस्यापि वेदेषु द्वे नामनी श्रूयेते --त्वष्टा विश्वकर्मा च। यत्रासौ तक्षणकर्म करोति तत्र त्वष्टा, अन्यत्र च विश्वकर्मा उच्यते । अस्य एते द्वेऽपि नामनी देवे उपयुज्येते स्वयशवर्धनाय। तथा हि---

शिवस्त्वष्टरिहागहि विभु: पोष

उत त्मना(शान्तिपर्व ४७।८५,लिंग ६८।५७,कू० ५।५।६,तैत्ति० सं०३।१।११)। विश्वकर्मा य-मग्नि:( मा०श०ब्रा० ६।२।३।४२)। इन्द्रो विश्वकर्मा ( ८।६२।२)। वायुर्विश्वकर्मा ( श०ब्रा० ८।१।२।७)। प्रजापतिर्वै विश्वकर्मा ( तै०सं० ३।४।७, तै०ब्रा० ३।७।६। १०२, मा०श०ब्रा०८।२।३।१३, ६।४।१।१२, वामन० ९७।१६)। त्वष्टादित्य: ( अथर्व०२०।४१।३, स्कं० काशी० पू०अ०६)। इन्द्रो विश्वकर्मा ( १।११।४,अथर्व २०।९२।६, यजु: ८।४५-४६)। देवस्त्वष्टा सविता विश्वरूप( ३।५।१७,१०।१० ।५)। परमात्मने विश्वकर्मण: प्रयोग: प्राय: श्रूयते ( वायु० १।६)। अयं दक्षिणा विश्वकर्मा ( यजु: १३।५५, मा० श० ब्रा० ८१।२।७)। अन्यैरपि स्वयशसे अस्य नाम्न: प्रयोगो विशेषणतया श्रूयते ----

विश्वकर्माणौ मयत्वष्टारौ ( शि०रुद्र०युद्ध ० १०।३६,

वह्नि० गणभेदे)। अहं हि विश्वकर्मा वै दानवानां महा-कवि: (सभा०१।६)इत्युच्यते मयेन आत्मपरिचय प्रसङ्गे सभायां पाण्डवानाम् । स्कान्दपुराणे ( ३।१।३७।३०)।

अत्र त्वष्टा विश्वकर्मणो विशेषणत्वं भजते। शिशुपालवधे महाकाव्ये माघो विश्वकर्मपदम् एवं व्याख्याति -- विश्वकर्मा त्वष्टुः सकाशाद्गृहीतशिल्पविज्ञानसम्पन्नत्वस्य सीमा(३।३५)।

त्वष्टुः प्रजापतेः पुत्रो विश्वकर्मेति स्कन्दपुराणे ( मा०कौ०अ०८५)। अन्यत्र विश्वकर्मणः पञ्चपुत्रेषु एकः त्वष्टाप्यासीत्(विष्णुः १।१५।१२२, नागर० ५।१३, अनु० अ० ३, रुद्रया०अ०)। अथवा त्वष्टुः पुत्रो विश्वकर्मा( वायु० २।४।८५, ब्रह्माण्ड० ३।१।८६-८७)।

त्वष्टुः नानार्थेषु प्रयोगः -

एवं वयं पश्यामो यद् द्वेऽपि नामनी साहित्येषु विशेषणत्वं भजेते परं शिल्पकर्मसीमां प्रदर्शयितुम् । एकदा तु ' त्वष्टारं विश्वकर्माणम् ( ऋ०३।१।३७।३६) इत्यपि श्रूयते । द्वे एव अन्योऽन्यं भूषयतः । तत्र ' त्वष्टा ' तक्षणकर्म नैपुण्यं व्यनक्ति। तथा विविधेषु कर्मसु निपुणः त्वष्टा अभिधीयते स्म ( त्वक्ष + तृच् = त्वष्टा)। वाङ्मयार्णवे अस्य पदस्य प्रयोगो नानार्थेषु एवं पठ्यते ---

त्वष्टा प्रजापतौ बहनौ देवतक्षणि तक्षणि ।
विष्णावर्के माध्यमिके देवे द्विरदे तथा ।।

निरुक्ते च नानाकर्मसु प्रयोग समुच्यते ---

त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद् दीप्तिकर्मणः त्वक्षतेर्वा स्याद् करोति कर्मणः ( ८।१३)। वेदेष्वपि त्वष्टा तक्षणकर्मनिपुणत्वाम्नायते (ऋ० १ ।५२-६१-१८८।६,१०।४८।३, अथर्व ५।२५-२६।८) [७, ६, ५]

विश्वकर्मपदस्य नानार्थेषु प्रयोगो व्युत्पत्तिश्च :

एवमेव ' विश्वकर्मा ' इत्यस्य पदस्य व्युत्पत्तिरपि तस्य विशेषणत्वं प्रकटयति । यतो हि --

विश्वकरणाद्विश्वकर्मा । वैश्वकर्मणं हविरधिकृत्य

१ सायणभाष्ये ---

" अथैण वैश्वकर्मणो विश्वानि मे कार्याणि कृतान्यासन्निति विश्वकर्मा तोऽभवदिति ( दुर्गः) विश्वेषु कर्म यस्य( रा०देव: शब्द०)। विश्व+ कृ+ क्विप् = विश्वकृत् ( महा० १।२२२।१३)। विश्व + कृ + मनिन् =विश्वकर्मन्

( तारणीशः सं० कां०)। अस्य नानार्थेषु प्रयोगो वाङ्मयार्णवे एवमुच्यते ---

विश्वकर्मा तु सूर्येऽपि विरञ्चौ देववर्धकौ ।
विश्वगोप्ता तु शक्रेऽपि विष्णावपि पुमान्मतः ।।( रा०आ०वा)।

तथापि नानार्थेषु प्रयुक्तोऽस्मां शब्दो बहुधा विशेषणतयैव प्रयुज्येते अन्येभ्योऽन्यैः सह वा। यद्यपि व्युत्पत्तिः त्वष्टृविश्वकर्मणोः व्यष्टिसमष्टिपरकं भेदं व्यनक्ति तथापि वेदेषु अनयो एकार्थता एव श्रूयते । तथा हि त्वष्टा मात्र काष्ठादिभिः तक्षणद्वारा कृतीः एव न निर्माति अपितु सृष्टिजनकर्माणि अपि करोति। स पितेव प्रजाजनान् पोषयति। तथा चाम्नायते ---

त्वष्टा वीरं देवकामं जजान, त्वष्टुर्वा जायत आशुरश्वः ।
त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यदि होतः ।।
( यजुः २९।९)।

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणःस्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायतेदेवकामः।।
( ऋ० ७।२।९)।

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा।
तमद्य होतारिषितो यजीयान् देव त्वष्टारमिह यदि विद्वान् ।।
( अथर्व० ५।१२।९)।

त्वष्टृविश्वकर्मणोः एकार्थकत्वम्

विश्वकर्मा तु यथा नाम तथा गुणैः एवास्ति। एवमेव वेदोक्तः त्वष्टा गुणकर्मभिः विश्वकर्मैवास्ति । ऋषिभिः यद् दृष्टं तदुक्तम् । अतो नायं कश्चिद् भेदविषयः। यथा इन्द्राय वेदेषु मघवा, शक्रः, शचीपतिः इत्यादीनि नामानि श्रूयन्ते परं कोऽपि न तत्र भेदबुद्धिं जनयति तथैव अत्रापि भेददृष्टिः नोपयुज्यते।

पुराणेषु सर्वत्र त्वष्टा विश्वकर्मणे एव श्रूयते । तथाहि ---

अथ नारायणो हरिः आहूय विश्वकर्माणं त्वष्टा समृताशिषम् ( स्क० ३।१।३७।३६)। पूर्वोक्तशातकर्म विश्वकर्मणा क्रियते । अस्य त्रिशीर्षा विश्वरूपः तनयो भवति । अपि चायं एक एवेन्द्रवज्रनिर्माताऽस्ति। एतेष्वेव प्रसङ्गेषु नानापुराणेषु त्वष्टा श्रूयते ( वि०ध० १०२।७६-८०,पद्म०सृ०६।६५, काठक स १२।१०,८।१६, हरि० ३।५०, भाग० ६।६।४४, भा०ब्र० ब्रा०१।६।३, अथर्व० २०।३५।६)। स्कन्द पुराणे तु ययोः नाम्नयो एकत्र एव प्रयोगो दृश्यते ( ३।१।३७।३६, प्रभास ७(१) १६५।१०४)। प्रह्लादी विश्रुता तस्य त्वष्टुः पत्नी विरोचना। यद्वा विरोचनस्य भगिनी माता त्रिशिरसस्तु या ( मत्स्य० २२१।१६)। त्वष्टा दुहित्रे वहतुं युनक्तीतीदं विश्वं भुवनं वियाति ( अथर्व० ३।३१।५)। एतैः प्रसङ्गैः अपि विश्वकर्मण एव त्वाष्ट्रत्वं बुध्यते न पुनः भिन्नव्यक्तित्वं त्वष्टुः नाम्नः कस्यचिद् व्यक्तेः। विश्वकर्मैव त्वष्टेति नाम्नान्यत्र श्रूयते न कश्चिदन्य एत्यस्मिन् विषये भविष्यपुराणे स्पष्टतया उच्यते यत् ---

प्रसूता विश्वकर्माणं सर्वशिल्पकरं वरम् ।
स वै नाम्ना पुनस्त्वष्टा त्रिदशानाञ्च वर्द्धकिः।।

( भवि०ब्रा०पर्व ७६।१६)।

विश्वकर्मा विभोः नारायणस्यांशावतारस्त्वष्टेति श्रीमद्भागवते महापुराणे ( ६।६।३६)।शिवमहापुराणस्य रुद्रसंहितायां पार्वतीखण्डे त्वष्टा विश्वकर्मणे प्रयुक्तो भवति ( ४१।२५,३१)। एवं प्रयोगैः द्वयोरेकत्वमेव प्रतिपाद्यते न भिन्नत्वम् ।

क्वचिद् अनयोः भेदोऽपि प्रतिभाति परं तत्र प्रतीतिरेव भवति न तु वर्तते सत्यत्वतोऽपि तथा हि--

करालदन्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः ( वभा० ७।१४)। ब्रह्मणः पूर्वास्येन विश्वकर्मणः, उत्तरास्येन च त्वष्टुरुत्पत्तिः बभूव( मान०सू०७।१०)। विश्वकर्मा त्वादित्यैरुत्तरात् पातु, त्वष्टा त्वा रूपैरुपरिष्टात्पातु ( काठकम् २।६) । देव दानवयुद्धप्रसङ्गे विश्वकर्मा मयेन, शम्बरश्च त्वष्टा सह युयोध इति श्रूयते श्रीमद्भागवते (८।१०।२६)। अन्यत्र द्वौ प्रोक्तौ विश्वकर्माणौ मयस्त्वष्टा च योगवित् ( वह्नि० गणभेदाध्याये)। यद्वा ' अहं -- हि विश्वकर्मा वै दानवानां महाकविः(वभा० १।६)।

अपि च नैकवारं श्रीपुरारिकेन्द्रप्रस्थवृन्दावनरचना प्रसङ्गेषु विश्वकर्मणासह असावपि समाहूयते रचनार्थं । अत उक्तस्थलेषु विश्वकर्मापदेन मय उच्यत इत्यवगन्तव्यः। यतो हि एतेषु ग्रन्थेषु वर्णितानि त्वष्टुः कार्याणि विश्वकर्मणः कार्याणि एव सन्ति न कस्यापि भिन्नव्यक्तेः। तथा हि--

काठके त्वष्टा इन्द्रवज्रं त्वदाति।

अस्य पुत्रो विश्वरूपोऽस्ति योऽन्यत्र विश्वकर्मणः श्रूयत इति ( ८।१६,१२।१०)। कर्मभेदाभावे व्यक्ति भेदाभावो जायत एव। यदि त्वष्टुः नाम्नः कोऽपि भिन्न शिल्पीवरः समभविष्यत् तर्हि तत्र कार्यभेदोऽपि समभविष्यदेव। यदि नैवमस्ति तर्हि ग्रन्थकारैः स्वव्यक्तियशसे विश्वकर्मणः कार्याणि त्वष्टरि समारोपितानीति अवगंतव्यः अन्यथा व्यक्तिभेदः कार्यभेदं जनयत्येव। तच्चोक्तग्रन्थेषु, यत्र विश्वकर्मा त्वष्टा च भिन्नव्यक्तिरूपेण प्रतिपाद्येते, न दृश्यते । एतैः ग्रन्थैः त्वष्टैव प्रतिपादित विश्वकर्मणः कार्यैः सह न कोऽपि भिन्नो देवशिल्पी। वस्तुतः आदौ उत्पत्तिप्रसङ्गे विश्वकर्मणा सह मयस्योत्पत्तिरपि उच्यते तत्र मयो विश्वकर्मपुत्रो नाम्ना उक्तः त्वष्टु । नाम्ना च विश्वकर्मा यथा च दृश्यते तत्र परवर्तिषु कथाप्रसंगेषु । यद्यपि तत्र अन्यकथासु मयो विश्वकर्मणो नाम्ना न ज्ञायते तथापि यतो हि तत्र विश्वकर्मा न श्रूयते, परं तस्य कार्याणि त्वष्ट्रा कृतानि श्रूयन्ते । अतः त्वष्टैव विश्वकर्मेति सहज-तया ज्ञायते ।

श्रीमद्भागवते तु तत्र त्वष्टादित्य उच्यते। त्वष्टुरादित्यत्वं तत्रैव श्रूयत एव ( ६।१५।३९,४४)। नास्ति तत्र कुत्रापि सम्राट्शिल्पकर्ता त्वष्टा ।यत्रासौ विश्वकर्मणो प्रयुक्तोऽपि भवति तत्र कथासाम्यस्तु वर्तत एव -- न जायते कथाभेदः। तथा हि ---

श्रीमद्भागवते त्वष्टुः भार्या रचना पुत्रश्च विश्वरूपोऽस्ति ( ६।६।४४)।

वेदानां सिकरैतसो रूपाणां कर्ता इन्द्रवज्रकर्ता च त्वष्टा पुराणेष्वपि प्रायः अनेनैव नाम्ना ज्ञायते यद्वा विश्वकर्मणो नाम्ना । वेदपुराणानां त्वष्टा एक एवास्ति। तथा च श्रूयते ---

त्वष्टा विराजो रूपाणां धर्मपौत्र उदारधीः।
कर्ता शिल्पसहस्राणां त्रिदशानाञ्च वास्तुकृत ।। मत्स्य० २२।१७।।

प्रसूता विश्वकर्माणं सर्वशिल्पकरं वरम् ।
स वै नाम्नापुनस्त्वष्टा त्रिदशानां च वर्द्धकि:।। भविष्य०ब्रा० ७९।१६।।

कर्मभि: कवि:, गुरु:, आशुक्रियाशील: शिल्पी विश्वकर्मैव सर्वलोक-शिल्पप्रवर्तकोऽस्ति। तथा च सूक्तं पद्म पुराणे ---

दिवि भुव्यन्तरिक्षे वा पाताले वापि सर्वश:।
यत्किञ्चिच्छिल्पिनां शिल्पं तत्प्रवर्तकस्ते नम:।।

(भवि०ब्रा०पु० २५।१७)।

विश्वकर्मण: सृष्टिकर्तृत्वम् ---

परमस्यैव ` सृष्टिकर्तेति ` श्रुत्वा जना:सन्देहं जनयन्ति तस्य धीमतोऽस्मिन् कर्मणि । यतो हि ते विस्मरन्ति यत् ऋषय: सृष्टिकर्मसमर्था:। त्रिशङ्कवे विश्वामित्रेण नवीना सृष्टि: प्रारब्धा इति तु सर्वे वयं जानीम एव। तिलोत्तमा विश्वकर्मणा कृतेति श्रुता एव। आधुनिका: पाश्चात्या: चिकित्सका: जापानदेशीयाश्च चिकित्सकाश्च रक्तादीनां निर्माणे सफला: श्रूयन्ते यथा तथैव यदि पुरा विश्वकर्मणापि सर्वं सृष्टि: कृतेति श्रूयते तत् कोऽत्राश्चर्यविषय: सन्देहविषयो वा। यथास्माकं विमानरचनाकथाकियद्वर्षपूर्वं वैदेशिकेभ्य उपहास्यास्पदासीद्, पश्चाच्च यदा तैराविष्कृत:, तदा सत्यमासीद् आर्योक्तिरित्युच्यते । एवमेव यदाधुनिकै: जीवशरीररचनापि सम्पादिता भविष्यति तदा ते पुन: ` सृष्टिकर्ता विश्वकर्मेति ` स्वीकरिष्यन्ति , न अत: प्राक् ।

यद्वा सर्वव्यापको विश्वकर्मैव तु गर्भाधानादीनि सृष्ट्यात्मकानि सर्वाणि क्रियाणि कुरुते, न कोऽप्यन्य:।

## वेदपुराणोक्तविश्वकर्मणो: एकत्वम्

केचिद् विद्वांस: वेदोक्तविश्वकर्मण: पौराणिक विश्वकर्माणं ` भिन्न ` इति मन्यन्ते ( वा०श० क० आर्य १९६-९७, भा०वि० ५३-५४)। परमन्ये केचिदस्य नानारूपाणि पश्यन्ति। तथा हि--

१- त्वष्टा विश्वस्रष्टेति गोपीनाथ:( उत्ति० क० १।१।२७५)।
२- राजा भौवनोयो दानेपृथिवीं ददाति( ऐ०ब्रा०भा०४७)।

३- पर्वतानां नदीनां पिता विश्वकर्मा( कौ०गृ० ३।१३।१५)।

४- रूपेशो विश्वकर्मा ( तै०आ० ३।१।११)।

५- प्रजापतिः विश्वकर्मा ( वामन० १७।१६)।

६- सूर्यस्य सप्तरश्मिषु एको विश्वकर्मा ( ब्रह्माण्ड० २।२४।६५-६६)।

७- भुवनात्मजातपुत्रो विश्वकर्मा ( वा०रामा०: पु०२० ३।२७०)।

परं देवेषु रूपाणि महत्त्वं न वहन्ति यतो हि कामरूपाः देवाः कार्यस्थितिभेदानुसारं रूपाणि गृह्णन्ति यद्वा शापवशात् स्वेच्छया वा भिन्नयोनिरूपाणि उपयान्ति। अतोऽत्र रूपभेद आत्मभेदं न जनयति। देवशिल्पी विश्वकर्मा न केवलं देवानां भवनादीनि निर्माति अपितु देवान् अपि कल्पयति पदार्थविशेषेण (१०।७२।२, वा०श० भा०का०पृ०४०)। एतदनुरूपमेव अस्य वैदिकविश्वकर्मणो विषये लिङ्गपुराणे उच्यते यदसौ कल्पादौ पर्वतादीन् निर्माति ( ७०।३७-३८) । पर्वतादीनां कर्ता विश्वकर्मा अवश्यमेव विश्वस्रष्टा वैदिको विश्वकर्मैवास्ति न कोऽपि भिन्नो देवः । वैदिकं विश्वसृष्टुः उच्चपदं परित्यज्यासौ पौराणिके युगे राज्ञां प्रासादकर्ता जातः, एतद् दृष्ट्वा कैश्चिद् विद्वद्भिः अस्य महत्त्वहानिः अनुभूयते परमस्य आगमनाभावे भूतले तु शिल्पप्रचार एव न समभविष्यत्। भूतले शिल्पप्रचारेण शास्त्रनिर्माणेन वा देवशिल्पिनो मानो हीनतामगच्छदिति न युक्तियुक्तं प्रतिभाति यतो हि परोपकारिणां परोपकारैः मानो न हीयते। अन्यच्च स्थानेन मानो न हीयते वर्धते वा तत्तु कार्याधीनः सर्वथा । यद्वा शुभाशुभकर्मपरको मानो न पुनः कर्मयोजकपरक इति ।

## न दार्शनिकविवर्गव्यञ्जको विश्वकर्मा

वेदेषु एकदेवत्वं स्वीकुर्वन् श्री राधाकृष्णन् महाशय एकं परमं ब्रह्म प्रजापतिः, विश्वकर्मा, हिरण्यगर्भः इत्येतैः नामभिः कृतमिति मन्यते। परन्तु अस्मिन् विषये विरोधं दर्शयन् श्री देशमुखो विचारयति यत् प्रजापतिः, विश्वकर्मा, हिरण्यगर्भ इत्यस्य नाम्नो वैदिकयुगे विशिष्टदार्शनिकसिद्धान्तस्य कविवर्गाः आसन्( पी०एस० देशमुखः ( वै०वि०पृ० ३२४)। अत्र प्रथमेन मतेन तु विश्वकर्मणः सर्वदेवेषु आत्मतया व्यापकत्वम् उच्यते । अतः तेषां कर्माणि विश्वकर्मणा कृतान्येव सन्तीति मन्यते मनीषी ।

तच्च युक्तियुक्तमेवास्ति अर्थदृष्ट्या ।परन्तु विश्वकर्मणो दार्शनिकं कवित्वं कुत्रापि तस्य कार्यैः व्यक्तो न क्रियते अतः एतादृशः कोऽपि कविवर्गोऽभूदितीयं सम्भावना भावना मात्र अस्ति । न कापि कृतिरपि दृश्यते यया तादृशस्य कविवर्गस्य भावना सफला भवेत। समाजे क्वचिदपि विश्वकर्मणो दर्शनस्य अवशेषाः न दृश्यन्ते शिष्टाः अतो नासीदेतादृशः कोऽपि दार्शनिकः कविवर्गं इति । परं द्वितीयस्य मतस्य अस्य वर्मभिः सह कोऽपि सम्बन्धो न दृश्यते । विश्वकर्मा शिल्पविज्ञानशास्त्राणां कर्ताऽसीद् अतोऽयं कविवर्गव्यञ्जको भवितुमर्हतीति तु केनापि दृष्ट्या युक्तियुक्तं न प्रतिभाति । शास्त्राणां रचना तु तेन लोकलाभार्थं कृता , न च तास्य वृत्तिरासीद् । अस्य वृत्तिस्तु शिल्पकर्म एवासीद्, तत्कृते चासौ 'शिल्पप्रवर्तकः', 'वृत्तिपतिः', देवशिल्पी इत्यादिभिः मानवकैः विशेषणैः अलंक्रियते एव। अन्यच्च साहित्येषु कविभिः कदापि अस्य देवस्य इदं नाम उपाधितया प्रयुक्तो न दृश्यते क्वचिदपि । एतद्-विरुद्धं श्रमजीविभि इदं नामस्वोपाधितया प्राचीनकालतोऽद्यप्रभृति: प्रयुक्तो दृश्यते-- शिल्पकर्म साम्यत्वात्। यदैव तत्कर्मभिरेव स्वेषु अग्रगण्यस्य नाम उपाधितया धार्यते, न विजातिकर्मनिपुणस्य । इतिहासे चन्द्रगुप्तविक्रमादित्यादीनाम् उपाधयो नरेशैः एव धार्यन्ते नान्यैः कर्मवर्गैः । अतो नैवासीद् अतीते अस्य नाम्नः कोऽपि कविवर्ग इति ।

श्री डयूसनो भावयति यदासौ विश्वकर्मापि इन्द्रादीनाम् इव शक्तिसम्पन्न एव देव आसीद् परं कालान्तरे रचनात्मिकायाः शक्तेः प्रतिनिधिः जातः(व०शब्द० पृ०३६३)। त्वष्टृ विश्वरूप सवितेत्युच्यते । यतोऽयं सवितुः समो जातः। अतोऽयं सौर प्रकृतेः देव इति लासेः( इ०ना०पृ० ३५६)। सौरप्रकृत्या देवेन शिल्पकर्माणि न भविष्यन्ति मूर्तदेहेन, यानि विश्वकर्मणाकृतानि श्रूयन्ते । यं चिन्तयित्वासौ विज्ञ एवं भणति स तु त्वष्टादित्योऽस्ति तत्र । अतो नायं सौरप्रकृतेः देवोऽपितु सौरशक्तिप्रयोजको देवशिल्पी अस्ति । सूर्यवंशासनकर्म दृष्ट्वा श्री आप्टे विश्वकर्माणम् अग्निदेवतेति मन्यते ( पृ० ४४३)। भ्रमदामोऽयं भविष्यति प्रासादादिषु कर्मसु येन श्रुतिपुराणोक्तानि कर्माणि निष्फलानि भविष्यन्ति। अन्यच्च यदि अयमग्निरूपो देवः समभविष्यत् तर्हि यथान्यानि अग्निरूपाणि तत्र श्रुतानि तथैव इदमपि अग्निरूपं श्रवणीयं समभविष्यत्, यन्नैवास्ति। अतो नायमग्निरूप इति उक्तं भवति ।

## परमेश्वरो विश्वकर्मा

श्री गुप्तास्तु देवशिल्पिनं विश्वकर्माणं परमेश्वरस्यैव रूप इति मन्यते ( सु०ना०रि० १०पृ० २६६)। हाप्किन्स: चिन्तयति यद् ब्रह्माविश्वकर्माणौ आदिकाले सम्भवत: विश्वकृद् नाम्ना ज्ञायेते स्म पश्चाच्च ब्रह्मा विचारको देवो जातो विश्वकर्मा सर्वकर्मकर्ता देव इति ( महा०पुरा०पृ० १६४)। श्री घुरे महोदयस्य मतेन विश्वसृष्टा विश्वकर्मैव पश्चाद् देवशिल्पी विश्वकर्मा जात:( धा०आ०पृ० २०७)। ए० डेन्यिलो विश्वकर्माणं प्रजापते: ब्रह्मणो वा प्रतिरूपं मन्यते, परञ्च ऋग्वैदिकविश्व-कर्मण: सर्वथा भिन्न इति मन्यते ( हि० बहु० २३५,३१४, मत्स्य० २५२।२)। परमुक्त-देवयो एक एव गुणो विश्वकर्मणि दृश्यते यद्धानयो: देवयो: चराचरसर्जकत्वं पालकत्वं वा एव विद्यते न कोऽपि अन्यो गुणोऽपि। परं विश्वकर्मणि एताभ्यां सह सह यानप्रासादादीनां शिल्पत्वमपि श्रूयते । अतो नासौ अनयो: प्रतिरूप इति ।

श्री बेकरस्य मतानुसारं भूदिव्यकलावस्तूनां नरदेवपशुभूतादीनाञ्च निर्माता त्वष्टा विश्वकर्मैवास्तीति सिद्धयति पुराकथाभि:( हि०वि०पृ०५७७)। जे० एन० फरकुहरग्रिसवाल्डौ महाशयौ त्वष्टारं विश्वकर्माणं छाया पद्धतिरेवेति मन्येते यदासौ तर्कक्रमेण आत्मानम् उपस्थापयति( मा०वा०पृ०२३)। यदा विश्वकर्मा आहूयते कार्याणि कर्तुं तदासौ आगत्याशु एव सर्वाणि कार्याणि सम्पादयित्वा स्वस्थानं प्रयाति । समुहान्ति अपि नगराणि श्रीपुरेन्द्रप्रस्थादीनि तेन यामिनीयामेषु कृतानि । अत एवं भावयत: पाश्चात्यकवी। वैदिको विश्वकर्मा नारायणो हरि: इति मन्यमाना: केचिदन्ये मनीषिण एनम् अध्यात्मदृष्ट्या परमशक्तिसम्पन्न: सत्यानन्दमय इति मन्यन्ते ( टी०एस० गोपी० हि०ई० १।१।२७५, एन०ए० मा ०प० २६।३०, जी०एस० घुर: धा०आ०पृ० २१४)।

### स्रष्टा विश्वकर्मा शिल्पी जात:

श्रीमैक्समूलरमहोदयो विश्वकर्मण उत्पत्तिं विश्व: परस्तात् मन्यते यं कम्प जना: गुणेभ्यो यजन्ते ( पू०प०पु० भाग ६२ अथर्ववेदमंत्राणि पृ०२०६) ।

वेदेषु सृष्टिकर्तुः उच्चपदे स्थितो विश्वकर्मा अनन्तरं श्रेष्ठदेवानां वेतनभोगी कर्मकारो जात इति विचिन्तनः (वै०पु०पृ० ७७)। श्री बोल्डन वर्गस्य मतेन त्वष्टु सृजनक्रियायाः मानवीकरण स्वास्ति। हिलेब्रान्ट एवं पूर्यस्य स्थूलरूपः, चन्द्रश्च तस्य पुत्रो विश्वरूप इति मन्यते ( वै०मि० १।१२७, हार्डी वै०प्रा० ३०-३१) अस्मिन् विषये हिलेब्रान्टस्य मतम् अस्ति यत् त्वष्टुः पुत्ररूपे अग्निरेव चन्द्रमस्ति ( ऋ० १।६१।२, १०।२।७)।
अत्रैव अग्रे पुनः विचारयति यत् कदैव: त्वष्टादौ स्थूलदेवविशेषणरूप आसीत्, पश्चात् स्वतन्त्रतयाप्राप्तदेवो बभूव। वेदोत्तरकाले आदित्यत्वं गतोऽयं महत्त्वं न भजत इति। अयं विराट् विश्वकर्मणो प्राकृतिकम् आधारम् अन्विष्यत् सूर्यं प्राप्नोति, पुत्ररूपे च कालभेदेन विश्वरूपत्वं गच्छतां चन्द्रमिति। परं प्रत्यक्षाशिल्पकर्माभावे सूर्यो विश्वकर्मत्वं नार्हति। त्वष्टुः महत्त्वस्य ह्रासकथापि तर्कसंगता न प्रतीयते। यतो हि वज्रकर्तुः त्वष्टुः यशांसि पुराणेषु विस्तारेण श्रूयन्ते। परं त्वष्टादित्य अवश्यमेव, न केवलं वेदेष्वेव अपितु पुराणेष्वपि नाम्नैव श्रूयते। अस्य कर्मणां यावदुल्लेखो वेदेषु दृश्यते, न तावद् पुराणेषु। लडविगः संवत्सरदेवतेति मन्यते ( ऋ० ३।३३३-५, एवी० पुराणि अ०वै०पृ०२५५-५६)। विश्वकर्मा सर्वशिल्पकर्ता स्रष्टा चास्तीति श्री ज० रिवर्डः ( डा० इन० पुरा०पृ०३४६)।

एतेषु उक्तमतेषु बहुभिः विद्वद्भिः अस्मै देवाय प्राकृतिकाधारान्वेषणप्रयासाः कृताः, परमस्य श्रुतगुणकर्मान्वितः कोऽपि प्राकृतिक आधारो न प्राप्तस्तैः। अन्यैश्च मनीषिभिः वैदिके पौराणिके च विश्वकर्मणि एकात्मता प्रदर्शिता, या सर्वथा सत्यसमन्वितास्ति।

सम्बन्धसमीक्षा

देवस्वरूपविनिश्चयात् प्राक्, कोऽस्य पितासीद् ?, कारीश्चास्य मातेत्यपि विचारविषयोऽस्ति। यथा अन्येषां देवानाम् अग्नीन्द्रादीनां बहूनि पितृनामानि श्रूयन्ते, तथैव अस्यापि पितरो बहुसंख्याकाः श्रूयन्ते। तथा हि---

१- त्वष्टुः

यशोधरायां जातो विश्वकर्मेति ब्रह्माण्डपुराणे (१।२--५।२७)।[१६]

२- कार्यौ: आङ्गिरसीपुत्रो विश्वकर्मा कृतिपतिः इति श्रूयते श्रीमद्भागवते (६।६।१, ४,१०,११,१५)।

३- ब्रह्मवैवर्ते पुराणे ब्रह्मणो नाभितः जायते विश्वकर्मा ( ब्रह्मखण्डे अष्टमे अध्याये)।

४-स्कन्दपुराणे योगसिद्धायां जातोऽयं देवः( कल्याण: हिं०अं० पृ०७८६)।

५- ब्रह्मणः पुत्र इति विल्किन्स ( ह०पु०पृ०७७ )।

६- भुवनाप्रभासतनयो विश्वकर्मा ( ब्रह्मा० ३।५८।१६, २।३६।२६, अग्नि० १८।४०-४१, ६।२८,२२,२७,मत्स्य० ५।२७, हरि० ३।४६, प्रभास० ७।२१।१५-१६, भवि० ब्राह्मपर्व, अध्याय ७६, लिङ्ग० १।६२ अ०, आदि० अ० ६२)।

७- मान्तरे ब्रह्मणः पूर्वस्योत्पन्नो विश्वकर्मेति ( प्र०कु०शि० शब्द०पृ०७१०)।

८- विश्वकर्मा भवत्पूर्वं ब्रह्मणस्त्वपरातनुः । त्वष्टुः प्रजापतेः पुत्रो निपुणः सर्वकर्मसु । ( काशी० ४।२।८६।२)।

९- वृद्धाशिष्टेऽसौ शिवांश इति श्रूयते ---

माघे शुक्ले त्रयोदश्यां दिवापुष्ये पुनर्वसौ ।
अष्टाविंशति मे जातो विश्वकर्मा भवानि च ।।

१०- सुधन्वा विश्वकर्माणि ' इति विश्वमेदिनीकोशे ( श्लो०४४), आश्वलायनसर्वानुक्रमणिकायां षड्गुरुभाष्ये च ( अष्ट०८,अ०८)। अयं सुधन्वा आंगिरसो - अष्टमो पुत्रः स्मृतः( हरि०: वि०प० पृ०३१ टि०१)। अत्रैव विश्वकर्मणः पितुः भुवनस्य पिताप्ययः उक्तः। श्री श्रूयतेऽपि सुधन्वन् ' पदमस्य देवर्द्धेः विशेषणतया स्वीकरोतीति ( वृ०श०क० पृ०३६४)।

११- वायुपुराणे त्वष्टुः पिता शुक्रो माता चाङ्गीति श्रूयते ( २।४।७७) ।

१२- भौवनदूषणातनयो विश्वकर्मा त्वष्टा (पौ०आर० रामचन्द्रः पु०२०२।५६, भाग० ५।१५।१५)।

१३- वायुपुराणे २।३३।५६) अत्र भौवनोऽस्य पिता श्रूयते न पुनः माता दूषणा। परमत्र सम्भवतः राजा भौवनो विश्वकर्मा श्रूयते न देवशिल्पी विश्वकर्मा। मन्त्रो: सत्यायां भौवनो जात इति श्रूयते श्रीमद्भागवते ( ५।१५।१५)।

अस्य भौवनस्यपुत्र: शिल्पकर्मकुशलो भविष्यति अतस्तेन एवं नाम अङ्गीकृतम् । अतो राजा सर्वमेधयज्ञान्ते कश्यपपुरोहिताय पृथिवीं ददाति ( शत०ब्रा०१३।७। १।१५)।

अत्र केचिदेवं विचारयन्ति यद् बृहस्पते: भगिन्यां भुवनायां जातो विश्वकर्मैव, मातु: नाम्ना, भौवनत्वं गत:। परं नैवं भारतीया परम्परा दृश्यते क्वचिदपि इतिहासे । माता भुवना ब्रह्मवादिनी आसीद् अत एवं सम्भवतीति उक्तिरपि तर्कसंगता न प्रतिभाति, यतो हि अस्या: उक्त्या: अयमर्थो भविष्यति यद् पिता प्रभासो न्यूनगुण: आसीदिति, यच्च सत्यं नास्ति ।

उक्तेन शिल्पविदा राज्ञा, स्वपितु: नाम्ना सहगुरुनाम योजयित्वा, गुरुनाम्नैव स्वनाम कृतमिति न चित्रम् गुरुप्रसादासाध्यत्वात् विधानाम् ।

यथा दृश्यते पितृणां विषये उक्तिभेद: तथैव अस्य पुत्रादीनां सम्बन्धानां विषयेऽपि दृश्यते।तथा हि ---

१- मयश्च सरण्यू च विश्वकर्मण: सन्तती स्त:

( ब्रह्मा० ३।१।८७---३२---५६।१७-२१)।
(printed above: १६५ ७)

२- प्रजापते: विश्वकर्मण: छायासंज्ञे तनये इति श्रूयतेऽत्र ( भाग० ८।१३।८, विष्णु ३।२।२, मार्कं० १०६।१)।

३-विश्वरूपस्त्रिशिरो वास्य पुत्र इति स्कन्दपुराणे ( भा०क्षे० १।१५।४, विल्सन: विष्णु: पृ० १०१, उद्योग ६।४२-४६, अग्नि: २२।१६, भा०शा०ब्रा० १। २।३।२)।

४- कमलोऽस्य तनया इति वेंकर:( हि०वि० २।५७७)।

५- कमलोऽस्य शिष्या इति विल्किन्स ( वैं०पु०पृ०७५)।

६- नलो विश्वकर्मण: सुतो येन रामाय सेतु: कृत: ( वन० २८७।४१, विल्किविल्किन्स: हि० भा०पृ०१२२)।

७- विश्वकर्मात्मजश्चैव विश्वकर्मा मय: स्मृत: इति ब्रह्माण्डपुराणे ( १।२।१६,३।५६।२१)

८- अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च चत्वारो विश्वकर्मण: पुत्रा: कृता:( विष्णु० १।१५।१२२, स्क० नागर० ६।३ )।

९- मनुर्मयस्तथा त्वष्टा शिल्पी विश्वज्ञ एव च ।
पञ्चैते देव कर्माणो विश्वकर्मा सुतोऽभवा: ।।( हनु०शि०अ०३)।।

१०- मनुर्मयस्तथा त्वष्टा शिल्पी विश्वज्ञ एव च ।
विश्वकर्मसुता ह्येते रथकारास्तु पंच च ।। नागर० ५,अ०१३।।

११- मनुर्मयस्त्वष्टा तथा शिल्पी च पञ्चमः ।
विश्वकर्मसुतानेतान् विद्धि शिल्पप्रवर्तकान् ।। रुद्रयामल वास्तु तन्त्र ।।

१२- विश्वरूपः त्वष्टायशोधरापुत्रः इति माध्यन्दिनीये शतपथब्राह्मणे, अन्यत्रापि (१।६।३, हरि० ३।५०)।

१३- त्वष्टुः दुहितासीत् सरण्यू ( १०।१७।१)।

१४- त्वष्टुः विरोचनयां विरजः पुत्रो बभूव ( भाग५।१५।१५)।

१५- त्वष्टा इन्द्रस्य पितास्ति यो जायमान एव स्वपितरं अभ्नयति ( आर ०वी० जैनरः हिन्दुत्व० पृ०५२)।

१६- अश्वः सरण्यां त्वष्टुः पुत्रा इति वैकरः( हि०वि० २।५७७)।

१७- शुक्राङ्गणीजातस्य त्वष्टुः त्रिशिरोविश्वरूपो यमो विश्वकर्मा च पुत्राः बभूव ( वायु० २।४।८५, ब्रह्मा० ३।१।८६-८७)।

१८- त्वष्टादित्यस्य तनयो विश्वरूप इति श्रूयते श्रीमद्भागवते यश्च अन्यत्र विश्वकर्मणः। ( ६।६।३९,४४)।

१९- त्वष्टुः भार्ये वैरोचनीयशोधरे स्तः ( ब्रह्मा० ३।१।८७)।

२०- सरण्यू अस्य पत्नीति वैकरः ( हि०वि० २।५७७)।

२१- भागवते रवेः चाक्षुषो मनुः विश्वकर्मणः पुत्र इति पठ्यते (६।६।१५)।

२२- भारते विश्वकर्मणःविभो भार्याः कृताः चत्वारश्च पुत्राः रवेश्चाक्षुषो मनुः, प्राणेः इमौ नन्दयश्च कामदुघौ पुत्रौ बभूवुः ( आदि० ६०।२६-३२)।

२३- स्कन्दपुराणे विरोचना विश्वकर्मणः पत्नी भवति (प्रभास० ७।११।६९-७१)।

२४- रामजराजस्थापिते मानसारे अस्य चत्वारः पुत्राः उक्ताः---- मयो मनुस्त्वष्टा विश्वकर्मा च ( तारा०भ० वास्तु०अ०पृ०६१ )।

२५- त्वष्टा रुद्रात्मज इति विल्सन ( विष्णु०पु० १०१ )।

२६- विश्वकर्मा विस्वतो भ्रातास्ति( भवि० ३।१८।२२)।

२७- समराङ्गणरो विश्वकर्मणः चत्वारो भवन्ति तनयाः --- जयविजयसिद्धार्थापराजिता ( २।१-१४)।

२८- विश्वकर्मण: पुत्रो विश्वरूप एव त्वष्टृ इति नगेन्द्रनाथ:(ई०आ०पृ०४६)।

एतादृशानि पौराणिकवचनानि श्रुत्वा, पारवारिक सम्बन्धदृष्ट्या, त्वष्टु: विश्वकर्मणो: वा पितरौ आस्ताम् ? का भार्यासीत् ? के पुत्रा आसन् ? का तनयासीत् ? को वा भ्राता आसीत् ? इति निर्विवादरूपेण किञ्चिदपि वक्तुं न शक्यते । परं सत्यप्यत्र महति सन्देहे, कर्मसु विस्मयजननी एकरूपता दृश्यते । अत एव च कवयो जन्मवैविध्यमुपेक्ष्य कर्मतादात्म्यमेव सम्पश्यन्ति कथयन्ति च सर्वाणि शिल्प-कर्माणि त्वष्ट्रा विश्वकर्मणा सम्पादितानि सन्तीति। बहुश्रुतवचनानुसारं विश्वकर्मा प्रभासभुवनात्मज आसीत् यस्य पत्नी विरोचना पुत्राश्च मनुर्मयस्तदात्वष्टाशिल्पिन आसन् । एतेषां पुत्राणां भिन्नकर्मसु विनियोग एवं श्रूयते ----

अयस्कृतिर्मनूनाञ्च मयानां दारुकर्म च ।
त्वष्टृणां ताम्रकर्माणि शिलाकर्म च शिल्पिनाम् ।।
सौवर्णं तदाकाराणाञ्च पञ्चकर्माणि तानि वै ।
एते पञ्चप्रकारेण यत्कर्म परा स्मृता ।। नागर० ६।१३-१४।।

परं वेदेष्वस्य एक एव पुत्र: श्रूयते --- किं विश्वरूप: ( त्रिशिर:)।

वस्तुतो वैदिको विश्वकर्मा पौराणिकात् विश्वकर्मण: साभ्यां दृष्टिभ्यां यत्किञ्चिद् भिन्नोऽस्ति । यद्यपि अयं भेद: सामान्य एवास्ति तथापि उल्लेखनीय: प्रतिभाति। न केवलं पुराणेष्वेव अपितु वेदेष्वपि प्राय: सर्वेषां देवानां पितरो भार्या: भ्रातरश्च श्रूयन्ते पुत्रादिभि:सह । परं वैदिकस्य विश्वकर्मणो मात्र एकस्तनय: श्रूयते सोऽपि सन्दिग्धप्रतीकोऽस्ति। का माता ? क: पिता ? का भार्येति ? कोऽपि न जानाति । असौ विश्वकर्मा सर्वशक्तिसम्पन्नोऽस्ति। कोऽपि न जानाति कस्मिन् काले असौ जजान । अग्नीन्द्रादीनामुत्पत्ति: श्रूयते परं नास्य । अत: एतेभ्योऽपि प्रागेवासौ जात इत्यनुमेयो भवति । परं नायं योनिजो देव इन्द्रादीनामिव यतो हि---

विश्वकर्मा

विभो: नारायणस्यांशाच्चतास्त्वष्टा ( भाग० ६।६।३४)। सम्भवत आदौ परमेण ब्रह्मणा सृष्टिशिल्पार्थं आत्मनो विश्वकर्मांशो विसृष्ट: ।

अन्यच्च वैदिको युग आदियुगोऽस्ति । अतोऽयं विश्वकर्मा देवैः सह सकलं चराचरं पर्वतादींश्च निर्मिमीते । विगतशिल्पानां देवानां विजयाय असौ त्वष्टा इन्द्रवज्रं तक्षति। तत्र देवेषु मध्येऽयं देवः तेभ्य आपदुदधेः सन्तारको भवति । तेषां सुखसञ्चरणाय विहाराय वा विमानाः रथाः वा करोति।

पुत्रो विश्वरूपः

वेदेषु अस्य एक एव तनय आम्नायते स च नाम्ना विश्वरूपः त्रिशिरो वास्ति । यदि स्थूलमर्थं परित्यज्य वयं विचारयामः तर्हि ज्ञायते यद् 'त्रिशिरः' त्रिविधानां यन्त्रशक्तीनां --- विद्युदिन्धनपरमाणूनाम् --- व्यञ्जकोऽस्ति स्वशिरोभिः। एताभिः त्रिविधाभिः शक्तिभिः परिचालितानां यन्त्राणाम् एक एव असौ विश्वकर्मा निर्माताऽसीत् तद्युगे । अतोऽस्य पुत्रः त्रिशिरस्कः श्रुतः। पुत्र एव किमर्थमुक्तः त्रिशिरस्कः, स्वयं तन्नाम्ना किमर्थं न प्रसिद्धिं गत इतीयं शङ्कात्र स्वाभाविकी स्यादस्ति । परमियं रज्जुसर्पिणी स्यैवास्ति यतो हि---

शक्तित्रयसञ्चालितानि यन्त्राणि विश्वकर्मणः पुत्रस्थानीयानि सन्ति । यन्त्रेषु शक्तिरेव शीर्षस्थानीया भवति। यथा शीर्षाभावे जीवानां कापि सत्ता उपयोगिता वा न दृश्यते तथैव यन्त्राणामपि शक्त्यभावे कापि उपयोगिता न दृश्यते । यद्यपि सर्वाणि यन्त्राणि विश्वकर्मणः पुत्रस्थानीयानि सन्ति तथापि 'समूहे एकवचनम्' इत्यनेन सिद्धान्तेन वेदेषु अस्य एक एव पुत्रो विश्वरूपः त्रिशिरो वा श्रूयते । अस्य अयं यन्त्रपुत्रः त्रिविधशक्तिपरिचालितो भवति अतः त्रिशिरस्कः श्रुतः ।

यत्र अयं पुत्रो विश्वरूप इत्यनेन नाम्ना श्रूयते तत्रापि समूहे एकवचनमित्यनेनैव सिद्धान्तेन सर्वेषां यन्त्राणां श्रुतिः अनेन नाम्ना ज्ञेया । यतो विविधानि कार्याणि यन्त्रैरेव क्रियन्ते । अतः एतेषां समूहोऽनेन नाम्ना प्रसिद्धिमर्हत्येव सर्वथा । यद् वा विश्वानि रूपाणि यानि जगति दृश्यन्ते तानि सर्वाणि विश्वकर्मणा कृतान्येव सन्ति, अतः पुत्रस्थानीयानि सन्ति । परं समूहे एकवचनत्वाद् 'विश्वरूप' इत्यनेन नाम्ना तानि उच्यन्ते ।

दिव्यो वैदिको विश्वकर्मा सर्वशक्ति सम्पन्नो देवोऽस्ति यो न केवलं सृष्टिकर्म चकार अपितु देवेषु मात्र इन्द्राय एव वज्रञ्चकार । अन्येभ्यो देवेभ्यः शिल्पकर्मरतो नापी श्रूयते। मात्र वज्रेणैव सर्वान् देवान् उपकरोति। इह लोके तु कदापि नायति ।

पुराणेषु वेदार्थानां विस्तारो दृश्यते। परं भिन्नपुराणेषु भिन्नदेवानां महत्त्वं प्रतिपाद्यते। अत इतरेषां देवानां स्थानानि गौणतां भजन्ते । अथवा पुराणकर्तुः दृष्टिभेदोऽलङ्कारलोभो नूतनता लोभो वा नामकथा कर्मसु वैविध्यं जनयति। कालक्रमेण जातेषु पुराणेषु यत्र तत्र एव समता दृश्यते । तत्र कथासमता प्रायः यत्किञ्चिदन्तरेण प्राप्यते परं नामभेदः सर्वं सुलभो भवति । यथा आदित्याः सर्वेषु पुराणेषु द्वादश एव श्रूयन्ते परं नामसमता कुत्रापि न दृश्यते । एवमेव रुद्राणां संख्या सर्वत्र एकादश एव श्रूयते परं नामानि सर्वथा असमानानि सन्ति । विश्वकर्मणा सह अपि इदमेव सर्वं वृत्तम्। अतः भिन्नपुराणेषु अस्य भार्या, पितरौ, भ्रातरः, पुत्राश्च भिन्नाख्या एव श्रूयन्ते । स्वयं विश्वकर्मा प्रायःत्वष्टुः नाम्ना ज्ञायते परं कर्मसमता विद्यते । अत इदमुक्तं भवति यत् पौराणिको विश्वकर्मा कर्मभिः सर्वत्र एकोऽस्ति, परं पारिवारिक दृष्ट्या सर्वथा अनिश्चित इति ।

वैदिको विश्वकर्मा सृष्टिकर्मान्तरं पुरुषभावज्ञानादीनि मुख्यदेवकार्याणि सम्पाद्य, पौराणिके युगे इन्द्रवज्रेणसह अन्येभ्योऽपि देवेभ्यो गदाशक्तिशूलतोमरादीनि शस्त्रास्त्राणि निर्माति। देवकार्याण्यपि भूमौ एव सम्पाद्यन्ते । तथा हि---

कुमाराज्ञया कपालेश्वरादीनि लिङ्गानि इहलोक एव स्थाप्यन्ते निर्माय । शिवाज्ञया सर्वगुणसम्पन्नं गृहं कैलाशशिखर एव निर्मीयते तेन । विष्णुना आज्ञप्तो विश्वकर्मा इन्द्रद्युम्नाय रामकृष्णसुभद्राणां प्रतिमाः भूमौ एव करोति। ललितादेव्याः श्रीपुररचनाकर्म इहैव सम्पाद्यते ।

यद्यपि अस्मिन् युगे देवाज्ञया सम्पादितानि कर्माणि इहलोक एव क्रियन्ते विश्वकर्मणा, तथापि यथा वैदिकयुगे देवेषु मात्र इन्द्रस्य एव वज्रनिर्माता आसीदसौ तथैव पौराणिको विश्वकर्मापि कृष्णेन्द्रद्युम्नयुधिष्ठिरादीनां राज्ञामेव शिल्पी आसीदिति ज्ञायते वर्णनैः ।

<u>सर्वयन्त्रसंचालको विश्वकर्मा</u> : ---

वर्तमाने कलयुगे स एव विश्वकर्मा वैदिकं देवशिल्पत्वं, पौराणिकानां राज्ञाम् उच्चपारिश्रमिकं कार्यं विहाय जनसामान्येभ्यो हिताय स्वल्पवैतनिककर्मसु निरतो दृश्यते । शक्तियन्त्रसञ्चालितानां विविधविधानां यन्त्राणां परिचालने अतएव संलग्नोऽस्ति विश्वरूपः। किं बहुना न केवलं पदार्थशक्तिसञ्चालितानां यन्त्राणामेव सञ्चालने व्यस्तोऽस्ति अपितु स्वशक्तिचालितानां यन्त्राणामपि। अतो त्रिचक्रवाहनं पद्भ्यां सञ्चालयित्वा जनभारवहनकर्मसु निरतो दृश्यते । अपि च शकटान् स्वहस्ताभ्यां कर्षयित्वा भारान् वहति परेषां सुखसाधनाय । मुद्रणालयेषु सो निर्मिमीते पुस्तकानि समाचारपत्राणि च जनशिक्षणाय। वस्त्रादीनां कलेषु नानावस्तूनि निर्माय जनसामान्यानां स्वशोषकाणीकानान्च पूंजीपतीनाम् अभीष्टं सम्पादयति। कविरूपत्वं गतः स एव नित्यनूतनकाव्यराशीः सम्पादयति । शिक्षक-रूपेण असौ स्वशिल्पज्ञानं ददाति वत्सशिष्येभ्यः। चिकित्सकत्वं प्राप्तोऽयं नानाव्याधीन् उन्मूलयति जनसुखाय । डोमरूपेण शुद्धिकर्मनिरतोऽयं देवो मृदश्मचर्मकाष्ठादिषु कर्मसु ~~मनसा वाचा क्रियया कार्यकृतानि~~ कुम्भकारादिरूपेषु ~~निम्न~~ निमग्नो दृश्यते । किं बहुना मनसा वाचा क्रियया वा कृतानि क्रियमाणानि च यानि कर्माणि दृश्यन्ते तानि सर्वाणि विश्वकर्मणा कृतान्येव सन्ति । ' परोपकारैक धियो हि महात्मनः । यद्वा ----

परोपकाराय फलन्ति वृक्षाः, परोपकाराय वहन्ति नद्यः ।
परोपकाराय दुहन्ति गावः, परोपकारार्थमिदं शरीरम् ।।

एतान् शब्दान् अक्षरशः स्वजीवनक्षेत्रे अवतारयन् विचरत्यसौ ऋषिः भूमौ । क्षुत्पिपासे विस्मृत्वा कर्मनिरतोऽपि अयमर्थकार्श्यम् अनुदिवसम् अनुभवन् कष्टजीवनं जीवति । अर्थकार्श्यापनयनाय अहर्निशं संघर्षरतोऽपि अयं कर्मनिष्ठो देवः सदैव कर्मरत एवोपलभ्यते । तथापि पुरा नृपदेवैः प्रतिष्ठितोऽयम् इदानीं समाज-व्याप्तोऽपि भूत्वा तथाविधां प्रतिष्ठां न प्राप्नोति सामाजिकैः, यतो हि सामाजिकेषु सुशिक्षाभावे तथाविधस्य ज्ञानस्य अभावो दृश्यते --- न पुनः स्वकर्मनैपुण्याभाववशात्। समाजेऽस्य कानिचिद् रूपाणि भवन्ति सुपूजितानि, परमर्थकार्श्ययुक्तानि अस्य

रूपाणि यथोचितेन रूपेण पूजितानि न भवन्ति। एतदतिरिक्तम् अनेन आधुनिकेन विश्वकर्मणः कर्माभावोऽपि अनुभूयते येनार्थकार्श्यं वर्ततेऽस्य। कर्माभावापनयनाय शासनेन यन्त्रप्रयोगो वृद्धिं नीयते। परमेवं विधानां विश्वकर्मणां संख्या अतिमहती अस्ति । यदि सैः सर्वैः यन्त्रप्रयोगो भविष्यति तर्हि भाविविश्वकर्मभ्यः कर्मोपलब्धिः यदि असम्भवा नापि भवेत् तथापि निर्मितवस्तूनां विक्रयकर्म अवश्यमेव सर्वथा दुष्करं भविष्यति अथवा अपव्ययतायाः कोटिमेव प्राप्स्यति --- उत्पादनापेक्षा उपभोगस्य परिसीमितत्वात् । अतो नेदं यन्त्रीकरणं विश्वकर्मणां कर्माभावसमस्याम् उन्मूलयिष्यति अपितु वर्धयिष्यत्येव यथा वयमिदानीं प्रत्यक्षत एव अनुभवामः। इयं समस्यापिशाचिनी हस्तोद्योगनियोजनेनैव दूरी भविष्यति नान्यथा। यदा दूरी भविष्यति तदैव विश्वरूपो विश्वकर्मा सुखी भविष्यति ।

एवं परोपकारैकधी विश्वकर्मा वैदिकं देवशिल्पत्वं, पौराणिकञ्च राजशिल्पत्वं विहाय इदानीं नानाकर्मरतान् जनान् अभिव्याप्य वर्तते । अनेनैव क्रियन्ते अहर्निशं सम्पाद्यमानानि विश्वानि कर्माणि । अनया जनसामान्यव्याप्त्या अस्य देवत्वं न विलुप्यते क्षीयते वा, अपितु क्रमः विस्तारमेव भजते । यतो हि आदौ अयं देवः शिल्पगुणैः देवेभ्य एव वन्दनीयो बभूव। पश्चात् तद्गुणानां ख्यातिः, रामकृष्णादिभिः भूमण्डले विस्तारिता, प्रतिमाप्रासादमन्दिरादीनि कार्याणि तेन कारयित्वा। तत्पश्चात् शिल्पाकृष्टैः जनैः स्वकर्मभ्यो निमन्त्रितो बभूव सः, शनैः शनैश्च तेषां हृदयेषु तेन पदं कृतम् । एवं नृपदेवविश्वकर्मा जननृपदेवविश्वकर्मा जातः। सर्वेभ्यः पूजनीयो भवदिति । योऽयमिदानीम् आंशिकरूपेण समाजे विश्वकर्मणः प्रतिष्ठाभावो दृश्यते तेनास्य महिमा देवत्वं वा नापचीयते यतो हि अयं समाजगतो दोषोऽस्ति न च विश्वकर्मणः कर्मगत इति ।

-------00-------

## विश्वकर्मण: कर्मसु विनियोग:

अस्य सूक्तानां मन्त्रसूक्तानां पुत्रधनपुष्टिरक्षणादिषु कर्मसु विनियोगो दृश्यते, येन यत्सुष्टोऽयं देवोऽपि अन्येषां देवानामिव सर्वविधानां कल्याणानां प्रदायक इति ज्ञायते । तथा हि---

## गोपुष्टिकर्मणि

१- " इह यन्तु पशव " इति सूक्तेन गोपुष्टिकाम: अभिनवं पयो वत्स - लालाभिश्रितंपात्य अभिमन्त्र्य अश्नीयात् । तथानेन सूक्तेन गामभिमन्त्र्य दद्यात् । ( अथर्व २।२६)। तथैव अनेन उदपात्रम् अभिमन्त्र्य गोष्ठमध्ये निनयेत् ।

एवं वाक्पयलादने गुग्गुलवणशर्कपिण्डान् प्रक्षिप्य पश्चात् अग्ने: त्रिरात्रं निधाय चतुर्थेऽहनि उद्धृत्य अनेन सम्पात्य अभिमन्त्र्य च अश्नीयात् ।

अत्र उक्तं कौशिकेन । " इह यन्तु पशव: ( २।२६), सं वो गोष्ठेन (३।१४)" इति क्रम्य " पृष्टे: पीयूषं श्लेष्म मिश्रम् अश्नाति गां ददात्युदपात्रं निनयति " इत्यादि ।

## गोदानचौलकर्मसु विनियोग:

" पार्थिवस्य " इति सूक्तेन (अथर्व २।२९) तृष्णातिमेषज्यकर्मणि सूर्योदय काले सूक्तोक्त-प्रकारेण व्याधितम् उपवेश्य मथितं सक्तूदकम् अभिमन्त्र्य पाययेत् ।

" पार्थिवस्य " ( १।२) इति द्वाभ्यां गोदानचौलकर्मण: कुमारस्य मूर्ध्नि व्रीहियवशमीरभिमन्त्र्य प्रक्षिपेत् । सूत्रं हि । " शिवे ते स्ताम् ( ८।२।१४-१५) इति परिदानान्तानि पार्थिवस्य ( २।२९।१-२) , मा० प्र गाम ( १३।१।५६-६०) इति चतस्र: इति कौशिक: ( ७।५)।

## वशाशमनकर्मणि विनियोग:

" य ईशे पशुपति " इति सूक्तेन (अथर्व २.३४) वशाशमनकर्मणि आज्यं जुहुयात् । तद् उक्तं सूत्रे । " य ईशे पशुपति: पशूनाम् इति हुत्वा वशाम् अनक्ति " इति कौशिक: (५।८)।

सर्वलोकाधिपत्य कर्मणि विनियोग:

तथा सर्वलोकाधिपत्यकाम: ' य ईशे पशुपति ' ( अथर्व २।३४) अनेन सूक्तेन इन्द्राग्न्यो: यागम् उपस्थानं वा कुर्यात् ।

तथैव अनेन सूक्तेन इष्टमन्नम् अभिमन्त्र्य ब्राह्मणेभ्यो दद्यात् । सूत्रितं हि-----

' य ईशे ( २।३४), ये भक्षयन्त: ( २।३५) इति इन्द्राग्नी लोककामोऽन्नं ददाति ' इति कौशिक: ( ७।१०)।

पशुयागे विनियोग:

तथैवानेन पशुयागे संज्ञपनार्थं यूपात् प्रमुच्यमानं पशुम् अनुमन्त्रयेत । उक्तं वैताने । ' अथ पशुर्वैष्णवं पूर्णहोममुरु विष्णो ' इति प्रक्रम्य ' य ईशे इति प्रमुच्यमानम् अनुमन्त्रयते ' इति ( २।६)।

दृष्टिदोषनिवारणे सर्वलोकाधिपत्यकर्मणि च विनियोग:

' ये भक्षयन्त: ' इति सूक्तेन ~~बहुजनमध्ये~~ ( अथर्व० २।३५) बहुजनमध्ये भुञ्जानो दृष्टिदोषनिवारणाय अन्नम् अभिमन्त्र्य भुञ्जीत। अत्र सूक्तम् । ' ये भक्षयन्त इति परिषद्यकमन्नम् अन्वीक्षमाणोऽभुञ्जते ' इति कौशिक: ( ५।२)।

तथा सर्वलोकाधिपत्यकामोऽनेन सूक्तेन इन्द्राग्न्योर्यागम् उपस्थानं वा कुर्यात् । ~~सर्वेषु~~

सर्वेषु सवयज्ञेषु विनियोग:

तथा सर्वेषु सवयज्ञेषु अनेन सूक्तेन ( अथर्व० २।३५) पुरस्ताद्धोमान् जुहुयात् । सूत्रितं हि ---

' य ईशे ( २।३४) ये भक्षयन्ति ' ( २।३५) इति प्रक्रम्य ' प्रथमं पशुप्रकरण उत्तरेण सवपुरस्ताद्धोमान् ' इति ( कौ० ७।१०) ।

~~साकमेध~~

साकमेधपर्वणि विनियोग:

साकमेधाख्यपर्वणि ' ये भक्षयन्त ' इत्यनेन वैश्वकर्मणयागानुमन्त्रणं कुर्यात् । उक्तं वैताने । ' कार्त्तिक्यां साकमेधा: ' इति प्रक्रम्य ' वैश्वकर्मणं ये

महायन्ति ' इति ( २।५)।

## वैश्वकर्मणहोमानुमन्त्रणे विनियोगः

तथा अग्निचयने वैश्वकर्मणहोमानुमंत्रणे अस्य विनियोगः । तथा च उक्तं वैताने । ' ये भक्षयन्तः ( २।३५) एतं सधस्थाः ( ६।१२३) इति द्वे येना सहस्रम् ( ६।५।१७) इति वैश्वकर्मणहोमान् ' इति (वै० ५।१२)।

यज्ञस्य चक्षुरित्येषा दर्शपूर्णमासयोः पुरस्ताद्धोमे विनियुक्ता। ' अग्नावग्निः( ४।३६।६) , इदा पूतम् ( ४।३६।१०), पुरस्ताद् युक्तः( ५।२६।१), ' यज्ञस्य चक्षुः ' ( २।३५।४) इति जुहोति ' इत्यादि सूत्रात् ( कौ० १।३) ।

## उपनयनकर्मणि विनियोगः

' आ यातु मित्रः ' इति सूक्तेन ( अथर्व ३।८) उपनयनकर्मणि माणवकं नाभिदेशे संस्पृश्य अनुमंत्रयेत् । सूत्रं हि ---

' दक्षिणेन पाणिना ( नाभिदेशे) संस्तभ्य जपति ' अस्मिन् वसु वसवो धारयन्तु ' ( १।६) ' विश्वेदेवाः वसवः( १।३०), ' आ यातु मित्रः ( ३।८), अमुत्र भूयात् ( ७।५५) ' इत्यादि ( कौ० ७।६) ।

अस्य सूक्तस्य आयुष्यगणे पाठात् ' मेधाजननायुष्यैः जुहुयात् ' ( कौ०७।८) इत्यादिष्वपि विनियोगो द्रष्टव्यः ।

एवमेव नक्षत्रकल्पेऽपि ' आयुष्यः शान्तिः स्वस्तिगण ऐरावत्याम् ' ( न०क० १८) इत्यादिष्वपि अस्य विनियोगः ।

## निर्ऋतिकर्मणि विनियोगः

' अयं ते योनिः ' इति सूक्तेन ( अथर्व० ३।२०) निर्ऋतिकर्मणि शर्करा मिश्रान् व्रीहीन् जुहुयात् ।' अयं ते योनिरिति ( जीर्णकोष्ठात् ) व्रीहीन् शर्करामिश्रान् ' ( कौ० ३।१)इत्यादि कौशिकसूत्रम् ।

## उत्थापनविघ्नशमन कर्मणि विनियोग:

तथा अथोत्थापनविघ्नशमनकर्मणि अनेन सूक्तेन ( अथर्व० ३।२० ) आज्य-समिदादिभि: त्रयोदशभि: अर्थ्य: जुहुयात् । तस्मिन्नेव कर्मणि अस्य सूक्तस्य जपं वा कुर्यात् ।

तथा च कौशिक:। " अयं ते योनि: ( ३।२० ) , आ नो भर ( ५।७ ) धीती वा ( ७।१ ) इत्यर्धर्च उत्थास्यन्नुपदधीत जपति इति ( कौ० ५।५)।

" अयं ते योनि " इत्यनया अरण्योरात्मनि वाग्ने: समारोपणं कुर्यात् ।

सूत्रितं हि ---

" अयं ते योनिरित्यरण्योरग्निं समारोपयात्मनि वा " इति ( कौ०५।४)।

## जातकर्मणि विनियोग:

" अहं रुद्रेभि: " इति सूक्तेन ( अथर्व० ४।३० ) जातकर्मणि शंख पुष्पिकागन्धपुष्पिके पिष्ट्वाभिमन्त्र्य हिरण्यशकलेन प्राशयेत् ।

तथा तस्मिन्नेव कर्मणि अनेन सूक्तेन शंखनाभिं पिप्पलीं च पिष्ट्वाभिमन्त्र्य हिरण्यशकलेन प्राशयेत् ।

मेधाजनन

## मेधाजनन कर्मण विनियोग:

तथा मेधाजननार्थं प्रथमं वाग्व्यवहारं कुरुत: शिशो: मातुरुत्सङ्गे विहितस्य अनेन सूक्तेन (अथर्व० ४।३०) आज्यं हुत्वा तानि सम्पातान् आनयेत् ।

तथा दधिमधुनी एकत्र कृत्वा अनेन सम्पात्य अभिमंन्त्र्य शिशुं प्राशयेत् ।

तथा उपनयनकर्मणि दण्डप्रदानानन्तरम् एतत् सूक्तं माणवकं वाचयेत् ।

## आयुष्यकर्मसु विनियोग:

आयुष्यकर्मोऽपि शंखपुष्पगन्धपुष्पाशनादीनि उक्तानि पंचकर्माणि कुर्यात्।

तथा च कौशिकं सूत्रम् ---

" अहं रुद्रेभिरिति शुक्लपुष्पहरितपर्ण्यै किंस्त्यनाभिपिप्पल्यौ जातरूपशकलेन मातृ स्तनप्रदार प्राशयति। प्रथमप्रवदस्य मातु: उपस्थं तानि सम्पातान्

वानयति । दधिमध्वाशयति । उपनीतं वाचयति । वार्णशतिकं कर्म इत्त ( कौ० २।६)।

तथा उपनयने अनेन सूक्तेन आज्यहोमं कुर्यात् । सूत्रितं हि ----
" उपनयनम् " ( कौ० ७।६) प्रक्रम्य मेधाजननायुष्यैर्जुहुयात् " इति कौ०७।८)।

## अध्यायोत्सर्जनकर्मणि विनियोग:

तथाध्यायोत्सर्जनकर्मणि अनेन सूक्तेन आज्यं हुत्वा रसेषु सम्पातान् आनयेद् । तथा च कौशिक:---

" उत्सर्जनम् " प्रक्रम्य " विश्वेदेवा: (१।३०) , अहं रुद्रेभि: ( ४।३०), सिंहे व्याघ्रे ( ६।३८), यशो हवि: ( ६।३६)" इत्यादि ( कौ०१४।३)।

अशाम्यकर्मणि वषायाश्चत्वारि खण्डानि कृत्वा " समिद्धो अग्र " इति सूक्तेन ( अथर्व० ५।१२) एकं खण्डं जुहोति ।

## गर्भाधानकर्मणि विनियोग:

गर्भाधानाख्ये कर्मणि " पर्वताद् दिव: " इति सूक्तेन ( अथर्व०५। २५) आगमकृशरं चरुद्वयं श्रपयित्वा सम्पात्य अभिमन्त्र्य द्वितीयं चरुं युगच्छिद्रेण सम्पात्य अभिमन्त्र्य आशयति ।

तथा तत्रैव कर्मणि केलूनांश पलाशत्सरुन्निवृते निघृष्य " पर्वताद् दिव: " इति सूक्तेन अभिमन्त्र्य शिश्ने आधाय ततो मैथुनं करोति।

तदुक्तं कौशिकेन ---

" पर्वताद् दिव इत्यागम कृशरमाशयति। युगलकर्मीना सम्पातवन्तं द्वितीयम् । केलूनांश्च पलाशत्सरुन्निवृते निकर्ष्याधाय शिश्ने ग्रामं प्रविशति " इति( कौ०,४।११) ।

पुष्टिकाम " ऊर्ध्वा अस्य " इति सूक्तेन ( अथर्व०५।२७) अग्न मन्थाकारस औदुम्बरं कृत्वा आज्यं जुहोति ।

तथा संस्थाता आगमशष्कुलीरविनिल्य अनेन सूक्तेन सप्तशष्कुलीरग्नौ दत्त्वा आज्यं जुहोति। शेषा: शष्कुली: कर्णे: ददाति । तदुक्तं कौशिकेन --

" ऊर्ध्वा अस्येति बाष्पंणड औदुम्बरं मन्थप्रलिप्ता अभि जुहोति । असंस्याता अधिनिल्य सप्तागम शष्कुली " इति कौशिक: ( ३।६)। प्रतिग्रहोपार्जन द्रव्येण कृता: शष्कुल्य आगमशष्कुल्य: ।

तथा स्नानकर्मणि अस्य सूक्तस्य विनियोग उक्त: ।

ज्योतिष्टोमे विनियोग:

" यद्गूंषि यज्ञे " इति सूक्तेन ( अथर्व० ५।२६) नवशालायां पुष्टिकामो घृतं मधुमिश्रं जुहुयात् । तथा च सूत्रं ---

" यद्गूंषि यज्ञे " ( ५।२६) इति नवशालायां मधुसर्पिमिश्रं जुहोति ।

ज्योतिष्टोमे " यद्गूंषि यज्ञे " इति सूक्तेन आज्यं जुहोति । " यद्गूंषि यज्ञ इति च " इति वैतानसूत्रात् ( ३।६)।

दायादविभागकर्मणि विनियोग:

" त्वष्टा मे " इति सूक्तेन [illegible] ( अथर्व० ६।३।३) दायादविभागकर्मणि पुष्ट्यर्थं सरूपवत्साया: गोदुग्धे पक्वम्, ओदनं सम्पात्य अभिमन्त्र्य अश्नीयात् ।

तथा तत्रैव कर्मणि अनेन सूक्तेन धनुर्ज्यां सम्पात्य अभिमन्त्र्य बध्नीयात् ।

तथा तत्रैव कर्मणि दण्डं सम्पात्य अभिमन्त्र्य विसृज्य धारयेत् ।

तथा च आह कौशिक: ----

" त्वष्टा मे इति प्रातर्विभक्ष्यमाणोऽश्नाति। ज्यां बध्नाति। दण्डं सम्पातवन्तं विसृज्य धारयति।( कौ०३।६)।

पुष्ट्यर्थं चित्राकर्मणि विनियोग:

तथा पुष्ट्यर्थं चित्राकर्मणि अनेन सूक्तेन वृक्षशाखादिसम्भारान् सम्पातयेत्।

" त्वष्टा इति प्रातर्विमच्यमाणः " इति प्रक्रम्य " सूक्तयोः चित्राकर्म।
निशायां सम्भारान् संपातवतः करोति " इति हि कौशिकं सूत्रम् ( ३।६)।

<u>आवर्तद्वयजनने तच्छान्त्यर्थम् विनियोगः</u>

तथा च कुमारस्य कुमार्याः वा मूर्ध्नि आवर्तद्वयजनने तच्छान्त्यर्थम्
अनेन सूक्तेन आज्यं जुहुयात् । सूत्रितं हि ---

" कुमारस्य कुमार्याः वा द्वावावर्तौ मूर्धन्यौ
भवतः " इति प्रक्रम्य होमार्थं कश्चिन मन्त्रान् पठित्वा आज्यं जुहुयात्। तथा च
सूत्रम् --- " त्वष्टा मे दैव्यं वचः " इति कौशिकः ( १३।३२)।

" यं परिहस्तमिति " सूक्तेन गर्भाधाने कंकणादिकं सम्पात्य अभिमन्त्र्य
स्त्रिया हस्ते बध्नीयात् । ( अथर्व०६।८१)।

" वायुरेनाः " इति सूक्तेन पुष्ट्यर्थं चित्राकर्मणि वृक्षशाखादिसम्भारान्
सम्पातयेत् । ( अथर्व ६।१४१।१)।

तत्रैव कर्मणि " वायुरेनाः " इति ऋचा प्रभाते उदकधारोपेतया शाखया
गां परिक्रामयेत् । तथा च आह कौशिकः ---

" वायुरेना इति सूक्तयोश्चित्राकर्मनिशायां
सम्भारान् सम्पातवतः करोति । अपरेद्युः वायुरेना इति शाखयोदकधारया गाः
परिक्रामति ।( कौ० ३।६)।

<u>आयुश्रिपुष्टिकर्मसु विनियोगः</u>

आयुश्रिपुष्टिकामः " सोमेन पूर्णं " , " बृहस्पतिः " इत्येताभ्याम्
ऋचाभ्यां त्वष्टारं यजेत् । ( अथर्व० ६।४।६,१७)

<u>गोष्ठकर्मणि विनियोगः</u>

प्रजापतिश्च इति सूक्तस्य गोष्ठकर्मणि विनियोगः । " प्रजा-
पतिरिति गोष्ठकर्मणि " इत्यादि सूत्रात् ( कौ० ३।२)।

### शान्त्युदकाभिमंत्रणादौ विनियोगः

"अग्निं ब्रूमः" इत्यादिसूक्तद्वयम् अर्थसूक्तम्। तस्य बृहद्गणे लघुगणे च पाठात् शान्त्युदकाभिमंत्रणादौ विनियोगः। ( अथर्व० ११।८।)।

### सर्वभैषज्यादि कर्मसु विनियोगः

अस्यार्थसूक्तस्य "मुञ्चन्तु मा" ( अथर्व० ११।८।७) ,भवशर्वाविदम् ( अथर्व०११।८।६) , या देवीः पञ्च (अथर्व० ११।८।२२), यन्मातली रथक्रीतम् ( अथर्व० ११।८।२३) इत्येतास्वतस्रः ऋचो वर्जयित्वा सप्तप्रतीके अंहोलिङ्गगणे पाठात् "अनुक्तान्यप्रतिषिद्धानि स्वस्त्ययन भैषज्यानाम् अंहोलिङ्गाभिः" ( कौ०४।८) इत्यादिषु सर्वभैषज्यादिकर्मसु गणप्रयुक्तो विनियोगोऽनुसन्धेयः।

### हस्तिरथदानेषु विनियोगः

तथा "हस्तिरथदानानुक्रमं वक्ष्ये" इति प्रक्रम्य उक्तं परिशिष्टे। तस्मात् सर्वेषु दानेषु अनुक्तविधिकेषु च अग्निं ब्रूम इति सूक्तेन आज्यतंत्रेण होमयेत् ( प० १४।१)।

### ब्रह्मजपयज्ञे विनियोगः

"यन्मन्युर्जायाम्" इत्यादिसूक्तत्रयम् अर्थसूक्तम्। अस्य सूक्तत्रयस्य ब्रह्मजपयज्ञे विनियोगः। अनेन च सूक्तत्रयेण भाट्‌कौशिकस्य शरीरस्य मध्ये आत्मत्वेन प्रविष्टं ब्रह्म उपदेदयन् उक्तव्यधिकरणभूतस्य तस्य शरीरस्य तत्साधनभूतानाम् इन्द्रियाणां च देवानां प्रश्नप्रतिवचनरूपेण उत्पत्तिम् अभिवत्तुः तदुपायभूतां सृष्टिं प्रश्नप्रतिवचनाभ्याम् उपोद्घातयति "यन्मन्युः" इति द्वयेन।

### अन्नप्राप्तिकर्मणि विनियोगः

व्रीहियवाधान्यकामो "यस्यां वेदिं परिगृह्णन्ति" (अथर्व० १२।१।१३) इत्यृचा पृथिवीमुपतिष्ठते।

## पुत्रधनारोग्यादिकर्मसु विनियोग:

पुष्टिकाम: पुत्रधनारोग्यादिकर्मफलप्राप्त्यर्थं 'यामन्वैच्छद्धविषा' इति ( अथर्व० १२।१।६०-६३)। चतसृभिराज्यंजुहोति ।

'उदेहि वाजिन्' इत्येव सूक्तं ( अथर्व० १३।१) याज्ञिकास्तु वक्ष्यमाणप्रकारेण विनियुञ्जन्ति। तथा --

अर्थकाम: 'उदेहि वाजिन्' इत्यादिभि: विंशत्यृग्भिरभिमन्त्र्य आदित्यं उपतिष्ठते । तथा अर्थस्थापनकाम उक्तविंशत्यृग्भि: स्नानं कृत्वा उपतिष्ठते ।

## अर्थसिद्धिकर्मणि विनियोग:

तथा अर्थसिद्धिकाम: अहतवस्त्रपरिधानं कृत्वा उक्ताभि: ऋग्भिरुपतिष्ठते।

तथा अर्थो मम सिद्ध्यताम् एवं काम: ताभि: ऋग्भिर्वस्त्रम् अभिमन्त्र्य परिधापयति ।

## विद्रावणादिविषये शमनकर्मणि विनियोग:

तथा विद्रावणादिविषये शमनकाम:उक्ताभि: ऋग्भि: वस्त्रम् अभिमंत्र्य ददाति। सूत्रितं हि ---

'उत्तमेन ( ६।६२) वाचस्पतिलिङ्गाभिरुपमन्त्र्य उपतिष्ठते । स्नातो हत वसनो निवत्साहतम् आच्छादयते ददाति' इति ( कौ०५।५)। उदेहि वाजिन्निति विंशत्यृचो वाचस्पतिलिङ्गा इति केशव: ।

(अथर्व०१४।१।५३) इमां पठित्वा अहतेन वाससा कन्यां ( विवाहावसरे) तामाच्छादयति।

## राज्ञ:शय्याप्रवेशनकर्मणि

तत्र 'शं न इन्द्राग्नी' इति प्रथमसूक्तस्य अहरह: पुरोहितेन कर्तव्ये राज्ञ: शय्यागृहप्रवेशनकर्मणि शान्त्यर्थंजपे विनियोग: । (अथर्व० १९।१०)। अथातो रात्रीसूक्तानां ( विधिम्) अनुक्रमिष्याम: इति प्रक्रम्य उक्तं परिशिष्टे । 'शान्ता द्यौरिति जपित्वाराजानं वासगृहं नयेत्' इति( प० ४।५) । अत्र शान्ता द्यौरित्येकेन

शान्त्यर्थप्रतिपादकं समनन्तरमिदं सूक्तद्वयं गृह्यते । यत्रैकेन प्रतीकेन समानार्थं समानदेवत्यं समानार्षं वा समनन्तरं सूक्तं गृह्यते तदर्थसूक्तम् इति अथर्वणां परिभाषणात् ।

तथा अनेन सूक्तत्रयेण 'शान्ता द्यौः' इति पूर्वेण च तुलापुरुष-महादाने आज्यहोमं कुर्यात् । 'अथातस्तुलापुरुषविधिं व्याख्यास्यामः' इति प्रक्रम्य उक्तं परिशिष्टे । 'प्राक्तन्त्रम् आज्यभागान्तं कृत्वा महाव्याहृतिसावित्री शान्तिब्रह्मजज्ञानम् इति हुत्वा' इति (प० ११।१)। अत्र शान्तिपदेन शान्त्यर्थप्रतिपादकम् इदं सूक्तत्रयं पूर्वं च गृह्यते ।

अस्य सूक्तत्रयस्य शान्तिप्रतिपादकत्वेन शान्तिगणे पाठात् 'आयुष्यः शान्तिः स्वस्तिगण ऐरावत्यात्' (न०क० १८)। इत्यादिषु विनियोगो द्रष्टव्यः।

'अग्निर्मा पातु' इति सूक्तद्वयस्य (अथर्व०१६।१७-१८सू०) रात्रौ राज्ञः शय्यागृह प्रवेशनार्थं पुरोहितेन कर्तव्ये पिष्टमयरात्रिप्रतिमादिसमर्चनकर्मणि प्रतिदिशं शर्कराचतुष्टयप्रक्षेपानन्तरं राजानम् अधिष्ठापितायाः पञ्चम्याः शर्करायाः प्रतिदिशं क्षेपे विनियोगः ।

अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह ।
अर्चितां गन्धमाल्येन स्थापयेत् तस्य चाग्रतः ।।

इति प्रक्रम्य (प०४।३)उक्तं परिशिष्टे । 'अभयं (१६।१५।५ अथर्व०) इत्यृचा चतस्रः शर्कराः प्रदक्षिणं प्रतिदिशं क्षिपेत् । सह्यस्मान् आ तिष्ठ (२।१३।४) इति पञ्चमीम् अधिष्ठापयेत् । न तं यक्ष्माः (१६।३८) स्तु, देवः (१६।३६) इति गुग्गुलकुष्ठधूपं दद्यात् ।यस्ते गन्धः(अथर्व० १२।१।२३-२५) त्र्यायुषम् (अथर्व०५।२८।७) इति भूमिं प्रयच्छेत् । दूष्या दूषिरसि ((अथर्व०२।११।१) इति प्रतिसरम् आबध्य तां शर्कराम् अग्निर्मा पातु वसुभिः पुरस्तात् (१६।१७) इति प्रतिदिशं क्षिपेत् (पं० ४।४) इति ।

क्रव्यादशमने विनियोगः

(अथर्व० १२।२) अत्र क्रव्यादं घोरस्वरूपमग्निम् अनुलक्ष्य सूक्तं प्रवर्तते । न केवलं क्रव्याच्छवदाहे श्मशानम् अत्ति अपि तु घोरत्वात् यक्ष्मादीन् बहून् रोगान्

मृत्युञ्च बहुविधम् आवहति। तथैव नानापत्कारको भवति । तास्ता आपदस्तांस्तान् रोगान् तं च मृत्युं सूक्तकर्ता प्रार्थनया परिहारयति। अपि च क्रव्यादो यः घोरं रूपं तेन नः शत्रून् मारयित्विति माध्यते । सर्वाणि पापानि क्रव्यात् अपहरत्वित्या-शास्ते । तथैव क्रव्यादो नाशाय गार्हपत्यस्याग्नेः प्रार्थना । क्रव्यादोऽग्नेर्ये पर्युपासकास्ते नाशमाप्नुवन्तीत्याह ।

साम्प्रदायिकाः क्रव्याच्छमने विनियुञ्जते। क्रव्यादं शमयिष्यन् क्रव्या-च्छमनकामः कौशिकोक्तप्रकारेण कर्म करोति । तत्रार्थं " पिङ्गमग्निं शमयिष्यन् ज्येष्ठस्य चाविभक्तिन्: " इत्यादि नवमेऽध्याये चतुर्थकण्डिकां तावत् प्रपंचितं द्रष्टव्यम्।

उक्तसूक्तानां येषु कर्मसु विनियोगो दृष्टः, श्रीसायणानुसारं, तेष्वेव सर्वकर्मसु तत्र सूक्तवाच्यमंत्राणामपि विनियोगोऽवगन्तव्य इति ।

अथास्य मन्त्राणां स्वतन्त्ररूपेण भिन्नकर्मसु विनियोगः

वैश्वकर्मणहोमे विनियोगः

" य इमा विश्वा भुवनानि जुह्वत् " इत्यस्मिन् अनुवाके, " विश्वकर्मा ह्यजनिष्ट " विश्वकर्मा मनसा ", यदीभूमिं जनयन् विश्वकर्मा ", विश्वकर्मन् हविषा वावृधानः " , " विश्वकर्मा हविषा वर्धनेन , " वाचस्पतिं विश्वकर्माणमूतये " " य इमे द्यावापृथिवी जनित्री " इत्यादिभिः वचनैः विश्वकर्मणो वैश्वकर्मणहोमे विनियोगः श्रूयते ।

स्वयमातृण्णोपधाने विनियोगः

" विश्वकर्मा दिशां पतिः " इत्यस्य अनुवाकस्य हिरण्येष्टका- स्वय-मातृण्णोपधानेविनियोगः।

साकमेधादियाज्येषु विनियोगः

" ...अग्निर्वृत्राणि जङ्घनद् " इत्यस्मिन् अनुवाके " विश्वकर्मन् हविषा वावृधानो, " " विश्वकर्मन् हविषा वर्धनेन , " इति श्रुत्वा। अन्यत्र च

"धाता रातिः सवितेदं जुषन्ताम्, " "त्वष्टा युनक्तु बहुधा" "एतं भागं परि ददामि" "भूताभिः एताभिः ऋग्भिः विश्वकर्मणे शाकमेधादियाज्येषु विनियोगोऽवगन्तव्यः ।

विश्वज्योतिरादीष्टकोपधाने विनियोगः

" बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे " इत्यस्मिन् चतुर्थेऽनुवाके " विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे " ( यजुः १४।१२।१४) इति कृत्वास्य विश्वज्योतिरादीष्टकोपधाने विनियोगः।

तृतीयचितौ स्वयमातृण्णाद्युपधाने विनियोगः

" इन्द्राग्नी अव्यथमानामिष्टकां " इत्यस्य षष्ठोऽनुवाकस्य उक्तकर्मणि विनियोगः " विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे " ।

उत्तरवेदिनिर्माणे विनियोगः

" विश्वकर्मा त्वाऽऽदित्यैः" " विधायनी मेऽसि " इत्यस्य एकादशानुवाकस्य उत्तरवेदिकर्मणि विनियोगः ।

वयस्याख्येष्टकोपधाने विनियोगः

" अविर्वयस्त्रिष्टुप् छन्दो " इत्यस्य पञ्चमानुवाकस्य द्वितीयचितौ वयस्याख्येष्टकोपधाने अस्य " विश्वकर्मा वयः " इति कृत्वा विनियोगो दृश्यते ।

उक्तविनियोगाः तैत्तरीयसंहितायामनुसन्धेयाः सन्ति अन्तरेण सह ।

शान्तिकर्मसु विनियोगः

सर्वविधशान्तिकर्मसु अस्य यागारम्भे " शं न इन्द्रो वसुभिः " इत्यादिभिः वचनैः विनियोग आम्नायते ।

अन्नप्राप्तिकर्मणि

अन्नकामो जनः " य इमा विश्वा " ( यजुः ३४।५८) एतैः वचनैः यजेत विश्वकर्माणम् ।

## रक्षाकर्मसु विनियोग:

विघ्नारिपिशाचादिभ्य: परित्राणमिच्छमानो यजमानो "घोरा कृण्वो नमो" ( अथर्व० ३।३५।४), "विश्वकर्मा मे त्वष्टा कृणोतु:" ( अथर्व० १६।१७।७), "स बोधि सूरर्मघवा" (यजु: १२।४३), "वाचस्पतिं विश्वकर्माणमूतये" ( ऋ० १०।८१।७) इत्यादिभि: ऋग्भि:विश्वकर्मणो विनियोगो रक्षाकर्मसु विहित:।

## आयुवर्धनकर्मणि विनियोग:

"आयुरस्मै धेहि" ( अथर्व० २।२६।२), "त्वष्टा जायामजनयत्" ( अथर्व० ६।७८।३), "आरोहतायुर्जरसं वृणाना" ( अथर्व०१२।२।२४) इत्येतै: मन्त्रै: आयुकामो जनो यजेत् विश्वकर्माणम् ।

## धनप्राप्तिकर्मसु विनियोग:

विविधानि धनानि कामयमानो नर: "गोसनिं वाचमुदेयं वर्चसा" ( अथर्व ३।२०।१०), "ता नो रासन्रातिषाचो" ( ऋ० ७।३४।२२), "देव त्वष्टर्यद्ध" (ऋ० १०।७०।६) "तन्नस्तुरीपमद्भुतं" ( अथर्व० ५।२७।१०)। एतै: मन्त्रै: विश्वकर्माणं प्रसादयेत् इन्द्रादीनां मन्त्रै: इन्द्रादिभि: सार्द्ध ।

## पुष्टिकर्मसु विनियोग:

पुष्टिकामो जन: "तन्नस्तुरीपमद्भुतम" ( ऋ० १।१४२।१०), "शिव स्त्वष्टारिहागहि" ( ५।५।६) गोसनिं वाचमुदेयं ( अथर्व ३।२०।१०), तन्नस्तुरीपमध पोषयित्नु" (ऋ० ३।४।६), "पातां नो देवाश्विना शुभस्पती" ( अथर्व ६।३।३), "सं वर्चसा पयसा सं" ( अथर्व० ६।५३।३), एत: वेदवाक्यै: विश्वकर्माणं यागे हविर्दानै: सम्पूज्य प्रसादयेत् ।

## शत्रोर्वृद्धिकरणे विनियोग:

वृद्धिकामयमानो "इदं न हि त्वा" इत्यनया ऋचा एनं देवमर्चयेत् ( ऋ० १।५२।७) ।

## प्रजाकर्मणि विनियोग:

" तन्नस्तुरीपमध पोषयित्नु ", ( ऋ० ३।४।६), " आ यन्न पत्नी: " ( ७।३४।२०)। "देवस्त्वष्टा सविता " ( ऋ० ३।५५।१६) " आयुरस्मै धेहि " (अथर्व० २।२६।२), ये बध्यमानमनु दीध्याना " ( अथर्व० २।३४।३), त्वष्ट: श्रेष्ठेन रूपेण " ( अथर्व० ५।२५।११), त्वष्टा वीरं देवकामं जजान ( यजु: २९।६ ), यंपरिहस्तम् " ( अथर्व० ६।८१।३) इत्यादिभि: मन्त्रै: विश्वकर्मण: प्रजाजननकर्मणि विनियोगोऽनुसन्धीयते ।

## वृष्टिकर्मसु विनियोग:

" यज्ञपतिमृषय एनसाहु: " ( अथर्व० २।३५।२), " तन्नस्तुरीपमद्भुतं पुरुवारं " ( ऋ० १।१४२।१०) एताभ्यां वचनाभ्यामस्य देवस्य वृष्टिकर्मणि विनियोगो ज्ञायते ।

## पापापाकरणे विनियोग:

" अदान्यान्त्सोमपान् मन्यमानो ", " यज्ञपतिमृषय एनसाहु: " ( अथर्व० २।३५।२-३), " धूर्मोदेवं सवितारं " ( अथर्व०११।६।३), " त्वष्टा दुहित्रे वहतुं ( अथर्व० ३।३१।५) एतै: मन्त्रै: विश्वकर्मण: पापा पाकरणकर्मसु विनियोगो भाव्यते ।

## पशुवर्धनकर्मणि विनियोग:

" त्वष्टा रूपाणि हि प्रभु: " ( ऋ० १।१८८।६) इत्यनेन मन्त्रेण पशुधनवृद्धिकामो यजेद वाचस्पतिं विश्वकर्माणम् ।

## पौरोहित्यकर्मणि विनियोग:

यस्य वहु: प्रभृतिर्मुखं " ( अथर्व०२।३५।५) इत्यनेन वचनेन अस्य पौरोहित्य-कर्मणि विनियोगोऽनुसन्धीयते ।

## तक्षणकर्मणि विनियोगः

"अहन्नहिं पर्वते शिश्रियाणं" (ऋ० १।३२।२), "इदं न हि त्वा" (ऋ०१।५२।७), "अस्मा इदु त्वष्टा तक्षद्वज्रं" (१।६१।६), "अनवस्ते रथमश्वाय तक्षन्" (५।३१।४) इत्येतैः, अन्यैश्च वचनैः अस्य देवस्य वज्रतक्षणकर्मसु विनियोगोऽवगम्यते।

## रथप्रेरणे विनियोगः

"उत स्य देवो भुवनस्य" (२।३१।४) इत्यनेन वचनेन अस्य रथप्रेरण-कर्मणि विनियोगो विज्ञायते।

## रूपपिंशने विनियोगः

"यदा त्वष्टा व्यतृणत्" (अथर्व० ११।८।१८), "य इमे द्यावापृथिवी" (अथर्व० ५।१२।६), "विष्णुर्योनिं कल्पयतु", "सोमेन पूर्णं कलशं बिभर्षि त्वष्टा श्रेष्ठेन रूपेण" (अथर्व० ५।२५।५, १०, ६।४।६) एतैः वाक्यैः विश्वकर्मणो रूपपिंशनकर्मसु विनियोगः समुपलभ्यते।

## पथ्यहोमकर्मणि विनियोगः

अथापारवृद्धिं इच्छन् जनः त्रिरात्रोपोषितः पथ्यहोमं जुहुयादिदमहमिमं विश्वकर्माणमिति गोभिलीये गृह्यसूत्रे (४।८।१६)।

## शालाकर्मणि विनियोगः

कर्तारं च विकर्तारं विश्वकर्माणमोषधींश्च वनस्पतीन्।
एतान् सर्वान् प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा॥
(वार०गृह्य० ३।४।८)।

इत्यनेन शालाकर्मणि विश्वकर्मणो विनियोगः श्रूयते।

## प्लवकर्मणि विनियोगः

नदनदीः तर्तुमिच्छन्तो जनाः "सर्वेषां पित्रे विश्वकर्मणे दत्तं हविर्जुषन्तामिति" जपित्वा पारं गन्तुमर्हन्ति ( (कौ०गृ० ३।१३।१५, शां०गृ० ४।१४।३)।

## आरामप्रतिष्ठाकर्मणि विनियोगः

अथारामेऽग्निमुपसमाधाय ।१। स्थालीपाकं श्रपयित्वा।।२।। विष्णवे स्वाहा, इन्द्राग्नीभ्यां स्वाहा, विश्वकर्मणे स्वाहेति याम् वो नर इति प्रत्यृचं जुहुयात् ।। ३।।

( शाङ्ख० ५।३।३)।

एवं नानाकर्मसु अस्य मन्त्राणां विनियोगो दृश्यते यागेषु येन यजमानो मोदमनुभवति स्वकर्मसाफल्यम् अनुभूय ।

------0------

## विश्वकर्मण: कार्याणि शिल्पानि च

### सर्वशिल्पजनको विश्वकर्मा :

कृतानि क्रियमाणानि कर्तव्यानि तथैव च ।
यानि कर्माणि विश्वेऽस्मिन् तानि वै विश्वकर्मणा ॥

वेदा: वै पुरातना:, अशेषज्ञानोदधयश्च सन्ति । अत: सर्वासां विद्यानां , देवानां तेषाञ्च कर्मणाम् आविष्करणानि तेष्वेव अन्विष्यन्ते । अतोऽस्य देवस्यापि कर्माणि आदौ तत्रैव अन्वेषणीयानि भवन्ति। तावद् ऋग्वेदेऽस्य कृत्यानि एवमाम्नायन्ते ------

देवदेवो विश्वकर्मा विश्वानि भूतजातानि तेषु तेषु कर्मसु मनोयोगेन नियोक्ष्यति यथा होता हविर्दानेन देवान् भोगकर्मणि । कर्मयोजकत्वादसौ न: पिता भवति। यथा पुत्रे पिता स्वांशेन तिष्ठते तथैवायं देवोऽपि कर्मकर्मिणां हृदयेषु सततरूपेण विराजते । ऋषिकल्पोऽयं जनान् शिल्पानि शिक्षयति। विश्वकर्मा स्वकृतीनां विनिमये न केवलं द्रविणमेव इच्छति अपितु जनेभ्यो वृष्ट्यर्थं संरक्षणरूपाशीर्वचनान्यपि । अनेनैव सर्वप्रथमं शिल्पै जगत् परिपूरितम् ।धनादिदृष्ट्या अवरेषु शिल्पज्ञानरूपेण प्रविशति, येन ते वरेषु पदं लभन्ते । विश्वकर्मद्रष्टासौ स्वमहिम्ना भौतिकानि दिव्यानि च शिल्पानि जनयति । परमेतानि शिल्पानि अयं कुत्र केनोपादानेन कथञ्च निर्माति कोऽपि न जानाति ।

विश्वतोमुखबाहुपदचक्षु: विश्वकर्मेत्याम्नायते --- सर्वेषां श्रमिकाणां तद्रूपत्वात्। एकोऽपि भूत्वासौ श्रमतकै: स्कन्दान् उत्पादयित्वा द्यां पूरयति पतत्रैश्च पृथिवीमिति । यद्वा बाहुपदं श्रेष्ठत्ववाचकं पतत्रै इतीदं पदम् अवरत्ववाचकमिति । विश्वकर्मा देवाभिलाषं क्रियाभीरुंश्च वेमैः अतिक्रम्य वर्तते इति भाव:। एक एव विश्वकर्मा द्युलोकं देवोचितै: उत्कृष्टकृतिभि: अलङ्करोति पृथिवीञ्च अपेक्षाकृतावरै: नरोचितै:शिल्पै:। एवमनयो: लोकयो: भेद: क्रियते नेन ।

### सर्वेषु व्याप्ति:

विश्वकर्मा सर्वविधानि शरीराणि --- परावरमध्यमानि --- व्याप्नोति ज्ञानकर्मभि: । धामानीति शिल्पनामानि । कर्तु: आत्मा कृतिषु वर्तते । अतस्ता

स्वास्य आवाया: उच्यन्ते । यद्वा तामिरेव शिल्पिनो गृहस्थितिरिति । यान्यस्य शिल्पानि वरावरमध्यमकोटिपदार्थैः निर्मितानि भवन्ति तानि अतौ मनसा कर्मरतजने-भ्यो ददाति --- त्रिविधोपादानकारणैः --- बाहुभ्रुवाकृतिभि:--- शिल्पकर्मज्ञानानि शिक्षायति शिल्पसामर्थ्यं वा ददातीति । हविर्दानाभ्यां असौ विश्वकर्मा नाना-शिल्पयज्ञैः स्वयमेव स्वशरीरं वर्धयति ।

विश्वकर्मा स्वशिल्पैः यशः कायं वर्धयन् तेन द्यामुत च पृथिवीं पूजयति। तेन यशसा द्यावापृथिव्यौ अपि पूजितौ भवतः--- शिल्पाभावे तयोः महत्त्वहीनत्वात्। शिल्पकर्मबाधकाः दुष्टजनाः अपि कृताः अभितः पश्य मोहं गच्छन्ति। शिल्पकर्म-रतजनस्य विरोधिनोऽपि तस्य कृतीः दृष्ट्वा मुग्धाः भवन्ति प्रशंसन्ति च । एवंविधाय शिल्पिने धनानि प्रेरयन्ति तस्य उत्कृष्टाः कृतयः । अत्राम्नायते शिल्प महत्त्वं तद्गुणानाम् ।

मनोगत्या सह यस्य हस्तावपि कर्मरतौ भवतः तथाविधो विश्वकर्मा वाचस्पतिः ( यदुच्यते तदेव क्रियतेऽनेन इति) भवति। तं जना ऊतये ( दुर्गशस्त्रा-स्त्रनिर्मितिद्वारा रक्षणाय), वाजे ( कृषियन्त्रैभ्योऽन्नोत्पादनाय) च आह्वयन्ति के यज्ञेषु--- उत्सवेषु । असौ साधुकर्मा कृतिभिः विश्वं सुखयति। अतोऽयं जनरक्षको भवति । एतस्मै विश्वकर्मणे उत्सवेषु विश्वानि भोज्यानि दीयन्ते ।( १०।८१।१-७)।

प्रसन्नोऽयं कृतिभिः पूरयति देशम्

विश्वकर्मा स्वकर्मभिः आत्मनो देशस्य पिता भवति। मनसा धीरोऽ-यमेव घृतोपलक्षितं धनं जनयति। अन्यथा कर्मवैशिष्ट्याभावे तन्न भवति। अस्य कृतीनाम-भावे द्यावापृथिव्यौ अन्तरधारणशीलौ भवतः --- क्वचिदपि स्थैर्यं न भजेते । यद्वा कृत्यभावे एतौ जनपानो पदं न लभेते इति भावः। स्थानपरीक्षणानन्तरं यं देशं ( भूस्वर्गलोकयोः) विश्वकर्मा स्वकृतिभिः अलङ्करोति तद्देशो देव मानववसतिभिः दृढतां भजते, कर्मभिश्च प्रसिद्धिं तमधिगच्छति ।

समुचितादराभावे अनादरे वा सति विमनोऽयं कर्म विहाय गच्छति ( यथा कान्याध्यभिधाया: प्रसङ्गेन ज्ञायते )। एक एव स: कृतीनां कर्ता तासां व्यवस्थापक: प्रतिष्ठापकश्चास्ति। शिल्पाद्भ्रष्टात् उत्तमो विश्वकर्मा यै: जनै: सम्यार्णि-म्योऽपि पर इति मन्यते तेषां गेहात् असौ अन्नै: पूरयति । येषु गृहेषु शिल्पानां समादरो भवति तेषु जना: अन्नै: संपद्यन्ते ।असौ विश्वकर्मा अस्माकं विश्वकर्मणां पिता, जनिता, विधाता च भवति यतो हि तेन दत्या विद्ययैव वयं विश्वकर्मत्वं गता:, भाग्यवन्तो जाता:, जीविकोपार्जनेन पालिताश्च भवाम: । तथा च स्मृतिकार:-

जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितर: स्मृता: ।।

विश्वकर्मा सर्वविधशिल्पस्थानानि जानाति । सर्वेषु लोकेषु स एव याति शिल्पकर्मणे, अतस्तेभ्य: सुपरिचितोऽस्ति। पौरोहित्यकर्मणि रत: स इन्द्रादीनां गुणकर्मानुरूपाणि नामानि चकार । देवत्वं प्राप्तोऽसौ ऋषिभि: हविरादिभि: पूजितो भवति ।

कृतिहीने द्यावापृथिव्यौ नि:सारे । अत: कृतिभि: एतयो: अलङ्कर्ता विश्वकर्मा एताभ्यां पर इत्याम्नायते । देवासुरेषु कृतिवैभवमपि तत्कृतमेवास्ति । अतोऽयं तेभ्योऽपि पर इति श्रुत:। विश्वकर्मणा निर्मितं गर्भगृहं प्रथमम् ऋषिभि: धृतं यद्देवा: अपि ददृशु: । अस्मिन् गर्भगृहे देवा: सम्मिलिता: भवन्ति। इदं गर्भगृहम् अजमित्यनेन संज्ञयापि ज्ञायते । अत्र अ इतिवाद् नाम । ज इत्यनेन गति: वेगो वा उच्यते। वायुगत्या समुद्रस्य निम्नोन्नततलेषु अपि सञ्चरणसमर्थं गर्भगृहमजमित्यनेन नाम्नापि उच्यते इति भाव:। अस्य गृहस्य मध्ये निर्मितौ कदौ विश्वभूतप्रतिनिधयो वर्तन्ते । नीहारेण प्रावृता: जल्प्या, नासुतृप उक्थशासो जीवा: शिल्पज्ञानरूपेण अन्त:स्थं विश्वकर्माणं ज्ञातुं न शक्नुवन्ति, येन ते विश्वकर्मत्वं प्राप्ता:।(१०।८२।१-७)।

चैत्यशालाकर्मनिपुणो विश्वकर्मा: ----

अथेतरवेदपुराणेषु कृतानि विश्वकर्मण: कार्याणि ।

तत्रादौ यज्ञशालाया: निर्माणम् । नैमिषीयानाम् ऋषीणां सत्रेऽसौ विश्वकर्मजनको हिरण्मयं यज्ञवाटं चक्रे ( वायु० १।२।१७, ब्रह्मा०१।१।२।१८-१९) ।

याज्ञवल्क्य सुतस्य कात्यायनस्य आश्रमो हाटकेश्वरक्षेत्रेऽनेन कृतः( स्क०ना० ६। १३२। ३३-३४)। श्वर्णादिघटितं सर्वभूतोपकारकं, रमणीयं, सर्वकार्येषु सर्वप्राणिसुखावहं रम्यं तपोवनं तेन निर्मितम्( वाम्न०४२।६-१०)।महावंशस्य अष्टविंशतितमे अध्याये अस्य योगेन अद्भुतविधिना इष्टिकाः निर्मिताः । अत्रैव त्रिंशत्तमे अध्याये नृपेण चैत्य-स्वरूपपृष्टो विश्वकर्मा स्वर्णपात्रे जलमादाय तस्मात् पात्रात् स्वहस्ते किञ्चिज्जलम् आददाति । पश्चात् तज्जलं पात्रके क्षिपति येन गोलाकारा जलभित्ति सञ्जाता । तां प्रदर्श्यैव असावब्रवीत् , राजन् ! चैत्य एवंविधो भविष्यति । तदा प्रसन्नेन राज्ञा सम्मानितोऽयं धनविसरैः।( आ०बु० : म०सि० ७८-७९) । भगवतो गौतमबुद्धस्य आज्ञया हृदो मध्ये स्थितायाः शिलायाः पृष्ठे देवो विश्वकर्मा स्वर्णैः सार्कं, जाम्बूनदादिभिः सुवर्णैः, एकं सुसंस्कृतं चैत्यं चकार ( स्वयं पृ०१५३,४१८)। गुरवे तेन एका जराहीना, अविनाशिनी, वृष्ट्यभावशून्या पर्णशाला कृता ( स्क० काशी (२।८५)। ब्रह्मा-विष्णुभ्यां श्रीशोणाचले प्रार्थयेन विश्वकर्मणा नानाशिल्पाद्भुतः शोणगिरिनाथाख्यो विनिर्मितः, योऽरुणपुरनाम्ना प्रसिद्धिं प्राप्तः( स्क०मा०के० १।३।१६। ५३-५५)। इन्द्रद्युम्नकारिते शिवालये देवसंस्थापनार्थं शिल्पिवरपद्मनिधेः साहाय्येन विश्वकर्मणा, राजाज्ञया,ब्रह्मणो हिरण्मयी शाला इन्द्रादीनाञ्च आयत-नानि कृतानि) स्क०२।२।२५।३-२१)। असावेव राज्ञो मरुत्तस्य यज्ञशालां, या हिरण्मयी आसीत्, चकार ;(स्क० वै०भू०मा० २।१६, भाग ६।२।२७)।

यज्ञपात्रत्वष्टा विश्वकर्मा : ------------

विश्वकर्मा दीप्तिमतीं वायुरूपामिष्टिकां दिव्य लोकस्य उपरि विस्थापयति( यजु: १५।५८)। स एव यज्ञसम्पादकानि नानापात्राणि ( नानाकारा-णां) करोति( अथर्व० ५।२६।८)।

मण्डपरचनाकुशलो विशांपतिः

अथ विवाहमण्डपकर्मनैपुण्यम् । शिवशिवाविवाह कथाप्रसङ्गे गौरीगुरुना-दितो विश्वकर्मा वेदिकामनोहरं योजनानायुतेन विस्तीर्णं नानाश्चर्यान्वितं च एवं विधं मण्डपं चकार --------

तत्र स्थावरं जङ्गमञ्च तद्वदेव मनोहरमासीत् । चरञ्चरेण अचरञ्च चरेण जितमासीत् । तत्र स्थलेन पयः पयसा च स्थलं जितमासीत् । जलं किं नु स्थलं तत्र तत्त्वतो जनाः न विदुः । क्वचित् महाप्रभाः हंससारसमृगेन्द्राः, क्वचित् मनोहराः कृत्रिमाः नागमृगव्याघ्रशिखण्डिनो विश्वकर्मणा संस्कृता आसन् । क्वचिच्च धनूंषि उत्कृष्य स्थिताः दारुपाः, सादिभिःसाकं गचित्रिताः गजाश्वाः जङ्गमोपमाः प्रतिभान्ति स्म। तत्र केचित् चामरैः वीज्यमानाः, पुष्पाङ्कुरान्विताः दृग्विणो जनाःविरेजुः। कृत्रिमाः पताकाः कल्पिता आसन् । क्षीरोदधिसम्भूता:महालक्ष्मी द्वारि देशे शोभितासीत् । कृत्रिमाः स्वलङ्कृताः गजाः अकृतोपमा आसन्। रथियुताः रथाः निर्मिता आसन् । मण्डपे महाद्वारि तेन शुद्धस्फाटिकसंकाशो नन्दी कृतः । तस्योपरि महद्दिव्यं रत्नविभूषितं पल्लवच्छत्रैः चामरैश्च राजितं पुष्पं कृतम् ।अस्य वामपार्श्वे शुद्धकाश्मीरसन्निभौ चतुर्दन्तौ षष्टिवर्णौ महात्मनौ महाप्रभौ द्वौ गजेन्द्रौ, दक्षिणपार्श्वे च द्वौ दंशितौ अश्वौ कृतौ । अपि च सः तत्र नानालंकारसंयुक्तान् लोकपालान् कृतवान्। धीमता तेन याथातथ्येन षोडशप्रकृतयः, सर्वे देवाः ,भृग्वादयः ऋषयः, पार्षदैः साकमिन्द्रः, सर्वे महात्मानश्च कृतास्तत्र । ( स्कं० मा०के० १।१।२४। १-२०, रुद्र० पार्वती० अ० ३८)।

स्थपतिः विश्वकर्मा
---

अथानेन निर्मितानि भवनानि । दक्षयज्ञेऽसौ कृतिपतिः, तदाज्ञया , सुप्रभाणि, दिव्यानि, महार्हाणि च भवनानि चकार( स्कं० मा०के०१।१।६, १।१।२४।६६-७४)। विश्वकर्मा स्वानुयायिभिः समं, हृदो मध्ये स्थितायाः शिलाया उपरि, सप्तरत्नैः सुसंस्कृतमेकं शोभनं भवनं चकार( साम्ब०पु० १५३) । शिवेन आदिष्टोऽयं देवः स्वस्तिकलक्षणं, हिरण्मयं, चतुष्षष्टियोजनप्रमाणं, दन्ततोरणनिर्व्यूहं, मुक्ता-जालान्तरं शुभं शुद्धस्फाटिकं सोपानं, वैडूर्यकृतलक्षकं, सप्तकक्षं सर्वगुणसमुदितं गृहमकरोत् (वामन० २८।१-३)। एतेनैवसमुद्रे वरुणावासः कृतो यस्य भित्त्यो द्वाराणि च सुवर्णानि सन्ति। ताः भित्तीः परितो दिव्यद्रुमाः विराजन्ते येषु फलपुष्पाणि

सदैव शोभन्ते। अपि च एते पादपाः ज्योतिर्भिः विभान्ति इव सर्वकालेषु । एषु वृक्षेषु चित्रविचित्रविहगाः कूजन्ति। अस्य बहुकक्षं शुभ्रवर्णं सभाभवनमपि अनेनैव कृतमस्ति, किञ्च यस्मिन् बहुजनेभ्यः पदानि सन्ति। इदं सभाभवनं सुखस्पर्शं न शीतं न च तापकरमस्ति --- वातानुकूलितम् ( सभा०८।२, मैत्री: सभा०पृ०५८)। कैलाशशिखराकारं गरुडावासम् इन्द्रावासञ्च अनेनैव कृतम् ( भाग०७,४।८,मत्स्य० १६३।६८, २०३।७)। काश्यां देवेभ्यो महार्हाणि, महान्ति, शुभ्राणि, दिव्यानि च भवनानि अनेनैव कृतानि( शि०रुद्रसंहिता०२७।१०)। शतयोजना विस्तारायाम-सम्पन्ना, कामरूपिणी, वातानुकूलिता वैवस्वतः सभा यस्यां पूर्णकामाः दिव्य-मर्त्याः निवसन्ति सा पूर्वं विश्वकर्मणा एव कृतास्ति । रम्यासु अरण्यां, कामगाञ्च तपसां दीर्घकालं तपस्तप्त्वा कृतवान् ( सभा (८।१-६,३४)।

कुम्भकारो विश्वकर्मा --

आपाकाख्ये महाकर्मणि अस्य भाण्डनिर्माणे विनियोग एवं श्रूयते ------

--- कुरुष्व त्वं मे भाण्डानि गुरूणि लघूनि च ।। मणिकादीनि शुभ्राणि स्थाल्यश्च सुमनोहराः। घटकाः करकाश्चैव गलन्त्यः कुण्डलानि च।

शरावादीनि पात्राणि भाण्डमुच्चावचं बहु ।
सम्पादय महाभाग । विश्वकर्मा त्वमेव हि ।।

- भवि०उ०प० ४।१६७+२२-२४।।

कुविन्दो विश्वकर्मा ----

मरकतस्वर्णखचितं बहिरन्तश्च वसनं तेन वासुदेवाय निर्मितम् ( ब्र०वै० श्री० ख० २६)। यथा आधुनिकैः लौहविशेषेण ( स्टेनलेस स्टीलेन) निर्मीयन्ते इति। गुरुपत्न्यैः तदंगानुरूपा, तदाभता शोभना च वल्कला चोली कृता तेन ( काशी०उ० अ०८५)। बृहस्पतेः आज्ञयासौ एकं शुभ्रं वस्त्रं निर्मितं भगवद्वितुः प्रभावाद् येन स्त्री सन्तत्यादिभिः वर्धते ( अथर्व०१४।१।५३)।

तक्षको विश्वकर्मा : ----

गुरुपुत्राय धर्मान्धरहिते, पङ्कस्पर्शहीने, सुखावनीये, जलेऽपि पलवत् सञ्चरणीये द्वे पादुके निर्मितेऽनेन ( कथा० ७।३।८५)।

आसनकर्ता विश्वकर्मा : ----

प्रजापतिनादिष्टेन विश्वकर्मणा इन्द्राय सिंहासनो विरचितः ( महा० ६।१२४।२६)। महार्घ्यं वरं विनिर्मितं सुरत्नमणिभिः खचितं सर्वशोभाढ्यम् आसनं ददौ ( ब्रह्मै०कृ०३६।१५-१६)।

स्वर्णकारो विश्वकर्मा ----

कात्यायिनीदेव्यैः चूडामणिमथचूडामणिञ्च प्रादात् विश्वकर्मा ( वामन० १९।१६)। गोरक्षनाथाय तेन स्वर्णसूत्र संयुक्तमेकं पत्रम्, हिरण्यकुण्डले, तिलकम्, स्वर्णछत्र दण्डादीनि आभरणानि कृतानि ( श०डा०, जो०क०पृ०२४४)। यदा लङ्कां विजित्य अगस्त्याश्रमं प्राप्तो रामः तदा तस्मै विश्वकर्मकृतम् आभरणं समर्पयन् श्री आगस्त्यर्षिः एवं प्रशंसति ----

इदं चाभरणं सौम्य ! कृतं विश्वकर्मणा ।
दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ।।

तद्गृहीत्वा रामश्चैवं चिन्तयति ----

मौक्तिकानि विचित्राणि धात्रीफलसमानि च ।
जाम्बूनदनिबद्धानि वज्रविद्रुमनीलकैः ।।
परागैः सुगोमेदवैदूर्यपुष्परागकैः ।
सुनिबद्धं सुविभक्तं कृतं विश्वकर्मणा ।।

------ ------ ------

नेदृशानि च रत्नानि मया दृष्टानि कानिचित् ।।
उपशोभानिबद्धानि पृथिवी मूल्यसमानि च ।
विभीषणस्य लङ्कायां न दृष्टानि मया पुरा ।।

- पद्म० सृ०३३।२६,५०-५३।।

धन्योऽसौ देवशिल्पी यथैवं प्रशंसति भगवान् ब्रह्मा रामोऽपि ।

श्रीमद्देवीभागवते दुर्गायै दिव्यं चूडामणिं, कुण्डले, कटके, नानारत्नविराजिताः कङ्कणकेयूराः, कान्तनिर्मले, रत्नभूषिते, नुपुरे नूपुरे प्रदत्ते तेन ( ५।६।३-५)। अतुलं ग्रैवेयकं, सर्वाङ्गुलीषु अङ्गुरीयकरत्नानि च तेन शिवायै दत्तानीति श्री एफ०ई० पार्गिटर: ( पृ०सं० २६६-७०, मार्क० ८२।२४- २६)। देवसेनापतिपदे अभिषिक्ताय स्वामिने कार्तिकेयाय अनेन काञ्चनं मुकुटं निर्मितम् ( लिङ्ग० ४४।२८)। गुरुतनयायै हिरण्मये कर्णपुष्पे, हस्तिदन्ता निर्मितानि क्रीडनीयकानि च प्रदत्तानि ( स्कं० काशी २।८५)।

मालाकारो विश्वकर्मा ----

शिवायै अम्लानपङ्कजां मालां ददौ( मार्क० ८२।२७)।

नापितो विश्वकर्मा ---

ब्रह्मण: सविना सह विवाहावसरे अनेन तस्य शिरो मुण्डितम् (पद्म० पृ० १६।१०२)।

योद्धा विश्वकर्मा ---

देवासुरसंग्रामे विश्वकर्मा मयेन सह युयोध ( भाग० ८।१०।२६)।

वैद्यो विश्वकर्मा -----

हयग्रीवस्य वधार्थं तेन विष्णो: कबन्धे वाजिशिर: संयोजितम् (देवी० १।५।१०६), स्कं० ३।२।१५।१०)।

अग्निपथविद् विश्वकर्मा -----

विश्वकर्मा अग्नि त्रयाणाम् --- विद्युदिन्धनपरमाणूनाम् --- उत्पत्तिशक्तिप्रयोगकुशल आसीत्। तथा च श्रुतौ ----

" त्वामग्ने भृगवो न्यन्तामङ्गिरस: सदनं श्रेय एहि। विश्वकर्मा पुर स्तु प्रजानन् धिष्ण्यं पन्थामनु ते दिशामेति( कौ०ब्रा०१३७।२५)।

सौन्दर्यप्रसाधको विश्वकर्मा ----

लोकरावणो रावणो देवान् विजित्य तान् स्वकर्मसु नियुयोज । तत्र विशांपतिः विश्वकर्मा तेन स्वाङ्गसंस्कारेषु नियोजितः( प्रभास०७।१।५८।३२)।

पुरीविद्याविशारदो विश्वकर्मा ----

स्फटिकादिशिलाभेदैः देवशिल्पिना मुद्गलाश्रमे 'हरिपुर' इत्यनेन नाम्ना प्रथितं प्राकाराद्यलङ्कृतम् एकं पुरो निर्मितम् ( स्क०३।१।३७।३६-४०)।

रङ्गरचनानिपुणो विश्वकर्मा ----

महेन्द्रविजयोत्सवे नाट्ये दैत्यैर्विघ्नाः कृताः। तदा इन्द्रो ब्रह्माणमुपगतः। वृत्तं श्रुत्वा ब्रह्मणा विश्वकर्मा समाहूतः। आगतोऽसौ ब्रह्मणा निर्विघ्नं नाट्यगृहं कर्तुमादिष्टः । तेन च आज्ञां शिरोधार्य, अचिरेणैव कालेन सर्वलक्षणसम्पन्नं नाट्यगृहं कृतम् ( भ०ना०१।४५-४६)। ब्रह्मवैवर्ते नन्दपुरान्तरं योजनविस्तीर्णं रम्यगोलाकारं मणिमयार्गलाभिः समायुक्तं रासमण्डलं कृतम् ।

धनदो विश्वकर्मा ----

मित्रादिभिः सह त्वष्टा प्रजया संरक्षणो यजमानाय पुष्कलं धनं ददाति ( काठक० ३।६)। यो धनो विश्वकर्मणा निर्मितानि यन्त्राणि मित्रादीनां शक्तिभिः सञ्चालयति सः प्रभूतं धनं प्राप्नोति इत्यर्थः ।

आयुर्वर्धको विश्वकर्मा ----

वृद्धावस्थां गतान् जनान् ( तेषु ये शक्त्यनुसारं श्रमेषु पूर्ववत् वर्तन्ते तान् ) सुजीवनाय त्वष्टा सर्वमायुः ददाति, नेतरान् । यथाशक्ति कर्माभाव एव जीवाः अकालमृत्युं विन्दन्तीति तात्पर्यमेव।( १०।१८।६, अथर्व० १२।२।२४)।

पोषको विश्वकर्मा ----

सम्यगाराधितस्त्वष्टा जनान् पुष्णाति ( अथर्व०३।२०।१०) ।जीवो वै ब्रह्म। अतो जीवपूजा ब्रह्मपूजा भवति। एवमेव त्वष्टुः पूजापि नानाशिल्पकर्मव्यापृतानां तज्जीवानाम् उपासनैः भवति। यथा जीवपीडकैः मर्त्यैः भगवान्

कदापि न प्रसीदति तथैव स्वजीवकर्मरक्षणाभावे त्वष्टापि कथमपि प्रसादं न विन्दति। अतो यो जनो मनोयोगेन श्रमपूर्वकं शिल्पविद्यां साधयति, स स्वत्वष्टु: परमो भक्त:। तेनाराधितोऽयं देव: सम्यगाराधितो देवो भवति। यथा चानन्यभावेन पूजितो त्वष्टा: स्वदर्शनेन वरदानैश्च जनान् पोषयति तथैव अयमपि सुकर्मनिष्ठस्य आत्मनो वर्ग देहधनादिभि: पोषयति । अपि चासौ शरीरस्य रुग्णान्यङ्गानि रोगरहितानि कृत्वा शरीरं पोषयति ( अथर्व० ६।५३।३)। अतो वै देहशोधक इति सर्वे जानन्ति स्व येन नीरोगतानुभूयते प्राणिना ।

कवि: कृतिपति: -----

त्वष्टा विश्वकर्मा शास्त्रकर्तेति श्रूयते । वाजस० ८३।६)। वास्तुशास्त्रकर्तेति मत्स्य पुराणे ( अ० २५२)। अधुना "विश्वकर्मप्रकाश" इत्याख्यस्य अथवा "विश्वकर्मीय प्रकाश" इत्यभिधानस्य वा वास्तुशास्त्रग्रन्थस्य रचयिता मन्यते प्राय:। तत्र "मद्रास" इति नाम्न: नागरस्य "प्राच्यहस्तग्रन्थालये" प्राप्तं "विश्वकर्मीय शिल्पशास्त्रम्" अपि विद्वान्स: तत्कृतमेव मन्यन्ते । अनेन कृतग्रन्थानां संख्या नामानि वा क्वचिदपि नोपलभ्यन्ते । अपराजितपृच्छायाम् अधोलिखित: श्लोक उपलभ्यते----

शास्त्रं दशसाहस्रं कृतादौ विश्वकर्मणा ।
तेषां चतु: सहस्रं तु कलौ चैव प्रवर्तन्ते ।।
( वि०उ० पृ०६६)

अनेन ज्ञायते यद् विश्वकर्मणा रचिते वास्तुशास्त्रे आदौ दशसाहस्रश्लोका आसन्। परमधुना काल प्रवाहप्रवाहितास्ते तृतीयांशेन अवशिष्टा: । न पुन: यथा भावयति हरिशंकर: उक्ते स्वकीये ग्रन्थे ।

रक्षको विश्वकर्मा -----

मनोजवाय साधुकर्मणे विश्वकर्मणे रुद्राय अनन्तराय च यजमानो हवींषि ददाति ( यजु: १७।२३)। यजन्तं जनमुपरत: सप्तर्षिसंयुक्तोऽयं देवो हिंसकशत्रुभ्य पाति ( अथर्व० १९।१८।७)। हविषा प्रसादं प्राप्तो विश्वकर्मा

द्यावापृथिव्योः बीजान् स्व जनानुकूलान् प्रापयति अरींश्चाभितो मोहं नयति (यजुः० १७।२२)। विश्वकर्मा त्वादित्यैः उत्तरतः पातुमाहूयते यज्ञकाले(तैत्त० १।२।१२,काठक० २।६)। विशां पतिः विश्वकर्मा स्वजनान् पशूंश्च पातुं प्रार्थितो भवति ( तैत्तिं० ५।५।५)। वसुपति विश्वकर्मा यो जनानां मनोभावं जानाति, तेभ्यो धनानि ददाति । अपि च असौ जनानां शत्रुभिः सह संयुध्य तान् नाशयति (यजुः १२।४३)।

मुक्तिदाता विश्वकर्मा :--

अनुदीध्यमानाः ये जीवाः बध्यमानं मनसा ज्ञानचक्षुषा चान्वैक्षन्त तान् श्रद्धया संरराणो विश्वकर्मा देवो भवबन्धनात् प्रमुञ्चति ( अथर्व० २।३४।३)। यो नरः कर्मसु वर्तमानं हस्तपादं, मनोयोगेन कर्मविधिज्ञानचक्षुषा पश्यत्यपि तमसौ देवः प्रत्योपकल्पितानि सर्वं विधानि धनानि प्रापयित्वा प्रीणयति। अनन्तरञ्च " सुकृतिना न परावर्तिना " इत्यनेन सिद्धान्तेन अयं सुकर्मापि न परावर्तते त्वष्टुः प्रसादात् ।

पापघातको विश्वकर्मा ------

अगस्त्योक्ते द्वितीये पापप्रशमनस्तवे अन्यैः सह विश्वकर्मापि स्तूयते पापदाहाय ( गोकर्णो नीडस्य यो विश्वकर्माणं च स्मरते क्षीयन्ते तस्य पापानि । स्वजनस्वस्तये विश्वकर्मा मान्यविदुषामपमानकृतैन एनसा विमुञ्चति ( अथर्व०२।३५।३, तैत्तिं० ३।२।८)। ये विकाराः शरीरेषु पापेभ्यो जायन्ते तानपकर्मपुष्पैः अर्चयित्वा प्रसादितो विश्वकर्मा दापयतीत्यर्थः ।

शप्तः विश्वकर्मा ----

पुरा हरो इन्द्रं शशाप कष्टभोगाय स्वयञ्च तपस्तप्तुं सुमेरुं गतः ( देवी० ६।७।१५-१६ )। चित्रलेखाविनिर्मितां चित्रगुप्तभार्यां दृष्ट्वा विचित्ररूपां विश्वकर्मणा बहुभुजैः महामाया प्रसादिता । सा देवी तस्य योषिति चित्रायां स्वांशात् संज्ञानाम्ना जाता( भवि० ३।१८।२-३)। नन्दिना प्रचोदितो विश्वकर्मर्षिः शिवं तुतोष येन तस्मिन्नेव वास्तुशास्त्रप्रकाशो बभूव। तथा हि----

देवगन्धर्वमनुजप्रासादेषु गृहेषु च ।
मण्डपेषु विमानेषु गोपुरे तोरणेऽपि च ॥
सोपानेषु प्रतोलीषु वापीकूपादिकेषु च ।
विविधासु च शालासु चन्द्रशालादिकेषु च ॥
यन्मानं या क्रिया या च भक्तिः कृत्रिमासुराः ।
यच्चित्रं यच्च सन्दृष्टं तैलं यच्च कीर्तितम् ॥

( विश्वा० १।१६-२०, २।७-१४)।

यागस्कार असौ ऋषिः ब्राह्मणो वने ( वन० ११४।१७, काठकम्, १६।१६, मेदिनी कोशे)। पुत्रे हते त्वष्टा इन्द्रवधाय यतते ( तैत्तिं० २।५।२)। त्वष्टुः प्रजापतेः तनयो विश्वकर्मा वर्षत्रयपर्यन्तं विश्वनाथम् आराधितवान् । तुष्टस्य तस्य प्रसादात् सः सर्वकलासु निपुणो जातः। तथा हि-----

धातुदारुमणिरत्नपुष्पवस्त्रजलफलद्रव्यकन्दमूलवल्कलेभ्यः, कर्पूरादिसुगन्धितद्रव्येभ्यश्च कृतिनिर्माणविधिज्ञानम् , यथाजनरुचिगृहमन्दिरनिर्माणक शिल्पम्, सर्वविधशिल्पम्, उपाराधूषणव्यञ्जनरचनासु नैपुण्यम् , गीतवाद्यनृत्ययन्त्र योजनयोग्यताम्, नानायन्त्रास्त्रदुर्गकलाश्चरचनाविज्ञानम्, परमनोवृत्तिज्ञानम्, अथ च सर्वकलाकर्मकौशलं प्राप्तं शम्भुप्रसादात् तेन ( स्कं० काशीउ०अ०८५)।

विश्वकर्मणा विततं यज्ञं सुमनस्काः देवाः अनुमंसीरन्(अथर्व०१६।५६।५)। असौ कश्चिदेव विघ्नेश्वरस्य गणेशस्य वैवाहिकं कर्म सम्पादयति (रुद्र० कुमार०२०।५)। असौ एकामिष्टकामपि पश्यति( यजु: १४।५)। पद्मपुराणे ब्रह्मस्तुतिप्रसङ्गे वन्द्यैः सह विश्वकर्मापि समुपास्ते ( सृ० १८।६१)।

देवानां नामकरणसंस्कारमपि असौ सम्पादयति ( १०।८२।३)।

दृष्टमन्त्रसूक्ताः --- ऋग्वेदे १०।८१-८२ सूक्ते ।

यजुर्वेदे ( वाज०) १४।१२, १७।१७, १६-३२।१८।५८, ६०, ६२, ६३-६५ ।

सामवेदे --७।३।६ ,

वृष्टिदेवता विश्वकर्मा ----

ग्रीष्मानन्तरं विश्वकर्मा वृष्टिभिः दीप्तिमनति । [illegible] यदासौ एतत्कर्म करोति तदैव लोकोऽयं कर्मसु प्रवर्तते, नान्यथेति। तथा च उच्यते ---

निदाघमासातिगे यद्दीनावति दिवाविह ।
विश्वस्य जनयन्कर्म विश्वकर्मैष तेन सः । २ ।५०।।

( रा०कु०राव: बृहद्देवता पृ०४४)।

यज्ञप्रसादितोऽयं देवो नभोमण्डले विलीनं जलं वृष्टिरूपेणु संसृजति ( अथर्व २।३५।२)।

लिङ्गनिपुणो विश्वकर्मा :

कुमारानुज्ञातेन कृतिपतिना त्रीणि शुद्धानि लिङ्गानि --- प्रतिज्ञेश्वरम्, कपालेश्वरम्, संकल्पिक्रमेति --- कृतानि ( स्कन्द०कौ० १।२।३३।५२-५३)। स्थाणुतीर्थे वटस्य पूर्वदिग्भागे विश्वकर्मणा कृतं महालिङ्गं वर्तते(वामन० २५।६) । नग्नहरे देशे कपिलतोयातटे निर्मिते नगरे महापुण्यं लिङ्गत्रयं तेन प्रतिष्ठितम् ( प्रभास० ७।१) । ३२०।३)। इन्द्रादिभ्यो देवेभ्यो विश्वकर्मा विविधपदार्थैः निर्मितानि शिवलिङ्गानि ददाति । तथा हि----

विष्णवे इन्द्रनीलमयम्, शक्राय पद्मरागमयम्, वैश्रवणे हैमम्, विश्वेदेवेभ्यो रौप्यम्, वसुभ्यः कान्तिकम्, वायवे आरकूटमयम्, अश्विनीभ्यां पार्थिवम्, वरुणाय स्फाटिकम्, आदित्येभ्यः ताम्रमयम्, सोमाय मौक्तिकम्,अनन्तादिभ्यो नागेभ्यः प्रवालकमयम्, दैत्येभ्योऽयोमयम्, गुह्यकेभ्यः त्रैलोहिकम्, चामुण्डायै सैकतम्, निर्ऋत्यै दारुजम्, यमाय मारकतम्, नीलादिरुद्रेभ्यः शुद्धभस्ममयम्, लक्ष्मीदेव्यैः बिल्ववृक्षमयम्, गुहाय गोमयात्मकम्, मुनिभ्यः कुशाग्रमयम्, वामादिभ्यः पुष्पलिङ्गम्, मनोन्मन्यैः गन्धलिङ्गम्, सरस्वत्यैः रत्नकृतम्, पिशाचेभ्यः सीसनिर्मितम् शिवलिङ्गं चकार विश्वकर्मा ( लिङ्ग०७४।२-११)।

शिवमहापुराणेऽपि धर्माय पीतमणिमयम्, विभावसवे वज्रलिङ्गम्, विप्रेन्द्रेभ्यो मृण्मयम्, यक्षेभ्यो दधिमयम्, छायायै पिष्टमयम, योगिभ्यो भस्ममयं शिवलिङ्गं चकार ( रुद्र०सृष्टि० १२।३०-३६)।

प्रतिमाविज्ञानविशारदो विश्वकर्मा -----

अश्वमेधप्रसङ्गे रामाय सः सीतायाः प्रतिमां निर्माति हिरण्येन ( राम० ५।८।२) यागान्तरं दानाय, गयदानवाय हिरण्यगावो विनिर्मितास्तेन

(महा० ३।१२१।१२)। पुरीस्थिता जगन्नाथप्रतिमा तस्यैव कृतिरस्ति। इन्द्रद्युम्नागृहीतेन विश्वकर्मणा तस्याः रचना समारब्धा। परमिन्द्रद्युम्नेन समयो न परिपालितः। ततो धैर्यनिर्मितामिमां परित्यज्य देवशिल्पी गृहं गतः ( विश्वकर्मा: हि०पु० पृ०२५७, पी० धामस: महा० भा०पृ०१५०)। फे०ई० ड्युवास एषा प्रतिमा तद्दृढदारुकृतेति मन्यते ( हि० तं०पृ० ७१४,१६)। गोरक्षनाथस्य वादेनानुसारं तेन एका नर्तनशीला दारुयोषित् कृता ( श०ब्रा०: बौ०क०पृ०२४४)।

विष्णोः आज्ञया विश्वकर्मणा इन्द्रद्युम्नाय रामकृष्णसुभद्राणां प्रतिमाः कृताः। तत्र ततो नीलजीमूतसन्निभं पीताम्बरशोभितं चित्रकुण्डलराजितं श्रीवत्साङ्कं स्मुधरं शंखचक्रगदाधरं पद्मपत्रायतेक्षणं परमं शान्तं कृष्णममकरोत्, गौरं गोक्षीरवर्णाभं स्वस्तिकाङ्कितं लाङ्गलधरं महाबलं शारदेन्दुसमप्रभं पुरुषाक्षं महाकायं फटाविकटमस्तकं महामुसलधारिणं बलराममकरोत्, हिरण्यवर्णाभां पद्मपत्रायतेक्षणां विचित्रवस्त्रसञ्छन्नां हारकेयूरभूषितां विचित्राभरणोपेतां रत्नमालावलम्बितां पीनोन्नतकुचां रम्यां सुभद्रामकरोत् ( बृ०ना० २।५४।५६-६७)।

जापानदेशस्य पुरातत्त्ववेत्तारो भगवतो बुद्धस्य विद्धपूर्वप्राप्ताम् ( १९७०-७१) एकां प्रतिमामत्र: प्रायः पञ्चचत्वारिंशदधिकपञ्चविंशतिशतवर्षपूर्वं विश्वकर्मणा निर्मितेति मन्यन्ते।

सूर्यविशातनान्तरं विश्वकर्मणा तस्य एका प्रतिमा कल्पवृक्षेण निर्मिता। सा हिमालयात् चन्द्रभागाप्रवाहेण मित्रवनं नीता, तत्र च साम्बेन गृहीता सा मन्दिरे प्रतिष्ठापिता( र०का० क्र: उप० ज० १।४०,४२, साम्ब ४३।२९-३२)। विश्वकर्मणा शक्रस्थाने एका धूममूर्तिः निर्मितेति बी०ढ०प० पाण्डेयः (अनू०चि०क्र० भा०पू०आ० पृ०१५-१६)।

पारशुरशो विश्वकर्मा :

वानरत्वं गतेन तेन देव वती लतापाशैः बद्ध्वा अभेधानाक्रम्य लतायन्त्रमध्ये निरुद्धा ( वामन० ६४।३७-३८)। अनेन वानरविश्वकर्मणा कतध्वज सुतो जाबालिः न्यग्रोधशिखरे वल्लतापाशमध्ये जटाभिः संयम्य अवरुद्धः। अयं पाशः पश्चात् पञ्चवर्षाणि काले गते शकुनिना शरैः कर्तितः। जटापाशन्तु कोऽपि उन्मोचयितुं न शशाक।

अनन्तरं प्रार्थितेन अनेनैव उन्मोचित: ( वामन० ६४।६६-७८)।

शस्त्रास्त्रनिर्माता विश्वकर्मा ----

नारायणास्त्रकर्ता विश्वकर्मा कात्यायिनीदेव्यै: दिव्यं परशुं चकार ( स्कं० मा०कौ० ११२।२०।३५, वामन० १६।२६, देवी० ५।६।१८)। तेन इन्द्राय एका शक्ति: कृता:, या पश्चाद् इन्द्रेण परशुरामाय, परशुरामेण च कर्णाय प्रदत्ता ( हाप्किन्स: महा०पुरा०पृ०२०१, महा० ८।३१।४३,८।३४।१७)। अर्जुनाय गाण्डीवं विष्णवेनशारङ्गधनु: स एव करोति( हाप्किन्स: तत्रैव, महा० ४।४३।१)। अपि ब्रह्मणस्पते: लौहकुठारं तीक्ष्णयति ( विल्सन: हिन्मा०७५) । ललितायै असीं अङ्कुशं ददौ ( ललिता० १०।२१)। अपीं बृहस्पते: कुठारं तीक्ष्णतां प्रापयति ( वेल्वेकर: हि०त्रि० २।५७७)। इन्द्राय विजयधनु: निर्माति ( कर्ण०३१।४२)। दधीचिमहर्षे: अस्थिभि: पृथक्त्वं वीर्यं सुमनां वज्रमकरोत् । अपि देवानामिव वह्निशक्तिम्, यमदण्डम्, निर्ऋतिखड्गम्, वायुकेतुम्, कुबेरस्य च गदामकरोत् स:(पद्म०पृ० १६।८३, अथर्व०२०।३५।६, कृ० १।५२+३२।२, कर्ण० २४।६६, भाग० ६।६।५४, वन०१००।२४, काठकम् ८।१६, ब्रह्माण्ड० ७।३२।५८-६१)। पूर्वशातितपदार्थेन विष्णो: सुदर्शनचक्रम्, अमोघं यमदण्डम्, स्कन्दशक्तिम्, हरस्य शूलम्, चण्डिकाया: विविधं शूलकञ्च कृतवान् स:( विष्णु० ३।२।१२, ब्रह्माण्ड०७।११।१६६-२०० शिव० ८।६३-६४, पद्म० सृ०७५।३६-३६)। अवशिष्टपदार्थेन अन्येषां देवानां शस्त्रास्त्राणि कृतानि तेन । देवशक्त्युत्पन्नशिवायै सो निर्मलं परशुं, नैकरूपाणि अस्त्राणि, अभेद्यञ्च कवचं प्राददात् ( मार्कं० ८२।२६-२७) ।

विश्वस्रष्टा विश्वकर्मा --

जलोद्भिन्नामार्द्रा पृथिवीं शोषयति विश्वकर्मा ( परमाणुतापै: इत्यर्थ:) ( इयूसन: व० शब्द:पृ०३४) । अतएव भूतल्लोकं संस्थापितवान् ---तत्र प्राप्ततल समता अनेन कृतासीति ( भाग० ६।६।५४)। विश्वकर्मा लोकोदधिगिरीन् वन्यादिषु विभजत्( ब्र०पु० २।५।२७)। पूर्वोक्ता तेन शाकद्वीपवासिनोऽपि विनिर्मिता: ( भविष्य० १।१३६।७६)। आरण्यानि ( जगपशुमदलानि) ग्राम्याणि ( मानवरूपाणि) वा रूपाणि त्वष्टैव नि:ससर्ज( शत०ब्रा०२।२।३।४)। ब्रह्मणादिष्टो विश्वजित्

विश्वकर्मा शिल्पानां प्रवर्तकः (आदि० २१०।१३-१८)। अतो यास्को प्रजां त्वष्टारम् (अथर्व० २।२६।२)। सिक्तस्य रेतसो विश्वकर्मा रूपाणि पिंशति (तै०सं० १।५।६, शत०ब्रा० १।६।२।१०, का०श्रौ० ५।१२।११-१२, काठक ५।४, अथर्व० ५।२५।५,१०; ११।८।१८)। विश्वकर्मैव नः संयुनक्ति (तै०सं० ३।२।८, मै०सं० २।३।४७)। असौ स पृथिवीं जनयति प्रथयति च। तथा श्रूयते ---

आपो वा इदमग्रे सलिलमासीत् तस्मिन् प्रजापतिः वायुर्भूत्वा चरत्, स इमामपश्यत्, तां वराहो भूत्वा हरत्, तां विश्वकर्मा भूत्वा व्यमार्ट्, सा प्रथत सा पृथिव्यभवत् (तै०सं० ७।१।५), (काठक १८।२)। कल्पादौ विश्वकर्मा ससिन्धुपर्वतां सप्तद्वीपामिमां पृथिवीं भूराद्यांश्च चतुरो लोकान् प्रकल्पयित्वा प्रजासर्गं ससर्ज (लिङ्ग० ७०।३७-३८)। असौ इमान् लोकान् यथा पूर्वं सृष्टे (तै०ब्रा० ३।२।३।२२)। प्रतिकल्पे एवमेव सृजतीत्यर्थः। कर्मारेण तुलितो विश्वकर्मा देवदेवोचितान् पदार्थान् अग्नौ सन्तापयित्वा देवान् निर्मातीति एवं व्याख्यायतेऽत्र (१०।७२।२) श्री अम्बालालमहोदयः (वा०शं० भा०कं० पृ०४०)। असौ कविः ब्रह्मणस्पतिमपि विश्वकर्मैव मन्यते। पृथ्व्यग्निब्रह्मणस्पतीनां निर्माता त्वष्टा वरेण सह द्यावापृथिव्यौ निर्माति (ए० डौनियल: हि०ब्रुग्पू० १।२)। असौ गर्भान् वर्धयति अतस्तदर्थं स्तूयते (१०।१८४।१ बृहदा०६।४।२१)।

यानविज्ञानप्रवर्तको विश्वकर्मा -----

वात्स्यायनस्य कामसूत्रे 'विश्वकर्मप्रोक्तयन्त्रमातृका' इत्यस्मिन् वाक्यांशे भाष्यं कुर्वन् जयमङ्गलटीकायामेतदुक्तं यत् 'सजीवानां निर्जीवानां यन्त्राणां यानोदकसंग्रामार्थं घटनाशास्त्रं विश्वकर्मप्रोक्तम्।' (वा०का०१-३)। अनेन ज्ञायते यत् स्वचालितानां मानवचालितानाञ्च यन्त्राणां गगनोदधिसमर समर्थानां रचनाशास्त्रप्रणेता विश्वकर्मैवास्ति। विमानोऽपि एतेषु यन्त्रेषु एकः। विमानविषये भरद्वाजो 'यन्त्रसर्वस्व' नामके ग्रन्थे एवम् लिखति ---

पृथिव्यप्स्वन्तरिक्षेषु खगवद् वेगतः स्वयम्।
यः समर्थो भवेद्गन्तुं स विमान इति स्मृतः॥

(अध्याय १ सूत्र २॥

परं विश्वकर्मा मात्र यानशास्त्रकर्त्तैव नासीद् अपितु नैकयानानां कर्तापि आसीत् । तथा हि---

कल्किपुराणे अपि द्वौ: शुकविमानरथौ: निर्मितौ श्रूयते ( भाग ३अ० ४)। अनेन कृत: सर्वरत्नभूषित: पुष्पको विमान सर्वविधवैशिष्ट्ययुक्त: आसीत् ---

क्वचिद् भूमौ क्वचिद् व्योम्नि गिरिशृङ्गे जले क्वचित् ।

अयं विमान इतिहासपुराणेषु प्राय: श्रूयते ( रामा० युद्ध० ६, वन० १६१।३७, विष्णु० ३।२।११)। शिल्पसंहितायां पुष्पकविषये समुच्यते ----

सांख्ययोगेन तं यानं चकार विधिनन्दन: ।
अविच्छेदगतिर्यस्य वायुवद् कामगामिनम् ।।
नानोपकरणैर्युक्तं भास्वन्तं पुष्पकं विदु:।
( शिल्पसं० अ०१८)।

गरुडशातकुम्भाख्यौ विमानौ अपि श्रूयेते ( हरि० विष्णु० पृ०६२+६३)।

त्रिपुरवधार्थं शिवाय सर्वदेवमयं दिव्यं रथं रचयामास ( लिंग अ०७१, स्कं० ३।२२६।२५, शिव० रुद्र० युद्ध० ७।४४,८।।६-२६, कर्ण० ३४।१६-१७)।

तेन देवेभ्य: त्रयो रथा: कृता:। येषां पौराणिकं वर्णनमेवं श्रूयते ----

सुवर्णै: सुघटितौ बहुमूल्यविपुलरत्नमालाभि: अलंकृतौ गरुडध्वजचिह्नितोऽतिदृढौ रथौ वासुदेवाय कृतस्तेन । समुद्रायाः रथौ द्वादशहस्तविस्तीर्णौ द्वादशचक्र-चतुर्दशकलशान्वित: पद्मध्वजविभूषितश्चासीत् । विष्णो: रथ: षोडशचक्रस्य, चतुर्दशकलशस्य, हस्तषोडशविस्तारस्य च कृतवान् । यानं सुचक्रं सुलम्बं सुविस्तीर्णं सुतोरं सुध्वजं नानाचित्रमनोरमं विचित्रवन्यपशुपक्षीवल्यान्वितम् अर्धहाटक निव्यूहम्, शरदाभ्रविरचितोपमम्, मेघगम्भीरनिर्घोषम्, ऋतंस्थै चित्रकर्मै: चातरंबोध्यर्युक्तम् , वर्णगुणैर्युक्तञ्च एतद्रथत्रयं विश्वकर्मा एक एव विनिर्माणं करोत् । ( स्कं० २।२।२५।३-२१)।
सुवंशातितपस्यार्थेन कुबेराय एका शिविका तेन कृता ( प्रभास० ७।११।१६६-२००)।
अर्जुनरथस्य केतु: विश्वकर्मणा प्रदर्शिता दैविमायासीत्( विराट० ४६।३-४)।

दुर्भिदाणयन्त्रनिर्माता विश्वकर्मा ----

मनो बाग्रहेण यो दुर्भिदाणयन्त्रं चकार ( शि० सं०अ० १८)। पुलोमन्तोर्व्यः विवाहे तेन तस्यै एकं बीदाणकर्णं ( ऊँचा स्त्यांउकमाणायाम् ) दत्तं यत् कदापि न स्खलदयभ्रष्टं बभूव ( पन्ना परा० : रामा० र०पू०४७)।

नगररचनाविद् कृतिपतिः ----

वैश्रवणस्य राजधानी त्रिकूटस्था लङ्कानगरी आदौ विश्वकर्मणा कुबेराय कृतासीत् ( वि०ध० १।२२६।७, रामा० ३।६।२२-२७)। रत्नाढ्या, रुक्मसम्पूर्णा, कल्पवृक्षादिभिः सुशोभिता, शातकुम्भमयैः गेहैः सर्वरत्नैश्च बन्धुरा, वज्रवैदूर्यसोपाना, स्वर्णदीर्घिकासंयुक्ता, सर्वतुर्गणसमाकुला च शंखिनीशीपुरी विश्वकर्मणा कृता( पद्म०पू० ५३।४१-४३)। शंखचूडेनामन्त्रितो विश्वकर्मा तस्य पुरस्य अलंकरणकर्म निर्माणान्तराय कृतवान् ( स्कं० २।१।७।५३)।

द्वारिका, इन्द्रप्रस्थो वृन्दावनञ्च तस्यैव कृतयः सन्ति ( आदि० २०६। २६, हरि० २।५८, ब्रह्मवै०कृं० ४अ० ९७, भाग० १०।५०।५०-५४---- ५८।२४, स्कं०२( १) २६।१०-११)। तत्र द्वारावती एवं प्रशंसिता भवति -----

इति संमन्त्र्य भगवान् दुर्गं द्वादशयोजनम् ।
अन्तःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ।।
दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुण्यम् ।
रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ।।
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम् ।।
हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः।।
राजतारकूटैः कोष्ठैर्हेमकुम्भैरलंकृतैः ।
रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः।।
वास्तोष्पतीनां च गृहैः वल्लभिश्च निर्मितम् ।।

- ब्रह्मवै०४।९७।५०-५३ $\frac{१}{२}$ ।।

यमपुरी अलका अनेन निर्मिता श्रूयते ( शि० रु० २।२०)।
स्वयम्भुवादिष्टेन विश्वकर्मणा सुरासुरोरगादीनां रम्याणि नगराणि सभास्थानानि निर्मितानि। उर्वीं गत्वा वैन्यनृपतेः विभिन्नग्रामखेटमतिमनोहरां पुरीञ्चकार विश्वकर्मा तस्य सुताश्च --- जयविजयसिद्धार्थापराजिताः-- ऐलाध्वपायोधितरिता-मन्तरेषु नृपाणां प्रशान्त्यै दुर्गाणि प्रतिग्रामं प्रतिपु: प्रतिपत्तनं वर्णप्रकृतिवेश्मानि संस्थानि च कृतवन्तः समरा० २।१-१४)।

साम्बपुरमपि विश्वकर्मणा निर्मितमिति श्रूयते (र०वं० श्र: उप०अ० १,६२)। तथैव इन्द्रस्य अमरावतीं चकार समरा०१।२०)। कालभालीत्याख्याय नैगधराज्ञे यमुनातटे योजनव्यामा कालकालेति नाम्ना नगरी निर्मिता( भवि०१। ३।२३।७०) ऋणितोयातटे यत्रोन्मितं लिङ्गं वर्तते तत्र तेन शिवाज्ञया शिल्पिकोटिभिः सह नगरं चकार । आयामव्यासतः षष्ट्योजनविस्तीर्णमिदं नगरं नग्नहरे देशे स्थितमासीत् । शालाकामैः सप्तभौमैः प्रासादैः परिभूषितं नानाग्रामसमाकुलञ्च एतन्नगरं सर्वतः सीमयान्वितमासीत् । अस्मिन् नगरे षट्सहस्रसंख्याकाः ग्रामाः आसन् ( स्कं० प्रभास० ७।१।३१६।४४-६१)।

वृन्दावनक्षेत्रे पञ्चयोजनविस्तीर्णं नगरं विश्वकर्मणा एकस्यामेव रात्रौ कोटिसंख्यशिल्पिभिः सार्धं कृतम्। तत्र अस्मिन् क्षेत्रे नन्दाय क्रोशविस्तार-विस्तीर्णो दुर्गः कृतः( ब्र०वै० ख० ४।अ०१७)।

हरेः शासनात् कैलाशनिकटे गुहाय रम्यमद्भुतं नगरं सिंहासनञ्च त्वष्टा निर्ममे ।(शि०रु०कु० ५।६१-६२)।

तेन दैत्येभ्यो ब्रह्मणः निदेशात् त्रीणि पुराणि कृतानि । तत्र तारकाक्षाय अग्रे हेममयं पुरम्, कमलाक्षाय राजतं पुरम् , विद्युन्मालिने च अयोमयं पुरञ्चकार । एतानि पुराणि आकाशे परिभ्रमन्तो वर्षसहस्रान्ते परस्परैकी-भावं गच्छन्ति स्म ( शि०रु०सं० युद्ध० १।४६-५०)।

भरद्वाजाहूतेन विश्वकर्मणा ससैन्यभरतस्य सत्काराय रात्रिवासाय च समन्तात् पञ्चयोजनभूमिः समा कृता । पश्चाच्च तेन तत्र आवासारामसरिदादीनि सुखावहानि अवतारितानि ( रामा० २।९१।२८-३५)।

पाताललोके विश्वकर्मणा हिरण्यपुरं निर्मितम् ( उद्योग० १०० । १- २, ३ । १७३ । ११ ) । इदं नगरं राज्ञे इच्छानुसारं सञ्चरण शीलमासीत् । पश्चात् इदमर्जुनेन निपातितं शिवात्रेण ( हापकिन्स: म० पुरा० पृ० ५० ) । अमेनैव नाना विटपशोभितं बहु कन्यायुतं सभामण्डलाहितम् इन्द्रपुरं निर्मितं यत्र च गमन शीलमासीदिति श्रूयते ( मैकोन्डी: इ० भा० पृ ८ ) ।

भण्डासुरवधप्रसङ्गे दुर्गायै ब्रह्मणा विश्वकर्मा एवं शोभितं पुरमकारि, यस्य वर्णनमेवं श्रूयते ---

तत्राथ नगरीं रम्यां साट्टप्राकारतोरणाम् ।
गजाश्वरथशालाढ्यां राजवीथी विराजिताम् ।।
सामन्तानममात्यानां सैनिकानां विकल्पनाम् ।
सैनापदायदासीनां गृहाणि रुचिराणि च ।।
मध्ये राजगृहं दिव्यं द्वारगोपुरशोभितम् ।
शालाभिर्बहुभिर्युक्तं सभाभिरुपशोभितम् ।।
सिंहासनं सभायां च नवरत्नमयीं शुभाम् ।
मध्ये सिंहासनं दिव्यं चिन्तामणिविनिर्मितम् ।।
स्वयं प्रकाशमानमयुक्तादित्यसन्निभम् ।।

( ब्रह्मा० ४ । १४ । ६-१३, ललिता० ६ । ६-१ ३ $\frac{१}{२}$ )

कामेश्वरी पुरी, भगमालापुरी, नित्यक्लिन्नापुरी इत्यादिभि: नामभि: ललितादेव्या: तेन षोडशसंख्याका: पुर्य: निम्नस्थानेषु कृता: ---

प्रथमं मेरुपृष्ठे च निषधे च महीधरे ।
हेमकूटे हिमगिरौ पञ्चमे गन्धमादने ।।
नीले मेषे च शृङ्गारख्ये महेन्द्रे च महागिरौ ।
नवैतानि तु मानानि स्थानाणि सन्ति कुम्भज: ।।
अष्टकानि तु सप्तैव प्रोकान्यष्टिसिन्धुषु ।
लवणाब्धीक्षुसाराब्धिसुराब्धिघृतसागरा: ।।
दधिसिन्धु: क्षीरसिन्धुश्च जलसिन्धु: तथैव च ।।

( ललिता० १० । १६-२५ ) ।

अनेनैव शिल्पिना चतुः शतयोजनविस्तृतं श्रीपुरं कृतम् ललितायै ( ललिता० २८।३३-६०) । दीर्घकालं तपस्तप्त्वा विश्वकर्मणा अलम्बाघा , रम्या, कामगमा यमगमा निर्मिता( सभा० ८।३५)। हस्तिनापुरी युधिष्ठराय, सुतलाख्यं च पातालोकं विश्वकर्मा चकारेति श्रूयते ( भाग० १०।५८।२४,७।४८)।

विश्वब्रह्मलोकौ विश्वकर्मणा निर्मितौ स्तः ब्रह्म पु० २।३।३४। १-६३।

यदा राजयक्ष्मापीडितो रोहिणः स्वस्थो जातः तदा तेन विश्वकर्मा आहूतः । शशिना आज्ञप्तोऽसौ शुद्धस्फटिकसंकाशम्, गोक्षीरधवलोज्ज्वलम्, हेमप्राकारतोरणञ्च मेरुनामानं प्रासादं निर्माति एवं परितश्च चतुर्दश संख्याकाः अन्ये प्रासादः परिकल्पिताः तेन ।एषां नामानि एवं श्रूयन्ते ---

केसरी सर्वतो भद्रो नन्दनो नन्दिशालकः ।
नन्दीशो मन्दरश्चैव श्रीवृक्षो हि अमृतोद्भवः।
हिमवान् हेमकूटश्च कैलासः पृथिवी जयः ।
इन्द्रनीलो महानीलो भूधरो रत्नकूटकः ।।
वैडूर्यपद्मरागश्च वज्रको मुकुटोज्ज्वलः।।
ऐरावतो राजहंसो गरुडो वृषभस्तथा ।।

(प्रभास०७।२४।५८-६१ )।।

कपिगुहाकारकः

मेरुहेमकूटादिषु पर्वतेषु सप्तद्वीपेषु च याः गुहाः सन्ति ताः सर्वाः विश्वकर्मकृता एव सन्ति। तेषां कपीनां कृते ये आवासाः तेन निर्मिताः ते सर्वर्तुरमणीया उद्यानैश्चोपशोभिताः सन्ति। तथा च पठ्यते ब्रह्माण्डपुराणे----

चतुर्षु मेरुपार्श्वेषु हेमकूटे हिमालये ।
नीले श्वेतनगे चैव निषधे गन्धमादने ।।
द्वीपेषु सप्तसु तथा याः गुहाः ते च पर्वताः ।
निलयास्तेषु ते प्रोक्ता विश्वकर्मकृता स्वयम् ।।
पुरैश्च विविधाकारैः प्राकारैश्च विभूषिताः।
सर्वर्तुरमणीयास्ते ह्युद्यानानि च सर्वशः ।।

( ब्र०उ० ३।७।१८४-१८६)।

भ्रमियन्त्रवेत्ता विश्वकर्मा ---

पश्चिमसिन्धुप्रदेशे विश्वकर्मणा एकं भ्रमिनामकं यन्त्रं संस्थापितं यस्य प्रभावान्नराः अन्येषु खण्डेषु न गच्छन्तिस्म। तच्च यन्त्रं मायिना मयेन म्लेच्छैः सह प्रेषितम्। येन कारणेन राज्ञः शक्रस्य वैरिणो गुप्तचराः समर्थकाः वा सप्तद्वीपगमनशक्ताः बभूविरे। तदानीं शक्रेण प्रार्थितो विश्वकर्मा एकं दिव्ययन्त्रं चकार। यस्य प्रभावात् विरोधिनो भ्रमिताः बभूविरे। तस्मात् भ्रमियन्त्रात् म्लेच्छानां विनाशको महावायुर्जातः। तद्वायोः जातवान् बली वात्यनामकः पुत्रोऽभवत् येन पराभूताः मदा दैत्यपिशाचाः सवर्णाश्च सत्कृताः। सो महाबली वात्यो म्लेच्छात् बलात् वर्णमयान् कृत्वा शताब्दं भुवि मण्डलीकं पदमवाप्य चकार ( भवि० १।३।२४।४-११)।

यथाधुनिकैः स्वदेशस्य सीमाक्षेत्रेषु परेषां विमानानां रणयन्त्राणाञ्च गतिविधिज्ञानाय तज्ज्ञपरिज्ञापककेन्द्राः (राडारकेन्द्राः)। निर्मीयन्ते ध्रुवा उपग्रहाः परिभ्रमणशीलाः पारमाणविका उपग्रहाः अन्तरिक्षे प्रक्षिप्यन्ते, यैः शत्रूणां न केवलं सामरिकीयाः गतिविधय एव चित्रैः अन्यान्यसंकेतैश्च प्रेषिताः भवन्ति अपितु सामान्यानां संस्थापितानां कक्षादीनामुपस्थितिरपि सूचिता भवति। परमेतेषु यन्त्रेषु परनिरोधिनीशक्तिः न विद्यते।

अत्र अस्माकं विश्वकर्मणा कृते यन्त्रे परदर्शन शक्तिरेव नासीत् केवलं, परं परेषां निरोधिनी शक्तिरपि, तच्च नाशितं मयम्लेच्छैः। परं द्वितीयं दिव्यं यन्त्रं विशिष्टशक्तिसम्पन्नमासीत्, यस्मान्निर्गतो वायुः म्लेच्छेभ्यो भ्रमोत्पादक आसीत्। यस्य प्रभावात् तेषां भावाः एव परिवर्तयन्ति स्म येन ते स्वधर्मं परित्यज्य सवर्णत्वंगताः।

यद्येतद्वायोस्तनयो वात्य इत्याख्यस्य राजा श्रूयते, तद् सम्भवतोऽस्य वायोः पक्षप्रभाव एवास्ति यदस्य पुत्रत्वेन उच्यते --- तथा च ज्ञायतेऽस्य नाम्नापि। अस्माद् यन्त्राद् निर्गतो वायुः शताब्दपर्यन्तं प्रभावशीलो बभूव, अतोऽस्य राज्यकालः तदवधिपर्यन्तं श्रूयते।

सूर्यशक्तिसंग्राहको विश्वकर्मा : ----

ब्रह्मणादिष्टेन विश्वकर्मणा यन्त्रमयी भ्रमिः निर्मिता यस्या उपरि सूर्यं संस्थापयित्वा तस्य प्रज्वालनक्षमाः भागवो विच्छिन्नाः कृताः ( विष्णु० १०२। ७९-८०, पद्मपु० ८।६३-६४, श्रीकुमारः शिल्प०१।२)।

अनेन ज्ञायते यत् स्वस्थाने सूर्यशक्तिसंग्रहणार्थं एकं शक्तिगृहमपि विश्वकर्मणा संस्थापितम् आसीत्। यद् भ्रमणशीलमासीद्, अतो भ्रमिनाम्ना ज्ञायते स्म। यदर्थं आधुनिकाः वैज्ञानिकाः यत्नशीला एव सन्ति।

सोमरक्षको विश्वकर्मा ---

इन्द्रेण आदिष्टो विश्वकर्मा सोमरक्षणार्थं एकं क्षुरधारान्वितं भ्रमणशीलं चक्रं सोमपात्रोपरि स्थापयति द्वितीयञ्च द्वारि येन कोऽपि चोरो प्रविष्टुं पात्रापहर्तुं वा न शक्नुयात्। स्वयञ्च खड्गहस्तो भूत्वा तत्र वर्तते ( आदि० ३२।३-४)।

यज्ञप्रेरको विश्वकर्मा ---

ये जनाः यज्ञकर्मसु धनानि न योजयित्वा ऋद्धिं समधिगच्छन्ति। यज्ञवायष्टा दुर्बष्टा वा भवन्ति तेऽपि निर्धनाः भवन्ति काले गच्छति। पश्चादनुतप्यमाना एते जनाः स्वदेवं यज्ञप्रेरणां याचन्ते ( अथर्व० २।३५।१)।

गुरुः विश्वकर्मा :---

विश्ववेत्ता विश्वभर्ता विश्वकर्मा मानवेभ्यः चतुर्णामाश्रमं ब्रूते। ( अथर्व० ४।११।५)। ब्रह्मणोपदिष्टो गान्धार राजो नग्नजित् चित्रविद्यायां परमं कौशलं पूर्णतां चावाप्तुं विश्वकर्मणो गृहमाजगाम। तत्राधीतानि तेन नानाचित्रपरिमाणानि अन्यानि च निर्माणनियमानि ( चि०ल० : प्रा०भा०पृ०२९५ )।

गृहोपकरणकर्ता विश्वकर्मा ----

सूर्पमुसलोलूखलादिकं गृहोपकरणं तथा करोति यथा कदाचिन्न त्रुट्यति।

स्थालिका: पीठानि च अट्टालिकान्यपि नित्यम् उज्ज्वलानि भवन्ति। अन्यानि अपि पुष्कर्मसहायकानि पंडशिकादीनि उपकरणानि करोति विश्वकर्मा अप्राप्त्यनन्तरम्। अयमेवं तु गुर्वादेश: स्कन्दपुराणे श्रूयते ( ४।उ६।८६।१२-१४)।

गेहकर्ता विश्वकर्मा ----

गुरवे इच्छानुरूपं स्थानान्तरणीयम् एकदारुनिर्मितम् एकस्तम्भमयं गृहं तेन कृतम् ( स्क० ४।२।८६।१५)।

------00------

विश्वकर्मण आधिदैविकं महत्त्वम्

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ।। १०।८२।३।।
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एनमेव विदुरमृतास्ते भवन्ति ।।

देवमानववन्धना आधिदैवानेन तेषु पुरुषतया पदं कृतम् । स्वरूपाधीनं महत्त्वम् --- कर्मणां तदधीनत्वात्। अत आदावस्य देवस्य आधिदैविकीं रूपे विचारापेक्षाम् अनुभवति । अथ तावदस्य आधिदैविकस्वरूपविचार: प्रारभ्यते । तत्र पुरुषोऽधिदैवतम् । स च क्रान्तदर्शी, पुराणो विश्वशासक:, अणोः अणीयान्, प्राणिजातस्य कर्मफलदाता, अचिन्त्यरूपोऽपि भूत्वा अचिन्त्योऽस्ति ।तमस: परस्तात् स आदित्यवर्ण इत्याम्नायते । आदित्यान्तर्वर्ती अयं पुरुष: स्वांशभूतानां सर्वदेवतानामधिपति: अतोऽधिदैवतमुच्यत इति श्रीधर: । अधिदैवतमधिष्ठात्री देवता । स वै शरीरी प्रथम: स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ।

( बृब्वार्तिक १।१।१४ २)।

स्वरूपविचार:

परं विश्वकर्मणोऽधिदैवतत्वं देवानामधिपतित्वेनैव न शोभते अपितु सर्वेषां प्राणिजातानां करणानामनुग्राहकत्वेनापि शोभते । एवमादितो हिरण्यगर्भ इत्यनेन नाम्ना प्रथितो, नरदेवकरणानां पुरुषतया अनुग्राहक, आदित्यशायी पुराण: पुरुषो विश्वकर्माधिदैवतम् । वेदशास्त्रोक्तपुरुषस्वरूपोऽस्यैव अधिदैविकं रूपमस्ति । स च शक्तिरूपो ज्योतिर्मयादित्यवर्णस्यास्ति । आधि दैविकविश्वकर्मण इदं शरीरं नानादेवैः अङ्गीभूय सम्पाद्यते । तथा हि--- अग्निरास्यम्, मित्रावरुणौ बाहू, इन्द्रो हृदयम्, अश्विनौ प्राण:, रुद्रा: केशा:, अजैकपादहिर्बुध्न्यौ पादौ, द्यौ कर्णौ, मरुतो नखानि, आपो रक्तानि, सूर्यचन्द्रौ चक्षुषी, मारुत्यादयो देव्यः स्नायुस्थानीया:, व्याप्तशक्तिसमवाया आदित्या:, उदरे वसव:, मस्तिष्कौ



विष्णुः
विधाता
रुद्राः केशाः
सूर्यचन्द्रौ
द्यौस्
अश्विनौ
अग्निः
अर्यमा
१- मरुतो नखानि
क², ख² आदित्यादि देव्यः स्नायवः
क² — शुद्धरक्तशिराद्योतकः
ख² — अशुद्धरक्तशिराद्योतकः
आधिदैविकं स्वरूपम्
आपो रक्तानि
इन्द्रः
अहिर्बुध्न्यः
अजैकपात्

विष्णुः, विधाता ललाटः, कण्ठेऽर्यमा ।

एवमस्य ज्योतिर्मये शरीरेऽवयवाणि देव ज्योतींषि समाश्रितानि सन्ति। स्वयञ्च तत्र परमपुरुषरूपेण पुरमष्टापदमलङ्करोति।

पुरुषः पौरुषहेतुः

पुरुषो वै पौरुषहेतुराधारो वा भवति सर्वत्र । तं विना करणेषु क्रियाभावो न जायते । त्वष्टा गर्भेषु भ्रूणानामङ्गानि सम्पाद्य तत्र तत्र तेषां देवान् संस्थाप्य स्वयं प्रविशति पश्चात्तेषामधिष्ठाता देवो भूत्वा । तथा चाम्नायते ---

यदा त्वष्टा व्यतृणत् पिता त्वष्टुर्य उत्तरः
गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन् ।।
( अथर्व० ११।८,१८)।

नरेषु देवेषु च अयमेव स्वांशेन पुरुषरूपेण वर्तते येन तेषां करणानि क्रियासिद्धिं विन्दन्ति ।

देवानामङ्गत्वम् --

यथा अस्माकं शरीरेषु अनङ्गतया सर्वेन्द्रियान्वितोऽङ्गुष्ठमात्रः तेजोमयः पुरुषो वर्तते ईश्वरो भूत्वा तथैव विश्वकर्मणोऽस्मिन् आधिदैविके देहेऽपि आदित्यकरणसज्जितं शक्तिशरीरं विद्यते यदधिकृत्य तत्र विश्वकर्मा विराजते । तच्छरीरस्य मुख्यानि अङ्गानि एवमधिष्ठितानि भवन्ति तैरादित्यैः ---

१- बुद्धौ -- बुद्धिप्रधानं कर्म । अत आदित्यश्रेष्ठो विष्णुः तत्र विराजते ईशो भूत्वा।

२- ललाटे:--- कर्मपद्धतिस्मृतिः कर्मफलानि च येन धार्यन्ते सोऽसौ धाता तत्र तिष्ठति ।

३- कण्ठे:--- यतो निःसृतशब्दमात्रेण सोऽरीन् ( कार्यविघ्नकारान् ) नियच्छति। यद्वा अतोऽधो विद्यमानानि तेजांसि ऊर्ध्वदेशं बहिर्वा गन्तुं न प्रभवन्ति यस्य प्रभावात् सोऽर्यमा तत्रावतिष्ठते ।

४- अहंभावे - तत्र त्वष्टादित्योऽहंभूप इति मन्तव्यः। यतो हि विद्युदग्निशक्तिद्वयोरपि कृम्यादिकेषु कर्मसु अहंभावोऽस्त्येव भवति--त्वष्टु इति भाष्यः:

५- मुखे: - अस्यौ वै शरीरपोषकम्। अतोऽशनं कृत्वा पूषादित्यो वर्तते ।

६- नेत्रयो: -- अनयो: अधिष्ठातृदेवौ मित्रावरुणौ । तावेव दर्शनकर्म कुरुत: ।

७- चित्ते:- भगादित्यमयोऽस्य चित्त:। भजनीयेषु कार्येषु सिद्धिमात्मैक्येन गमयति यत: भगोऽत्र चित्तरूपतां भवते ।

८- हृदये: - अशेषकर्मशक्तिकेन्द्रं हृदयम्। अतस्तस्य अधिष्ठाता देवेषु शक्तिज्येष्ठ: शक्र:। यद्वा सोऽस्य हृदयो भवति ।

९- पादयो:- पादयो: अधिष्ठातांश:। अङ्गानि शेरते यस्मिन् सोंऽश आदित्य:। इतराणि आदित्या अङ्गान्यशंवाधारी कृत्य वर्तन्ते ।

१०- मनसि: - मनो वै इन्द्रियाणां विषयेषु कर्मसु च प्रेरकम् । अत: सवितादित्यमयोऽस्य मन:।

११- हस्तयो: -- अश्वायुतत्त्वरूपां अश्विन अश्विनौ अस्यात्मनो देहस्य बाहू भवत:। एतयोर्विना कार्यंचा न सम्भवति यथा हस्ताभावे ।

१२- उदरे :- एतदङ्गं विवस्वान् आपादयति।उक्ताङ्गान्वितशरीरस्य विश्वकर्मणे विश्वानि धनानि उदरस्थ इव भवन्ति । अत्र विश्वपुष्कलतामेव वीक्ष्य विवस्वान् उदरसम्पादको विहित:।

एवं विधिना देवशक्तिसमन्वितेन शरीरेण शोभितो विश्वकर्मा उद्घोषयति यत् ----

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवै:।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ।।

( ऋ० १०।१२५।१)।।

## सर्वव्यापको विश्वकर्मा

अयमङ्गुष्ठमात्र: पुरुष: अन्तरात्मा --- शक्तिसम्पन्नत्वात् ।अतो जनानां हृदयेषु सदा सन्निविष्टो वर्तते । यथा अग्नि वाय्वादय:। भवत्यत्र श्लोक:---

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा विश्वकर्मा प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।।

अस्यैव प्रवेशप्रभावमभिलक्ष्य श्रीगीतायां श्रीकृष्णोपदिशति ----

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।

परं प्राणिजातेन कर्माणि कारयन् अप्यसौ तेषां कर्मदोषैर्न लिप्यते यथा सूर्यश्चक्षुर्दोषैः। तदधिकृत्यैवात्रोच्यते ----

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वकर्मान्तरात्मा न लिप्यते कर्मदोषेण बाह्यः ॥

असौ वशी एक एवास्ति परमात्मरूपत्या परप्रविष्टोऽयं बहुरूपो भवति। यो विश्वकर्मा आत्मस्थमेनं विश्वकर्मपुरुषं विजानाति स एव शान्तिं विन्दति नान्यः। तदेवं उक्तं श्रूयते ----

एको वशी सर्वभूतान्तरात्मा, एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥

तस्य व्याप्त्यानामस्माकं स एव शरणमस्ति ---

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥

यदि न व्याप्नुयात् सोऽस्मान् विश्वकर्मा अनया कर्मात्मना पुरुषरूपेण वा तर्हि वयं सर्वथा निष्क्रियाः भवेम। क्रियाभावे भवेत् का स्थितिः विश्वस्य अस्माकञ्चेति अनुमानातीतैवास्ति ---तद्भावाभावे ।नाभवद्यदि नरदेवानामधिदैवतं विश्वकर्मा तर्हि सम्भवतः अशोभने भूलोके देवलोके च वृष्टिकालाभावे खिन्नास्ते क्षणमपि जीवितुं नोत्सहन्त । प्राणिशरीरेषु पुरुषतया प्रविष्टोऽयं तेषां करणानि अनुगृह्णाति-- तेषु क्रियाभावं जनयित्वा । जीवनस्य परमलक्ष्यम् --- अमृतत्वं --- कामयमानाः जनाः येनविश्वकर्मणो ज्ञानायैव यतन्ते -----

एष देवो विश्वकर्मा महात्मा, सदा जनानां हृदये सन्निविष्टः।
हृदा मनीषा मनसाभिक्लृप्तो य एतद् विदुरमृतास्ते ॥

## शक्त्याधिदैवतत्त्वम्

उपर्युक्तमाधिदैविकं महत्त्वं प्राणिजगत्परकमस्ति । परं नात्र विश्वकर्मणः आधिदैवतत्त्वं प्राणिवर्गे एवावधारयितव्यम् अपितु शक्तिपक्षेऽपि । स एव सर्वेषां

शक्तीनामधिवेशोऽस्ति । याभिः आदित्य एव उपकरोति विश्वम् । आदित्यान्तर्गतो यमादित्यपुरुषः आत्मशरीरो वा विश्वकर्मा तच्छक्त्यधिपतिः भवति यथात्मा स्वशरीरस्य। यद्वादित्यशक्त्यः तत्रैव सन्ति । स एव ताः शक्तीः विविधेषु लोककार्येषु नियोजयति। अस्य अथादित्यात्मिका शक्तिः चतुर्धा लोकमुपकरोति । तथा हि ----

१- रोगोन्मूलिका शक्तिः

२- वायुगतदोषोघ्न शक्तिः

३- विद्युदिन्धनशक्तिः

४- दर्शनशक्तिः

तत्रादौ रोगोन्मूलिका शक्ति : ----

इयं शक्तिः आत्मनः त्रिभिः रूपैः लोकं सेवते । तथा हि---

अ- वानस्पतिकरूपेण

ब- विज्ञानगृहीतरश्मिरूपेण

स- मुक्तातपरूपेण

अ- वानस्पतिकरूपा शक्तिः ---

प्रथमतस्तु वनस्पतयो रवितापप्रकाशाभावे स्थातुमेव न प्रभवन्ति । यदि तिष्ठन्त्यपि स्वल्पकालपर्यन्तं तर्हि नावहन्ति योग्यगुणान् स्वेषु । रविकिरणैः एव तासु विविधव्याधिशामकगुणाः उत्पाद्यन्ते । यासां रश्मीनाम् आकर्षणकर्म वनस्पतिना विशेषरूपेण क्रियते तासामेव गुणास्तत्र बहुधा पदं कुर्वन्ति । एवं वनस्पतिषु भिन्नव्याधिविनाशकान् गुणान् प्रतिपाद्य प्रकारान्तरेण सैवादित्यशक्तिः रोगोपचाराय भवति औषधिरूपा ।

ब- विज्ञानगृहीतरश्मयः ---

आधुनिकैः वैज्ञानिकैः चिकित्सा कर्मरतैः, रश्मिविश्लेषकयन्त्रेण विश्लिष्य, क्षयरोग राजयक्ष्मादीनां कष्टसाध्यानां रोगाणां शमनकर्मणि उपयोगः क्रियते तेषाम् । तत्र अल्ट्रावायोलेट इन्फ्रारेड नाम्नी द्वौ किरणौ महतो लोकहिताय प्रयुक्तौ भवतः । ऐकाकिरणान्वेषणेन उपकृतं नगर शरीरस्य अन्तःसिंगान् स्वकरेणुमिव

अपसरति । चिकित्साग्रन्थे तेषां विविधोपयोगाः तत्रैव द्रष्टव्याः ।

ख- <u>सूर्यतापकर्मेण</u> ---

यो ऽप्युदयास्तकालमध्ये जगति सूर्यतापप्रकाशो लभ्यते तेनापि लोकः 'डी' इति नामकं विटामिनम् अस्थीनां पुष्टे लभते सामान्यरूपेण । एतदतिरिक्तं सायंप्रातः रश्मिस्नातो नाना व्याधिमुक्तो भवति चिकित्सकं विना । नानावर्णानां दर्पणपात्रेषु निक्षिप्ताः सूर्यतापतापिताः पदार्थाः नैकरोगोपशमनकर्मण्याः भवन्ति । अत्र लौकिकी रश्मिचिकित्सापद्धतिः द्रष्टव्या । सूर्येण केषाञ्चिद्रोगाणामुपशान्तिः वेदेष्वपि श्रूयते -----

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ।।

( ऋ०१।५०।११)।

अनु सूर्यमुदयतां हृद्द्योतो हरिमा च ते ।
गो रोहितस्य वर्णेन तेन त्वा परि दध्मसि ।।

( अथर्व० १।२२।१)।

उक्ताभ्यां वचनाभ्यां हृद्रोगनाशो हरिमापनीतिश्च श्रूयते सूर्यं रश्मिप्रभावैः।
अपचीव्याधिः रविचन्द्रांशुभिः शान्तिमुपगच्छति । तथा चाम्नायते ---

अपचितः प्रपतत सुपर्णो वसतेरिव ।
सूर्यः कृणोतु भेषजं चन्द्रमा वो ऽपोच्छतु ।।

( अथर्व० ६।८३।१)।

कामलपीडितो लोहितरश्मिषु स्नात्वा स्वस्थोभवेदिति श्रुतिः---

या रोहिणीर्देवत्या गावो या उत रोहिणीः ।
रूपं रूपं वयो वयस्ताभिष्ट्वा परि दध्मसि ।।

( अथर्व० १।२२।३)।

दीर्घायुलाभोऽप्युपलभ्यो रश्मिस्नानेन ---

परि त्वा रोहितैर्वर्णैर्दीर्घायुत्वाय दध्मसि ।
यथायमरपा असदथो अहरितो भुवत् ।।(अथर्व०१।२२।२ )।

उपन्नादित्यो रश्मिभिः शीर्ष्णो रोगमपाकरोति ---

सं ते शीर्ष्णः कपालानि हृदयस्य च यो विधुः ।
उपन्नादित्य रश्मिभिः शीर्ष्णो रोगमनीनशो ङ्गभेदमशीशमः ।।
( अथर्व० ९।८।२२)।

गोक्रिमिनाशः ---

क्रिमिरोगपीडितायाः गोः क्रिमयो रश्मिभिः नाशं विन्दन्ति ।

तथा च श्रुतिः ---

अवनादित्यःक्रिमीन् हन्तु निम्रोचन् हन्तु रश्मिभिः । ये अन्तः क्रिमयो गवि ।। ( अथर्व० २।३२।१)।

कुमारक्रिमिव्याधिनाशः --

मानवदेहे अपि क्रिमिरोगमपि इन्द्रादित्यो नाशयति। यथा च भवत्यत्र श्रुतिः ----

अस्येन्द्र कुमारस्य क्रिमीन् धनपते जहि ।
हता विश्वा अरातय उग्रेण वचसा मम ।
( अथर्व० ५।२३।२)।

रश्मिभिः विषप्रभावनाशः --

विषापनयनकर्मण्यपि प्रभवन्ति रविरश्मयः इति श्रुतिः ---
सूर्ये विषमासजामि दृतिं सुरावो गृहे ।
सो चिन्नु न मराति नो वयं मरामारे ।
अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ।।
( ऋ० १।१९१।१०)।

२- वायुमण्डलशोधन शक्तिः -

वायुमण्डले व्याप्तान् दृष्टादृष्ट कीटाणून् घ्नन्ति रविरश्मयः। वेदेषु एते कीटाणवो यातुधानो यातुधानी, पिशाचरक्षांसि इत्यादिभिः शब्दैरुच्यन्

एतान् सर्वान् उत्पन्नादित्यो विनाशयति। तथा च श्रूयते ----

उद् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।
दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन् ।।

( अथर्व० ५।२३।६)

उत्पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।
अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्य: ।।

( ऋ०१।१९१।८)

एवमहर्निशं लोकोपकाराय निहन्ति आदित्यो नानादृष्टादृष्ट घातकान् कीटाणून् ।

अपि चायं वृक्षवनस्पतिव्याप्तान् कीटाणून् मृत्युं गमयति शोधयति च लोकहिताय ।

३-विद्युदिन्धनशक्ति: ---

मेघाऽऽपस्यापा विद्युत्प्रकृतिरेवास्ति । तेनैव तत्र तत्र इयं शक्ति: निवधीयते । नानायन्त्राणां सञ्चालनार्थं प्रयुक्ता जलविद्युदपि तदैवास्ति । यतो हि तदभावे जलानां द्रवत्वं न सम्भवति यदा जलत्वैव न सम्भवति ।

तैलकृष्णाश्मवनस्पतीषु प्राप्तेन्धनशक्तिरपि तेनैव दीयते अन्यथा न भवेत्तत्र प्रज्वलनसामर्थ्यं: केषुचिदंशेष्वपि । यज्ञाग्नि: तत एव तेजांसि लब्ध्वा प्रज्वलति ।

प्रत्यक्षरूपेण सूर्यशक्ते: प्रयोगोऽद्यावधि सीमित एवास्ति। यद्यपि विशिष्टदर्पणानां योगै: अग्नित्पादनप्रयोग: प्राचीनोऽस्ति , ( आर्किमिडीज इत्याख्यस्य व्यक्तिना स्वशत्रूणां रोमवासिनां जलयानेष्वग्नि: प्रज्वालित: ख्रीष्टाब्द नैत्रादित्योपरपाणिशतवर्षप्राक् ) तथापि महत्त्वदृष्ट्या नगण्य एवास्ति --शक्ति-संकलनपद्धते: ज्ञानाभावे। एवमेव पात्रेषु पचनीयानां खाद्यानां पाकप्रयोगोऽपि दर्पणयोगे साफल्येन कृत: । परं सा विधिरपि लोकव्यवहारयोग्या नास्ति । यतो हि --

१- शक्तिसंकलनविध्यभावे प्रतप्तसूर्यदर्शनमनिवार्यं भवति यच्च शीतप्रावट्कालेषु दुर्लभं भवति । अन्यच्च सूर्याभावे पाको न सम्भवति ।

२- पदार्थपाचनक्रिया समयसाध्यास्ति यामय कोऽपि न वाञ्छति ।

३- सर्वतुलभयन्त्राभावे च ।

संयुक्तराज्य अमेरिकेत्याख्यस्य देशस्य कैलिफोर्निया प्रान्तस्य केनचिज्जनेन वृहदाकाराणां व्यवस्थितैः दर्पणैः सम्पादितशक्त्या सार्धद्वयश्वशक्तेः यन्त्रः परिचालितः । परं यन्त्रविशेषेण महत्परिमाणैः सूर्यकैः संकलनं न सम्भवमिदानीम् । अतः आदित्यशक्त्या यन्त्रयानादीनां सञ्चालनं न भवति ।

तथापि अस्मिन् विषये वैज्ञानिकाः अन्वेषणपराः सन्ति यत् सूर्यशक्तेः विद्युदिन्धनस्थाने प्रयोगः कथं सम्भविष्यति। सूर्यशक्त्या लघुयानचालनप्रयोगो रूसीवैज्ञानिकैः चन्द्रतले,लूनाखोद -१ इत्याख्यस्य यानस्य सफलसञ्चालनेन कृतः । १९७३ ख्रीष्टाब्दस्य मईमासे अमेरिकादेशस्य वैज्ञानिकैः अन्तरिक्षे प्रेषितप्रयोगशालायाः शक्तियन्त्राणि ( बैटरीज) आदित्यादेव शक्तिं गृहीत्वा तत्र व्यवस्थामापादयन्ति ।

यावत् सूर्यशक्तिसंग्राहकनियन्त्रको यन्त्रविशेषो न भविष्यतः तावदस्याः महच्छक्तेः लोकप्रदो प्रयोगो न सम्भविष्यति । यत्नेभ्यो यतन्ते वैज्ञानिकाः। सफलतां सम्यां भविष्यति ।फ्रान्सदीपस्य ( उत्तरी अमेरिकादेशस्य) वैज्ञानिकाः आशान्विताः सन्ति यत् पञ्चदशवर्षेषु सूर्यरश्मीणां विद्युत्स्थाने प्रयोगः सम्भवो भविष्यति ।

४- दर्शनशक्तिः -

आदित्यो लोकप्रकाशको नान्यः। अस्याभावे यदि कथमपि जीवनानि समभविष्यन् तर्हि तानि दर्शनशक्तिरहितानि समभविष्यन् । आदित्याधीना सर्वथा दर्शनशक्तिः। नात्र व्याख्या उपयुज्यते ।

सुस्पष्टमुपवर्णितेन विश्वकर्मण आधिदैविकं महत्त्वम् । यं विना वयं पदामपि विन्दितुं न पारयामः का कथा पुनः क्रियाणाम् ।

--------००--------

## विश्वकर्मणोऽधियज्ञात्मकं महत्त्वम्

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ।।
( ऋ० १०।८१।७)।

विश्वकर्मा यजमानः, साधनपात्रसाधकः ।
पुरोहितश्च, यज्ञेशः , दाता भोक्ता च वर्षकः ।।

## भूतभावोद्भवकरो यज्ञः

देवतोद्देशेन चरुपुरोडाशादीनां द्रव्याणां परित्यागो यज्ञः । सृष्टेः आदावेव प्रजाभिः सार्धं प्रजापतिना तासां परम श्रेयसे यज्ञाः कृताः। वेदविधिना क्रियमाणैः यज्ञ : देवान् भावयन्तो जनाः अभीष्टार्थैः प्रमुदिताः भवन्ति। यज्ञ एव प्रजानाम् उत्पत्तिवृद्धिहेतुः । यज्ञमुद्दिश्य कृतं कर्म कर्तारं न बध्नाति कर्मपाशे । तदितराणि कर्माणि कर्तुः बन्धनाय भवन्ति। यज्ञशिष्टाशिनो जनाः सर्वैः किल्बिषैः प्रमुच्यन्ते अन्ये अयाज्ञिका मोघं जीवन्ति पापाशिनो भूत्वा । न विन्दन्ति संसारक्रान्तम् अयाज्ञिकाः । यज्ञाद् पर्जन्यो भवति । पर्जन्यादन्नानि भवन्ति अन्नाच्च भूतानि । एवं यज्ञ एव भूतभावोद्भवकरो भवति। एतीदं शास्त्रमतम् ।

उक्तगुणविशिष्टो यज्ञः कर्मजः । तच्च शरीरसाध्यं यस्मिन् कर्मात्मना विधत्ते विश्वकर्मा नानाकर्माणि कारयन् । यज्ञस्य शरीरसाध्यत्वाच्चनासौ वर्ततीत्युच्यते। अतः यज्ञो विश्वकर्मणा शासिते पुरे निवसतीति वक्तुं शक्यते । एवं विश्वकर्मण एकस्य प्रकारस्य अधियज्ञत्वम् ।

## पात्रसाधनसम्पादकरूपेणास्य अधियज्ञत्वम् ---

चरुपुरोडाशहव्यद्रव्यादिभिः यज्ञसम्पादकैः पदार्थैः विना यद्वा चमसप्रोक्षणीप्रणीताज्यस्थालीकलशादिभिः पात्रैः विना कोऽपि यज्ञोऽस्तित्वं प्राप्तुं न पारयति। हव्यद्रव्याणां संकलनकर्तारः स्थूलशरीराणां द्रष्टा विश्वकर्मणः

भिन्नाः भूत्वापि आत्मदृष्ट्या अभिन्ना एव सन्ति, यतो हि--- 'आत्मनो वै जायते पुत्रः' इति श्रुतिः । 'यो नः पिता जनिता' (१०।८२।३), 'य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः ।' (१०।८१।१) इत्यादिभिः वेदवाक्यैः अस्य पितृत्वं प्रथितमेव । अतः हव्यद्रव्याणां कर्तारः विश्वकर्मनाम्ना ख्याताः सन्ति। तथा चास्माकं प्राचीना परम्परा । पुराणेषु 'विश्वकर्मभिः' इत्यादीनां बहुवचनान्तपदानाम् अभावो न वर्तते ।

एवमेव चमसादीनां पात्राणां रचनापि विश्वकर्मभिरेव क्रियते येषामभावे यज्ञकर्म न सम्भवति ।

अतः द्रव्यपात्रविषयेऽपि विश्वकर्मणो देवस्य स्वाधियज्ञत्वं सिध्यति ।

अस्य पौरोहित्यमृत्विक्त्वं च ---

विश्वकर्मा इयेतां तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षस्य ह्येतत्पृष्ठं व्यचस्वत् प्रथस्वदन्तरिक्षम् ---( मा०श० ८।३।१।६)। ----- स एतां द्वितीयां चितिमपश्यत् तामुपाधत्त तदन्तरिक्षमभवत् ( तै०सं० ५।७।५)। ----- विश्वकर्मा इयेतां चितिं तृतीयां चितिमपश्यदन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमित्यन्तरिक्षस्य ह्ययं पृष्ठे ज्योतिष्मान्वायुः( मा०श० ८।२।१।३ )।

'इमं यज्ञं वितत विश्वकर्मणा देवाः यन्तु सुमनस्यमानाः।' ( अथर्व० २।३५।५ )। इत्यादिभिः वाक्यैः अस्य पौरोहित्यं ऋत्विक्त्वञ्च सिध्यति। ऋषय एव भवन्ति पुरोहिताः अतो नात्र द्वित्वमुच्यते अनयोः ।

अस्य यजमानत्वम् ----

'य इमा विश्वा भुवनानि जुह्वत्' इति वाक्येनास्य यजमानत्वं श्रूयते । यद्वा विश्वेषां कर्मणां कर्ता इति विश्वकर्मा । अतः यजमानादिभिः क्रियमाणानि यज्ञकर्माणि तत्कृतान्येव अवगन्तव्यानि--- तेषु व्याप्यत्वात् ।

अस्य देवत्वम् ----

'विश्वकर्मा हविरिदं जुषाणः' (अथर्व० का० ४३।१३)। विश्वकर्मन् हविषा वावृधानः, स नो विश्वानि हवनानि जोषत् ( १०।८१।६-७) । नमो विश्वकर्मणे स उ पात्वस्मान् '( अथर्व० २।३५।४)। जुहोमि विश्वकर्मणे विश्वहार्यं

हवि: ( तै०सं० ५।५।४, मैत्रा० २।१०।६८, काठ० ३६।२४)। आज्यं विश्वकर्मणे इति जुहोति ( कात्या० श्रौ० १६।७।१)। इत्येतै: अन्यैश्च वचनै: विश्वकर्मणो देवत्वमाम्नायते ।

देवर्षियजमानादिषु एकमपि विना यज्ञक्रिया न सम्भवति । तेषाञ्च सर्वेषामीशो विश्वकर्मा । अत: सर्वाभि: दृष्टिभि: विश्वकर्मा यज्ञेश: अधियज्ञो वास्ति। वस्तुतस्तु विश्वकर्मभि: साधितसाधने यज्ञे ऋत्विगादिभि: विश्वकर्मभि: विश्वकर्मणे एव हव्यद्रव्यं हूयते इति वाच्यं भवति। एवं विश्वकर्मा व्यावहारिकत्वेण अधियज्ञोऽस्ति यं विना यज्ञभावो न सम्भवति । अत: विश्वकर्मा वै अधियज्ञ इति सिद्धम् ।

अथ महत्त्वम् ---

महत्त्वं कर्मपरकम् । अतस्तद् यज्ञकर्मसु अनुसन्धेयम् । याज्ञिककर्मसु किमतिमहत्त्वपूर्णं किञ्च न्यूनमहत्त्वपूर्णमिति वक्तुं न शक्यते साधिकारम् ---- दृष्टि कालदेशस्थानां महत्त्वभेदजनकत्वादत्र । वस्तुत: वेदविहितपात्रविन्यासादिषु सर्वाणि द्रव्यकर्माणि अनिवार्याण्येव अवबोध्यानि --- यज्ञदोषपरिहारार्थम् । एवं सति विश्वकर्मणोऽधियज्ञात्मकं महत्त्वमनुमानातीतं वर्णनातीतञ्च भवतीति ।

-------००-------

## विश्वकर्मण आध्यात्मिकं स्वरूपं तस्य महत्त्वञ्च

ये बध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टानग्रे च मुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ।।
।। अथर्व० २।३४।३ ।।

### स्वभावोऽध्यात्ममुच्यते

अस्य पञ्चधारूपेषु --- आध्यात्मिकम्, आधिदैविकम्, अधियज्ञात्मकम्, आधिभौतिकं वैज्ञानिकञ्चेति --- प्रथमं तावद् आध्यात्मिकं स्वरूपम् । "स्वभावो -ध्यात्ममुच्यते " ( गीता ८।३) इत्येतद् वचनानुसारं कर्ममयं विश्वकर्मणोऽध्यात्मरूपमिति निश्चीयते । यतो हि कर्म एव जीवेषु स्वभावतया अविच्छिन्नरूपेण विद्यते । तथा च उक्तं गीतायामपि ---

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।।३।५ ।।

अतो विश्वकर्मा स्वस्मिन् आध्यात्मिके स्वरूपे कर्मात्मना वर्तते। अन्याः देवताः अङ्गत्वं भजन्ते ।

### देवानामङ्गत्वम्

अथ अस्य आध्यात्मिके देहे देवस्थानानि उच्यन्ते। तथा हि--

मूलाधारचक्रे अग्निदेवः, स्वाधिष्ठानचक्रे सूर्यः, मणि पूरचक्रे इन्द्रः (विद्युद्रूपेण ज्योति रूप चक्रपूरकः), अनाहते चक्रे कालः, विशुद्धाख्ये चक्रे मित्रावरुणौ, आज्ञाचक्रे च सरस्वती पदं कृत्वा प्रतिष्ठिता भवति। कर्मात्मना विश्वकर्मणा यदा मूलाधारे स्थितोऽग्निदेवो ध्मायते तदा प्रज्वलितोऽसौ स्वाधिष्ठानभूतं स्वाधिष्ठानचक्रस्थं सूर्यमुपैति प्रचण्डशक्त्यर्थम् । ततो लब्धशक्तिसहितोऽयं मणिपूरचक्रं समुपलभ्य विद्युत्त्वं भजते । विद्युत्त्वं गतोऽयमग्निदेवो नाहतं चक्रम् ( विद्युद्भास्वरयन्त्रम् ) उपैति। यत्र असौ कालवद् अनाहताविच्छिन्नरूपेण वर्तते। यद्वा कालरूपेणैव वर्तते । ततो विशुद्धाख्यं चक्रं प्राप्य विद्युदग्निः घनत्वं भजते अतोऽस्मिन् चक्रे उक्तौ मित्रा-




कर्मणो मा प्रमदः

मणिपूरचक्रम्
(ऐन्द्रीशक्तिः)

स्वाधिष्ठान-
चक्रम्
(सूर्यशक्तिः)

मूलाधारचक्रम्
(अग्निशक्तिः)

त्रिशक्तिसमन्विता
कुण्डलिनी

वरुणौ । तत आज्ञाचक्रगता विद्युत् सरस्वती --- फलवती कार्यसम्पादिका वा -- भवति । सैव यन्त्रकर्तृणामाज्ञाप्रदायिनी भवति । अत एव आज्ञाचक्रे प्रतिष्ठितेति। एवं कर्मात्मना विश्वकर्मणा जाग्रतावस्थां प्राप्ता शक्तिरूपा कुण्डलिनी कर्मात्मानं विश्वकर्माणं प्रापयति। विश्वकर्मा कर्मात्मना कर्मात्मानमुद्धरतीति न विद्म । गीतायामपि तथैव उच्यते --

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।।६।५।।
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ।। ६।६ ।।

अथ योगारविन्देतरभागेषु स्थितानां देवानां नामानि ।

तत्र घ्राणे अश्विनौ ----

आध्यात्मविज्ञाने ईशप्राप्तेः आधारः प्राणायामः। यस्य च साधन-कर्मणि जलवायू प्रमुखौ स्तः। एतयोरभावे प्राणायामक्रिया न सम्भवति कथमपि । प्राणायामाभावे चित्तस्य एकाग्रता ईशप्राप्तिर्वा तु सर्वथा असम्भवैवास्ति। एवमेव कर्मकारेणापि अश्विनौ --- जलवायू -- विना कर्मात्मनो विश्वकर्मणः प्राप्तिः नितान्तं दुर्लभा भवतीति विचार्य घ्राणेऽश्विनौ प्रोक्तौ अत्र ।

नेत्रयोः शशिसूर्यौ ----

योगे इडापिङ्गले रविशशिनामाभ्यां ज्ञायेते याभ्यां पूरकरेचकौ सम्पाद्येते ।अनन्तरम् एतयोः साहाय्येनैव अहर्निशं स्थायी आत्मप्रकाशो जायते । आत्मब्रह्मलाभो वा भवति। एवमेव विश्वकर्मा शशिसूर्यप्रभायोगेन नेत्राभ्यां पश्यति सृजति चाहर्निशं नानाविधानि कलात्मकानि वस्तूनि । कर्मरतोऽयमपि जनो कर्मात्मानं विश्वकर्माणमुपैति ।

ललाटे विधिः ---

जनललाटलेखको विधिः। स च तत्र पदं कृत्वा प्रतिष्ठितोऽस्ति । यो ललाटमध्ये स्वकीय चित्तैकाग्रतां नयति, सो विधिं विन्दति । एवमेव यस्य

विश्वकर्मण: स्मृतिपथे ( ललाटे) कर्मविध्यभिमानी देवता सदैव दृश्यते, सो नित्य-नूतनां कर्मविधि देवतां विन्दति नान्य:। विश्वकर्मणो ललाटे विधि: अधिकारीति कृत्वापदं न करोति अपितु विश्वकर्मणैव स्वेच्छापूर्वकं तत्र स्थाप्यते । विधिरूपाणि विश्वकर्मण इच्छाधीनानि भवन्ति सर्वथा । नायं विधिवशो विश्वकर्मा ।

भ्रूस्थितो रुद्र: --

संहारको रुद्रो भ्रुवस्थ उक्तो यतो हि वज्र इव विनाशकारी अस्त्रम् अस्यैव कृतिरस्ति । विश्वकर्मणो भ्रुकुटिविलास: संहार समर्थोऽस्ति । सृष्टिनाश-सामर्थ्यसम्पन्नत्वादेव रुद्रोऽस्य भ्रूस्थ उक्त:, तच्च युक्तियुक्तम् । भ्रूलोमानामिव नैका: रुद्रा:। भ्रुवौ च क्रोधव्यञ्जकौ अतोऽपि तत्र रुद्रस्थिति: उक्ता ।

कण्ठे भारती ---

यस्य विश्वकर्मणो ललाटे विधि: वर्तते तस्य कण्ठे देवी भारती अविनाभावेन स्थित एव गुरुत्वव्यञ्जनाय । भावाभिव्यक्ति व्यक्तिविज्ञानवैभवव्यक्ती-करणाय अपेक्षितास्ति सा च भारत्येव सम्भवा। अत: सा कण्ठे मता । तेन वाक्यनो भावव्यञ्जनकर्मणि विनियुक्तेति अवगन्तव्योऽत्र ।

कर्णयो: द्यावापृथिव्यौ ---

कर्णयो: मलरूपेण पृथिवी अवकाशभावेन च आकाशो नित्यं वर्तते । शिल्पकर्मसु श्रवणकर्मणाम् अनिवार्यत्वादेते तेन श्रवणकर्मणि विनियुक्ते ।

हस्तयो: ऋभुगणा----

त्रिविधशक्तिचालितै: यन्त्रै: शिल्पकर्मकर्तारौ एतौ त्रौ गणौ अभीप्सिता-वसरेषु हस्तस्थानीयौ भवत: । यद्वा विश्वकर्मणोऽधीतशिल्पशास्त्रा: ऋभवो भृगवश्चास्य शिष्या: सन्ति। शिष्या: गुरुहस्ता:। अतो विश्वबाहुना ते हस्तस्थानीया: कृता ।

पादयो: वसव: साध्याश्च ---

वसव: साध्याश्च विश्वकर्मणा पादयो:प्रतिष्ठापिता:। यतो हि धर्मात्मनां पदानि स्पृशन्ति नित्यमेता: देवता:। अत्र वसव: त्रिविधधनप्रदायका: तद्रूपा: वा सन्ति। साध्या: साधकव्यञ्जका: सन्ति ।

रक्तकोशयो: त्रित आप्त्योऽपां नपाच्च -

दक्षिणे रक्तकोशे त्रिधाशक्तिप्रतीक: त्रित आप्त्यो विराजते । तत एव त्रिधा शक्तिरक्तो विश्वकर्मणोऽस्मिन् देहे सञ्चरति।

वामे रक्तकोशे अपां नपातो विद्यते । यथायं कोशसात्म्यसात्कृतम् अशुद्धं रक्तं संशोध्य सञ्चारयति अपरकोशाय तथायं देवोऽपि पूर्वाग्निशक्तिव्याप्तजलाद् रुधिरस्थानीयां विद्युतं संप्रापयति अस्य शरीरे अपरकोशाय।

शोध्यशोधितशक्तिशोणितकेन्द्रौ स्तो रक्तकोशौ ययो: क्रमेतु विश्वकर्मणा त्रित आप्त्योऽपां नपाच्च नियोजित:।

हृदये कर्मात्मना स्वयं विश्वकर्मा ---

आत्मनोऽस्मिन् देहे कर्मात्मनायं देवो हृदये तिष्ठति यथा पुरुषो जीवो वा। ईश इव कर्मात्मना सर्वं जगद् व्याप्य वर्तते विश्वकर्मा यद्वा । स एव सर्वाणि भूतानि कर्ममायया यन्त्रारूढानीव भ्रामयति। कृष्णोपदिष्टेयमुक्ति: विश्वकर्मणो विषये अक्षरश एव घटिता भवति ---

ईश्वर: सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।। १८।६१ गीता ।।

बुद्धिस्थानीयो बृहस्पति: --

देवगुरु: बृहस्पतिस्तेन बुद्धिपदे नियुक्त:। सत्त्वमयत्वादस्य गुरो: तत्र कदापि विवेकविनाभावो न जायते । शिल्पकर्मणि यस्य भावो परिहार्यरूपेण अपेक्षितास्ति।

अहंभावे सत्यं प्रतिष्ठितम्

अहमित्यस्मिन् दुर्भावे तेन सत्यमञ्च सद्गुणाभिमानी देवो विनियुक्त:-- स्वयं सतोमयत्वात् । विश्वकर्मणोऽहं भावोऽपि सत्यमयो भवतीति प्रशस्तोविषय: । यद्वा व्यवहारे सत्याभिमानी भवति विश्वकर्मा ।

मनो वरुण: --

मनस्पदे विश्वकर्मणा वरुणो नियुक्त:। वारिधिपति: वरुणो भवविषयोदधिपति: भाति मनस्पदे । यो न, निरङ्कुश: स्वेच्छाचारी विषय-


आध्यात्मिकं देहम्
१- ललाटे — विधिः
२- कर्णयोः — द्यावापृथिव्यौ
३- हृदये — विश्वकर्मा
४- मनो वरुणः
५- अहंभावे सत्यम्
६- बुद्धिः बृहस्पतिः
सूर्यः
शशिः
अश्विनौ
भारती
मित्रा-वरुणौ
अपां नपात्
मनः
अहम्
अ
ग्निः
शक्तिरूपा कुण्डलिनी
वसवः
साध्याः

विहारी मन इव लम्पटोऽस्ति अपि तु संयतो राजर्षिरिव विषयोदधिमवगाहति।
तथा चोच्यते ---

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद विद्वान् यन्तेव वाजिनाम् ।।

वरुण: स्वयं चराचराणां शुभाशुभकर्मप्रदाता दण्डविधायकश्च अस्ति । अतोऽयं मनःसत्पदं प्राप्य तदिव निरङ्कुशो विषयविहारी न भवति । एवं विश्वकर्मा राजर्षिर्मनो भवति वरुणं तत्पदे अभिषिच्य ।

एवं नानादेवता:विश्वकर्मण आध्यात्मिकं स्वरूपमङ्गतया विभूषयन्ति विराजते च तासां मध्ये राजतया कर्मात्मको विश्वकर्मा ।

ज्ञानकर्मयोगविग्रहस्य इदं शरीरम् । अत्र ज्ञानं सत्त्वमयत्वात् सुवर्ण-व्यञ्जकं भवति यस्य प्रकाशे कर्मपद्धति: प्रकाशिता भवति । कर्मणात्र कर्मशक्तिरुच्यते या जीवान् विश्वकर्माणं वा कर्मसु नियोजयति। अत इदं रजोवर्णस्य रक्तस्य-व्यञ्जकं भवति। योगेनात्र मनोयोग उच्यते । मनोयोगदशायां कर्मलीनो जनो विश्वं विस्मृत्य कर्मलोक एव विहरति । न पश्यतीमं लोकम् । अतोऽयं योगो वर्णेन कृष्ण इत्युक्त:। एव चित्रवर्ण: चित्रमिदमस्य शरीरं पवित्र शोभते ।

उपासनाफलम् :---

येन विश्वकर्मणा कर्मात्मना अस्येदमाध्यात्मिकं स्वरूपं ध्यायते स तदवश्यमेवावाप्नोतीति ।यथा ब्रह्मदर्शनप्राप्तो जनो ब्राह्मस्थितिं प्राप्नोति तथैव विश्वकर्मणो भक्तोऽपि तद्रूप सिद्धिं प्राप्य विश्वकर्मत्वं भजते । यथा योगमार्गेण गच्छता हरिभक्तेन इष्टप्राप्तिपूर्वं नाना ऋद्धय: सिद्धयश्च प्राप्यन्ते ततो हरि: प्राप्यते। तथैव विश्वकर्मण उपासकेन सिद्धिमार्गे आदौ त्रिशक्तिसम्पादनकौशलरूपा: ऋद्धय: पश्चाच्चैतेषां यन्त्रप्रयोगरूपा: सिद्धय:। अनन्तरं विश्वकर्मणो दर्शनम् ।

सिद्धिक्रम:

विश्वकर्मणो भक्तस्य सिद्धिक्रम एवं भवति -----

मूलाधारचक्रसिद्धो जनोऽग्नि-शक्तिसिद्धो भवति। तैलेन्धनप्राप्ता: भौतिकाग्नय: केषु केषु रूपेषु, कै: कैश्च

प्रकारैः यन्त्रपरिचालनयोग्याः भवन्तीति ज्ञायतेऽत्र सिद्धया ।

स्वाधिष्ठानचक्रप्रविष्टोऽयमग्नेः स्वाधिष्ठानभूतस्य सूर्यस्य शक्तिसञ्चये नैपुण्यं समधिगच्छति । अनन्तरं मणिपूरे प्रविष्टोऽयं सूर्याद्भिः विद्युच्छक्तिसम्पादनकौशलं तयोः यन्त्रप्रयोग विधिञ्च विजानाति ।

एवं त्रिचक्राक्रान्ता त्रिविधशक्तिसम्पादनपद्धतिं प्रयोग विधिञ्च वेत्ति वेत्ति ।

अनन्तरम् अनाहतं चक्रमधिगतोऽस्य भक्तः प्रथमं नानाग्निशक्तिपरिचालितैः यन्त्रैः विविधानि शिल्पानि उत्पादयति। तथैव कलाप्रयोगैः स्वहस्तकौशलं प्रकटयन् तथा विधेषु यन्त्रेषु उत्पादनकर्मसु च सुदक्षो भवति। अग्नियन्त्राणां कलात्मकैः व्यवहारैः अग्निप्रयोगक्रमविद् विश्वकर्मा जायते ।

ततः प्रविशति विशुद्धाख्ये चक्रे यत्रासौ सूर्यशक्तिचालितैः यन्त्रैः वस्तूत्पादनेषु दक्षतामवाप्नोति। यन्त्राणां व्यवहारैः तेषां विषये सविशेषं ज्ञानमुपैति । अत्रासौ सूर्याग्नि शक्तिप्रयोगविशारदो भवति ।

अन्ते आज्ञाचक्रमधिगतो जनो विद्युद्व्यवहारेऽपि शौण्डो भवति ।
एवं षट्चक्रसिद्धो भक्तस्त्रिविधशक्तियन्त्राणां सम्पादनपरिचालनकर्मसु कुशलो भवति ।

यथा षट्चक्रभेदकस्य हरिभक्तस्य कुण्डलिनी शक्तिः जाग्रता भवति। यस्याश्च अनुग्रहादसौ परमेश्वरं लभते । तथैव विश्वकर्मणो भक्तोऽपि षट्चक्राणि भित्त्वा अन्तः स्थां त्रिशक्तिसमन्वितां कुण्डलिनीं जाग्रतावस्थां प्रापयति ।
इयं जाग्रता कुण्डलिनी कर्मात्मकेन विश्वकर्मणा संगमयति जनम् । त्रिशक्तिसम्पादनव्यवहारकुशलो भवति जाग्रतकर्मवान् । एवं विधस्य जनस्य कर्मात्मना विश्वकर्मणा सह सदैव एकात्मभावो विधेः । कर्मणा कर्मात्मकं विश्वकर्माणं प्राप्तोऽयं भक्तोऽपि परमेश्वरपदेन व्यक्तीकृतं विश्वकर्माणमेव समधिगच्छति प्रकारान्तरेण इति अवगन्तव्यः यतो हि कर्मणैव जनकादयोऽपि संसिद्धिमास्थिताः। तथा च पठ्यते गीतायाम्---

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः।। ३।१९।।

कर्मणैव हि संसिद्धिमास्थिता: जनकादय:।

लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ।। ३।२०।।

विश्वकर्मण इदमाध्यात्मिकं स्वरूपम् आध्यात्मिक दृष्ट्यापि अतिमहत्त्वपूर्णमस्ति येन कर्मयोगेन विश्वकर्मा सहज भावेन समुपलभ्यते । तथा चास्ति सुस्पष्टं ब्रह्मप्राप्तानां साधूनां प्राप्तिचरितै:। अस्माकं श्रेष्ठे देशे जाता: जीवा: सृष्ट्या: समारम्भणादेव ईशप्राप्तिप्रयासपरा: दृश्यन्ते । आदौ जातोऽज: आत्मन-मेकाकी दृष्ट्वा, स्वहेतुभूतस्य परमेश्वरस्य प्राप्तिकर्मण्येव प्रथमं प्रवर्तते । ततो जाता: शुकसनकादयोऽपि प्रपञ्चं विहाय जन्मत एव तदन्वेषणकर्मणि निरता: दृश्यन्ते । मैथुनीसृष्टिक्रमे प्रचलिते जाता: असंख्याता ईशभक्ता: ऋषिमहर्षि महात्मान:। एतै: सन्तर्षिभि:यथारुचितप्रकारेण पुराणपुरुषस्य प्राप्त्यै प्रयत्ना: कृता:। तेषु यै: येन कर्ममार्गेण ईशोदृष्ट: प्राप्तो वा तै: सदैवप्रशंसितं वरणीयम्चोक्तम् । अधर्मकैस्तु स्वतो भिन्ना: कर्ममार्गा: निन्दिता: अपि दृश्यन्ते । महात्मभि: स्वस्वमार्गा: सुगमा: परकृतास्च दुर्गमा: अनुपयुक्ता: वा कथिता: प्राय: प्राप्यन्ते । तथा हि----

निर्गुणब्रह्मोपासकेन कर्मयोगिना कबीरदासेन सगुणोपासकानां मूर्तिपूजापद्धति: निन्दिता भवति। रामभक्तेषु अग्रगण्येन लोकनायकेन श्रीतुलसीदासेन ` ज्ञानमार्ग: खड्गधारेत्युक्त्वा दुर्गमो भणित:(राम० उत्तर० दोहा ११६ चौ०१)।

ब्रह्मप्राप्तिमार्गा: -

यद्यपि परब्रह्म सगुणागुणभेदेन द्विविध एवोक्त: तथाप्यस्य प्राप्ते: कर्ममार्गा: मतसम्प्रदायभेदै: नानात्वं गता: । तत्प्राप्तिमार्गा:( प्रमुखा:) एवं भवन्ति ----

ब्रह्मगता: सर्वे एव मार्गा: कर्ममूलका: सन्ति । यतो हि विश्वविरक्तो ध्यानस्थो महायोगी अपि कर्मरत एवास्तीत्यवगन्तव्य:। तथा चोपदिशति अर्जुनाय श्रीकृष्णो गीतायाम् ----

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषो≈श्नुते ।। ३।४।।

यद्वा --- न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।। ३।५ ।।

अयं ब्रह्मप्राप्तिहेतुः कर्ममार्गः पुनः सन्तपुरुषैः, योगिभिः कर्मयोगिभिश्च द्विविधा विभक्तो भवति। कर्मसंन्यासमार्गः कर्मयोगमार्गश्च । तत्र कर्मसंन्यासमार्गिणोऽपि प्रकृति भेदेन द्विविधा भवन्ति। ज्ञानयोगमार्गिणो भक्तियोगमार्गिणश्चेति। ज्ञानमार्गिष्वपि भवन्ति नैकप्रकारस्य योगिनः। तत्र केचिद् यमनियमासनादीनाञ्च कष्टप्रकृत्या पालनं कुर्वन्तः समाधिसुखमनुभवन्ति । केचिच्च कृच्छ्र- चान्द्रायणपञ्चाग्निसेवनादिभिः व्रतैः शरीराणि शासयन्ति ऋषिमहर्षयः।

भक्तिकर्ममार्गिणोऽपि महात्मानः सामाजिकेभ्यः पारिवारिकेभ्यः कर्मभ्यो भीताः हरिचरणासक्तहृदयाः विविधान् मार्गान् अवलम्ब्य तत्प्रसादनकर्मरताः भवन्ति । तत्र केचित्प्रेममार्गान् आश्रित्य हरिवियोगनिपीडिताः भवन्ति। विलपन्ति प्रलपन्ति न यत्र तत्र तद्विरहदग्धहृदयाः। अत्र केचिद्भक्ता आत्मानं पुरुष इति मन्यन्ते परमञ्च नारी । यथा जायसीकवेः पुरुषो रत्नसेनो ब्रह्मरूपायाः पद्मावत्यै प्रयत्नपरो दृश्यते । अन्ते च नानाकष्टसमाक्रान्तोऽसौ चिरसुखाय तया सह संगतो बभूव। अन्ये तु आत्मानं वियुक्तानारीरूपेण व्यक्तीकुर्वन्ति। ईश्वरं पतिरूपेण स्वीकुर्वन्ति आत्मनः। तत्प्राप्त्यर्थं वियुक्तानारीव दुःखिताः भवन्ति। एवंविधेषु भक्तेषु मीरा प्रमुखास्ति ।

अन्ये भक्तिमार्गगामिनः सन्ताः दास्यभावेन सख्यभावेन वा अभीष्टं हरिरूपम् उपासन्ते । तत्र दास्यभावोपासको भक्तो हरिं स्वामी आत्मानञ्च तस्य सेवक इति मन्यते । अयं भक्तः सदैव हरिसेवारसास्वादनरतो निमग्नो वा दृश्यते विहाय विश्वकर्माणि। अत्र कविपुङ्गवस्तुलसीदासः प्रमुखोऽस्ति ।

यथा श्रीरामचन्द्रो भक्तैः दास्यभावेनोपासितो भवति तथैव श्रीकृष्णोऽपि प्रायः स्वभक्तैः सख्यभावेनैव उपासितो भवति । सख्यभावोपासका आत्मानं श्रीहरेः सखा मन्यन्ते । तेन सहायं विविधप्रकारेण विहरति, क्रीडति च । वियोगदशायां तस्मै विलपति प्रयतते च संयोगाय । तथापि सख्यत्वं गतोऽयं भक्तो नानाप्रकारैः सेवते स्वसखाभूतं श्रीहरिम् ।

एतौ द्विविधौ हरिभक्तौ स्वस्वचरितेषु सर्वा भक्तिषु अवतारवत:। निखिलानि कर्माणि विहाय तत्सम्पादनपरौ भवत:। श्रीमद्भागवते नवधाभक्तिरेवं कृता ---

श्रवणं कीर्तनं विष्णो: स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।। ७।५।२३।।

लौकिकसुखभोगान् परित्यज्य, उपर्युक्ता: हरिभक्ता: क्षुत्तृष्णाशीतोष्ण-दु:खानि अनुभवन्त:, कृशदेहा: इष्टदेवाय यतन्ते ।

## कर्मयोगिनो महत्त्वम्

एतद्विरुद्धं कर्मयोगिनो भक्ता: विश्वं परिपालयन्तो रक्षन्त: सञ्चालयन्तश्च भवभोगकर्मसुखानि अनुभवन्तो हरिप्राप्तिसुखानि समधिगच्छन्ति।अतो कर्मयोगी एक एव त्रिविधानि कर्माणि करोति । वैदिकानि आदौ, ततो यज्ञकर्माणि पश्चाच्च दानकर्माणि । अनेनैव फलमहायशा: भवन्ति सम्पादिता: विश्वकल्याणाय । एनमेव कर्मयोगिनमाश्रित्य वर्तन्ते कर्मसन्न्यासिन:। अस्याभावे तेषां सर्वा: क्रिया: सर्वथा असम्भवा: सन्ति। यद्वा स्वयं तेषां जीवनान्येव असम्भवानि सन्ति । कर्मयोगिनो विनाभावे तेषां शरीराणि पदात्पदमपि गन्तुं न शक्नुवन्ति । एते कर्मसन्न्यासिन: सर्वथा कर्मयोगिन आधिपत्ये वसन्ति। प्रपञ्चभीता: कर्मसन्न्यासिन: भवकर्म जालमित्युक्त्वा वनमधिवसन्ति परसुखापेक्षिणो भूत्वा जीवन्ति च स्वत्यक्त-परकृतकर्मापेक्षयैव। कर्मसन्न्यासिनाम् ईशप्राप्तिमार्गा: परमार्गाधीना: सन्ति। कर्मयोगिन: शास्त्रेषु लोकेषु च गृहस्था इति कृत्वा प्रथिता: सन्ति। एतेषाम् आश्रमस्य महत्त्वं मनुस्मृत्यामेवमुच्यते -----

यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तव: ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमा: ।। ३।७७ ।।
यस्मात् त्रयोऽप्याश्रमिणो दानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ।। ३।७८।।

तत्रैवास्य कर्मयोगिनो महत्त्वमेवं प्रतिपाद्यते ---

सर्वेषामपि चैतेषां वेदस्मृतिविधानतः।

गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि ।। ६।८९।।

वैदिकाः ऋषयोऽप्यनेन सह सौहृदमिच्छन्ति ये स्वान् स्वान् परिवारान् परित्यज्य वनानि सेवन्ते स्म । तथा च श्रूयते -----

येषामध्येति प्रवसन् येषु सौमनसो बहुः ।

गृहानुप ह्वयामहे ते नो जानन्तु जानतः ।। (यजुः०३।४२)।

परवशगादेव एकः ऋषिः सम्पन्नं कर्मयोगिनं वीक्ष्य तत्क्षेमशान्तये आत्मनं कथयति -----

उपहूता इह गाव उपहूता अजावयः ।

अथो अन्नस्य कीलाल उपहूतो गृहेषु नः ।

क्षेमाय वः शान्त्यै प्र पद्ये शिवं शग्मं शंयोः शंयोः ।।

( यजु०: ३।४३)।

गृहस्थदम्पतीनां सुखायुपुत्रधनप्राप्त्यर्थमेवं स्तुवन्ति केचिदृषयो देवेभ्यः -------

प्र बुध्यस्व सुबुधा बुध्यमाना दीर्घायुत्वाय शतशारदाय ।

गृहान् गच्छ गृहपत्नी यथासो दीर्घं त आयुः सविता कृणोतु ।।

( अथर्व०१४।२।७५)।

इहेमाविन्द्र सं नुद चक्रवाकेव दम्पती ।

प्रजयैनौ स्वस्तकौ विश्वमायुर्व्यश्नुताम् ।।

( अथर्व०१४।२।६४)।

सुमङ्गली प्रतरणी गृहाणां सुशेवा पत्ये श्वशुराय शम्भूः ।

स्योना श्वश्र्वै प्र गृहान् विशेमान् ।।

स्योना भव श्वशुरेभ्यः स्योना पत्ये गृहेभ्यः ।

स्योनास्यै सर्वस्यै विशे स्योना पुष्टायैषां भव ।।

या दुर्हार्दो युवतयो याश्चेह जरतीरपि ।

वर्चो न्वस्यै सं दत्ताथास्तं विपरेतन ।।

( अथर्व०१४।२।२६,२७,२९।।)

सं पितरावृत्विये सृजेथां माता पिता च रेतसो भवाथः ।
मर्य इव योषामधि रोहयैनां प्रजां कृण्वाथामिह पुष्यतं रयिम् ।।
( अथर्व० १४।२।३७)।

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ ।।
( अथर्व०१४।१।२२)।

एते ऋषयः कर्मयोगिनो गृहे सांमनस्यम्, ऐक्यम्, शोभनं ज्ञानम्, धर्मकर्मप्रवृत्तिञ्च वाञ्छन्ति -------

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या ।।
( अथर्व०३।३०।१)।

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ।।
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ।।
( अथर्व०३।३०।२-३)।

ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट संराधयन्तः सधुराश्चरन्तः ।
अन्यो अन्यस्मै वल्गु वदन्त एत सध्रीचीनान्वः संमनसस्कृणोमि ।।
समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ।
सध्रीचीनान्वः संमनसस्कृणोम्येकश्नुष्टीन्त्संवननेन सर्वान् ।
देवा इवामृतं रक्षमाणाः सायं प्रातः सौमनसो वो अस्तु ।।
( अथर्व०३।३०।५-७)।

एतेभ्यः कर्मयोगिभ्यो ऋषिणा यावज्जीवनं कर्मोपदेशः कृतः । तथा च श्रुतिः ---

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ।। यजुः ४०।२)।

अन्येषां सदाश्रयता

आत्मेतराणां योगिनां भक्तानां जीवानाञ्च आश्रयभूतोऽयं गृहस्थाश्रमी कर्मयोगी उक्तप्रकारेण भवति प्रशंसित: स्वयं वेदभगवतो मुखेन । एतस्य कर्मयोगिनो यशोजलनिधिं तर्तुं को जनो मन्दुडुपेन प्रयास्यति। कर्मसंन्यासिनामिव अत्र कर्मयोगिषु परमुखापेक्षिता भवकर्मभीति: वा न वर्तते । यथा ज्ञानयोगिन: समाधि-दशायाम् आत्मविस्मृतिमयं सुखमनुभवन्ति तथैव कर्मयोगिन: कर्मसु स्वस्मृतिहीनं महत्सुखम् उपभुञ्जते । यथा प्रेममार्गिणो भक्ता: विरहदग्धहृदया: भूत्वा यत्र विलपन्ति प्रलपन्ति वा नैवं भक्ता: तथा दीना: भूत्वा विक्रोशन्ति हृदयानि वा दहन्ति।एते भक्तास्तु वीतचिन्ता: भवन्ति । तेषामयं दृढो विश्वासोऽस्ति यदस्ति कर्ममयो विश्वकर्मा ।तस्य कर्मरति: कुरुक्षेत्रे युद्धकाले अर्जुनेन एतेषु शब्देषु श्रुतासीत् ----

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ।।
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रित: ।
मम वर्त्मानुवर्तन्ते मनुष्या: पार्थ सर्वश: ।।
उत्सीदेयुरिमे लोका: न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमा: प्रजा:।।

( गीता० ३।२२-२४)।

तदवश्यमेवासौ कर्मभि: प्रसादं गमिष्यति। अस्य कर्मभक्तस्य भगवत: सर्वोत्कृष्टा पूजार्चना नानाकर्मद्रव्यैरेव भविष्यति न कर्मत्यागै: । यद्येते कर्मयोगिन एकदिवसाय अपि कर्मसंन्यासिनो भवेयु: तर्हि कावस्था भविष्यति विश्वस्य --- अननुमेयास्ति । वस्तुत:यो यस्य देव: स तद्विधै: द्रव्यैरेव प्रसीदति। यथाग्नि: हविर्भि:, इन्द्र: सोमै:, शिवोऽर्कपुष्पादिभि: प्रसादमर्हति तथैव विश्वकर्मा कर्मभिरेव प्रसादमर्हति न कर्मसंन्यासै: ।

अन्यच्च कर्म कर्मयोगिन: सहोदरोऽस्ति। ब्रह्मोद्भूता: सर्वे जीवा: यथा सन्ति तथैव कर्म अपि ब्रह्मोत्पन्नमस्ति । तथा चोपदिष्टोऽर्जुनाय---

## कर्मवृक्षः

कर्मवृक्षं समाश्रित्य, वर्तन्ते जीवपक्षिणः।
भक्षयन्तः फलादीनि, दत्तानि कर्मयोगिभिः॥

कर्मसन्न्यासिनः

पशवः

सामाजिकाः

राजपुरुषाः

कर्मोद्युक्ताः

कर्मयोगिनः

वेदाः



"कर्म ब्रह्मोद्भवं विद्धि" ( गीता ३।१५)। एवं कर्मसंन्यासिन: सहोदरत्यागिनो भवन्ति यच्च नितान्तं वेदविरुद्धमस्ति यतो हि---

"मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।" ( अथर्व ३।३०।३)।

इत्यादिभि: श्रुतिभि: भ्रातृत्वमुपदिश्यते । कर्मयोगिनो भ्रातृधर्मं पालयन्त: कर्मसहोदरं भ्रातृनिर्विशेषमिव रक्षन्ति, स्निह्यन्ति, पालयन्ति च । तदसद्वृत्तिभिरपि भ्रातृधर्मं चरंतो जना: स्वासो काप्युत परमं पदं जग्मुरित्यत्र इतिहासपुराणवच: साक्षिभूता: सन्ति। तथा हि--- भ्रातृधर्ममनुपालयन्तश्चत्वार: पाण्डवा: अर्जुनादयोऽग्रजेन युधिष्ठिरेण समं वनं गता: । ततोऽनु पुण्यमङ्गभिस्तै: स्वर्गलोकमासादितम् । भ्रातृधर्मं प्रतिपालनार्थमेव लक्ष्मणो रामेण सार्धं वनं गत:, भरतो राज्यं परित्यज्य नंदिग्रामवासी तपस्वी बभूव। प्राप्तञ्च एताभ्यां हरिपदम्। एवमेव वासुरवृत्त्या एतद्धर्मं परिपालयन्तो मारीचकुम्भकर्णादिरावणादयो राक्षसा: अपि रावणेन सह कैवल्यपदं जग्मु: दुर्योधनं रक्षन्त: कौरवा: परमं धाम अधिजग्मु:। अत: सिद्ध्यत्यत्र यद्वसदशास्वपि प्रतिपालितो भ्रातृधर्म: परमशिवाय कल्पते । एवं गुणरत्नाढ्यं भ्रातृधर्मं परित्यज्य विश्वकर्मणो विज्ञा: पुत्रा: कर्मयोगिन: परधर्मावलम्बनमूढतां कथं चरिष्यन्ति ? अथ एतै: कर्मयोगिभि: कर्मसहोदरव्रतं परिपाल्यते परमकशिवाय संसार सिद्ध्यै च ।

प्रेममार्गिणो भक्ता: दीर्घकालिकविरहानन्तरं चिरसुखाय ब्रह्मणा सह सङ्गता भवन्ति नानादु:खदग्धशरीरै: । परं कर्म योगिनां शरीराणि कर्मभि: पुष्टानि भवन्ति कर्मानन्दहर्षितानि च । एते योगिन: कर्मकाल एव कर्मप्रियब्रह्मसमागमसुखानि अनुभवन्ति ।

दास्यभावै: हरिं भजन्तो भक्ता: विश्वकर्माणि विहाय, ऋषि ऋणं पितृणं समाजऋणञ्चोपेक्ष्य, विलपत: स्वाश्रितान् त्यक्त्वा, एकान्ते देशे हर्षैकनन्दनसेवनासक्तमना: भवन्ति।। इष्टमूर्तिसेवाभिरेव आत्मन: कृतकृत्या: आमनन्ति। यैस्तै स्नेहविश्वासै: सह पोषिता पाठिताश्च भवन्ति तान् एव बन्धहेतव इत्युक्त्वा

तिरस्कृत्य, स्वानि कर्तव्यानि उपेक्ष्य, कृतघ्ना इव एकाकिनो लोके परसुखापेक्षिणो भूत्वा चरन्ति। विश्वकर्माणि विहायापि एते भक्ताः हरिदर्शनाभावे दुःखदुःखिताः चिन्तादीनाश्चभवन्ति। तेष्वसेवकभावः तेषु आत्महीनताभावं जनयति ।

एतद्विरुद्धं कर्मयोगिषु हीनभावनायाः किमपि पदं नास्ति। कर्माण्येव तेषां साध्यानि भवन्ति। यज्ञाराध्याः देवताः।येषां प्रसादनक्रियासु एते योगिनोऽहर्निशं मनसा, वाचा, कर्मणा प्रयत्नपराः दृश्यन्ते । कर्मसन्यासिन एकाकी एव देवाराधनप्रसादनपराः भवन्ति । परं कर्मयोगिनस्तु परिवारैः सह स्वाभीष्टकर्मदेवार्चनपराः भवन्ति । आबालवृद्धवनिताः तेषामिष्टप्रसादनकर्मसु व्यापृताः दृश्यन्ते । कर्मसंन्यासिनामिव एते भक्ता ईशप्राप्त्यर्थं चिन्तिताः दुःखिता वा न भवन्ति अपितु "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति चिन्तयित्वा निश्चिता ईशप्राप्तिः जीवनान्त इतिनिश्चित्य निश्चिन्ताः भवन्ति । कर्मोपेक्षाभावो न जायते कदापि तेषां मनः स्वपि। कृतघ्नतायाः कलङ्को ललाटदेशं न विकारयति क्षणायापि । सर्वविधान् उत्तरदायित्वान् ते सहर्षं स्वीकुर्वन्ति। आयासकरेषु कर्मस्वपि कर्तव्यबुद्ध्या मोदन्ते । समाजस्य देशस्य वा एत एव मनोबुद्धिहस्तपादादीनि अङ्गानि भवन्ति। यद्वा एतेषां शरीरं एव समाजो देशो वा शरीरी भवति । एतयोः शरीरयोः कर्मसंन्यासिनः कुत्रापि अंगत्वं न भजन्ते । एवं दासभक्तेभ्य कर्मयोगिनां श्रेष्ठता प्रतिपादिता भवति ।

सख्यभावेन इष्टदेवं भजन्तो भक्ताः यद्यप्यात्मानं ब्रजसखा मत्वा तेन सह विहरन्ति, क्रीडन्ति, आलपन्ति च । आत्मनि सखागौरवं मनोरथाप्यनुभूयते तैः । परं वस्तुत इष्टदर्शनाभावे खिन्नमनाः सेवाव्रतानि चरन्ति। सखाभावः स्मृतिपटलात् क्षणायापि वियुक्तो न भवति। विश्वकर्तव्यवञ्चितोऽयं सखाभक्तो मूर्तिपूजनमपि अनन्यमनसा कर्तुं न प्रभवति। न च कर्मजालभीतोऽयं वनेऽपि सेवापराधभयभीतो भवन्ति। सखाभावे सेवारससुखं न विन्दति जीवने क्वचिदपि। सुखाय अङ्गीकृतः सखाभावो यथार्थे सुखकरो न भवति अस्मै संसारसंन्यासिने । तत्रैव योगिनो (कर्मणाम्) विश्वकर्मणा सार्धं कर्मभिः सम्बन्धं संस्थापयन्तो यावज्जीवनमिष्टस्य कर्मसेवानन्दरसम् अनुभवन्ति ।

एवं कर्मयोगिनः सर्वेषु क्षेत्रेषु कर्मसंन्यासिभ्य उत्कृष्टाः सन्ति। कर्मयोगस्य प्रशंसा स्वयं भगवता श्रीकृष्णेन कुरुक्षेत्रे कृता---

सन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ।।( गीता५।२)।

कर्मयोगिनां रूपाणि
-----------------

यथा कर्मसंन्यासिनां नानारूपाणि लोके सञ्चरन्ति तथैव समाजेषु कर्मयोगिनामपि नैकानि रूपाणि दृश्यन्ते । तथाहि---

| | |
|---|---|
| १- कथाया मुख्याः ब्राह्मणाः | २- नटवर्तकाः |
| ३- गीतनृत्तशास्त्रेषु प्रवीणाः वराङ्गनाः | ४- प्रस्थानिकाः |
| ५- पानविक्रयिणः | ६- रूपाजीवाः |
| ७- नानापण्योपजीविनो वणिजः | ८- विषवैद्याः |
| ९- शल्यविशारदाः वैद्याः | १०- कायचिकित्सकाः |
| ११- कर्मान्तिका स्थपतयः | १२- मार्गिणः( उदधिद्रव्यमार्गिणः) |
| १३- वृक्षारोपकाः | १४- कूपकाराः |
| १५५ सुधाकाराः | १६- वंशकर्मकृतः |
| १७- वाणिक्काराः | १८- कूर्चकाराः |
| १९- परिकर्मकृतः | २०- वस्त्रोपजीविनः |
| २१- मायूरिकाः | २२- तैचिरिकाः |
| २३- मैलकाः | २४- मेदकाः |
| २५- रञ्जकाः | २६- दन्तकाराः |
| २७- एरण्डवैक्काराः | २८-कटकाराः |
| २९- आरकूटकृतः | ३०- ताम्रकूटाः |
| ३१- सुवर्णकूटाः | ३२- खड्गकाराः |
| ३३- गुडसीधुप्रपाचकाः | ३४- औरभ्रकाः |
| ३५- माहिषकाः | ३६- तुन्नवायाः |
| ३७- सूतमागधवन्दिनः | ३८- चैलनिर्णेजकाः |
| ३९- चर्मकाराः | ४०- अङ्गारकाराः |

४१- लुब्धकाः
४२- धीवराः
४३- कबन्धधारिणः
४४- काष्ठप्रपाटकाः
४५- वस्त्रसीवनकाः
४६- गृहकाराः
४७- कुम्भकाराः
४८- श्मश्रुवर्धकिनः
४९- लेखकाः
५०- गणकाः
५१- तन्दुलकारकाः
५२- वरुकाराः
५३- शाकपण्योपजीविनः
५४- तैलिकाः
५५- गान्धिकाः
५६- तीर्थसंशुद्धिकारकाः
५७- चित्रकर्मविदः
५८- लाङ्गूलिकाः
५९- पौरोगवाः
६०- सूताः
६१- सौविदल्लाः
६२- गोपाः
६३- वनचराः
६४- पत्रकाराः
६५- मुद्रणव्यवस्थापकाः
६६- यन्त्रकाराः
६७- विद्युदुत्पादकाः संचालकाश्च
६८- तैलखनकाः
६९- कृष्णाश्मखनकाः
७०- धातुखनकाः
७१- यन्त्रचालकाः
७२- आग्नेयास्त्रकाराः
७३- मद्यकाराः
७४- कृषकाः
७५- रज्जुकाराः
७६- वायवयनकृतः
७७- मार्गकृतः
७८- सेतुबन्धकाराः
७९- सेवकाः
८०- विविधशुद्धिकर्मरताः कर्मचारिणः
८१- मांसकर्मोपजीविनः
८२- मिष्ठान्नकाराः
८३- रजकाः
८४- अयोगवाः

अत्र त्रिषष्टिरूपाणि विष्णुधर्मोत्तरपुराणकृतानि सन्ति अन्यानि च युगवर्धितानि। एतेषु रूपेषु अन्येषु चात्रानुक्तविविधेषु रूपेषु संसारं सञ्चालयन्त एते कर्मयोगिनो जीविकोपार्जनं कुर्वन्तो जगतो विश्वानि कर्माणि सम्पादयन्ति ।

ब्रह्मप्राप्तिरेव अध्यात्मवादस्य लक्ष्यो ऽस्ति तच्च प्राप्यते कर्मयोगिना कर्मात्मनो विश्वकर्मण आराधनेन । अस्य आध्यात्मिकस्वरूपध्यानेन प्राप्यते कर्मशक्तिज्ञानम् । यस्माद्धेतोः असौ विश्वकर्मा यथाशीघ्रं प्रसीदति ।




------oo------

## विश्वकर्मण आधिभौतिकं वैज्ञानिकञ्च महत्त्वम्

विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ।।

( ऋ० १०।८१।३)।

### सर्वभूतानां पादत्वम् ---

चराचराणां जनितुः विश्वकर्मणाः 'विश्वा भूतानि' पाद इत्याम्नायते । विविधावसरेषु हरिहरादिभिः देवर्ष्यादिभिश्च समाहूतेन शिल्पिना विश्वकर्मणा यानि कलापूर्णानि मनोज्ञानि मूर्तियानभवनादिरूपाणि कार्याणि कृतानि, तेषां निर्माण कला इदानीं तस्य पादभूतेषु एतेषु भूतेष्वेव सुरक्षिताः सन्ति। न केवलं सुरक्षिता एव सन्ति यथावत् अपितु क्वचित्तासु वृद्धिः प्रवृद्धिः वापि दृश्यते । यथा फलितेऽपि वृक्षेऽस्य बीजस्य महत्त्वहानिः न भवति तथैव तत्कर्मसु तस्य पुत्रैः कृता वृद्धि उन्नतिः वापि अस्य कर्ममहत्त्वं न न्यूनी करोति । विश्वकर्मकृत्कर्मणां सर्वेषु क्षेत्रेषु तैः उन्नतिरेव कृतेत्यपि न सत्यम्। यवनसमरनष्टानां बहूनां कृतीनां तु नाम एव ज्ञायते । तासां रचनाकर्मसु वैज्ञानिकाः अद्यावधिः असफलता :सन्ति । तथा हि--- दीपाधारेषु पर प्रवेशाव रोधकवायुजनकं प्रयन्त्रविशेषम् आविष्कर्तुमशक्ता एते सन्ति ।

### कार्यवर्गः

विश्वकर्मण आधिभौतिकं वैज्ञानिकञ्च महत्त्वं प्रतिपादनार्थं तस्य कर्मणां सिंहावलोकनम् आवश्यकम् । तेन कृतानि कर्माणि कियद्दूरम् आधुनिककर्मणाम् आधारत्वं भजन्ते । कियद्वा ख्याती जातोऽस्य कर्मसु । कानि कानि तत्कृतानि कर्माणि अद्यावधि विकासदशायां सन्ति । कानि चान्यानि नामशेषाणि सन्ति कालवशात् । उपेक्षित ज्ञानाभावे वा। एतदर्थं तस्य कार्याणां वर्गीकरणमपेक्षितं वर्ण्यमानविषयेषु।तच्च एवं भवति -----




प्राचीनास्त्राणां लघुता

अत्रादौ आधिभौतिकानां कार्याणां महत्त्वं प्रतिपाद्यते । तत्रापि शस्त्रास्त्राण्यभिलक्ष्य ----

विश्वकर्मणा इन्द्राय वज्र: शक्तिश्च हरये चक्रम्, शिवाय त्रिशूलो धनुश्च बाणश्च, विष्णवे शारङ्गधनु:, कात्यायिनी देव्यै परशुश्च कृत: । अन्यान्यापि नानादेवेभ्योऽङ्कुशादीनि शस्त्रास्त्राणि कृतानि परं तेषां क्रमश: प्रयोगकालो गतो यथा चक्रचापत्रिशूलानाम् । चक्रविद्या हरिकृष्णप्रयुक्तैव श्रूयते । नान्यै: अस्य प्रयोगोऽवगम्यते। धनुर्विद्याया: प्रयोगो विकासश्च विशेषरूपेण रामायणकालादारभ्य महाभारतपर्यन्तं श्रूयते । यद्यपि वन्यजातीयेषु कोलभीलनागेषु अद्यापि धनुर्विद्या जीविताऽस्ति। परं तस्यां महाभारतीयशक्तिर्न दृश्यते । पृथ्वीराजस्य कालपर्यन्तं (१२वीं शदी) समेषु यत्र तत्र अग्निवायुवृष्टिबाणानां प्रयोगोऽवगम्यते परं महत्त्वदृष्ट्या भारतकालिकमहत्त्वस्य कमपि अंशं न स्पृशति । विश्वकर्मणा धनुर्बाणान् निर्माय प्रारब्धो कृता धनुर्विद्या रामायणभारतकालयो:परां कोटिं स्पृशति। तस्मिन् काले शरै: अग्निवायुवृष्टिप्रचारस्तु सामान्य आसीत् । प्रक्षिप्ता: बाणा:पुनरागत्य तूणीरेषु प्रविशन्ति स्म पुन: प्रयोगाय । तत्रैव एकेन बाणप्रहारेण वृष्टिविनाश: सम्भव: आसीत्। परं तेषां प्रयोग: कदापि न कृतो बभूव ।

आधुनिकास्त्राणि : ---

एतादृशानि अस्त्राणि मानववहनयोग्यानि परमाण्वस्त्राण्येवासन् । ततो विश्वकर्मनिर्मितानां शराणां तां विनाशिनीं शक्तिं कथासु श्रुत्वा आधुनिकैः परमाणुविशेषज्ञैरपि घातकानि परमाण्वस्त्राणि आविष्कृत्य निर्मितानि । परं तानि सर्वाण्येव विशिष्टविमानवहनयोग्यानि सन्ति। ब्रह्मास्त्रमिव सृष्टिसंहारिणी-शक्तिसमन्वितम् सुदर्शनास्त्रं निर्मातुं सक्षमाः परं भयभीताः आधुनिकाः वैज्ञानिकाः तथा न कुर्वन्ति । एतान्यस्त्राणि मानव वहनयोग्यानि कदापि भविष्यन्तीति वक्तुं न शक्यते । अद्य वैज्ञानिकैः असिचक्रपरशुत्रिशूलादीनाम् आयुधानां स्थाने भीषणतमा विनाशिनी बहुजीवनघातिनी शतघ्नी, भुशुण्डी, पिस्टल, रॉकेट, इत्यादीनि आग्नेयास्त्राणि नानाविधानि आविष्कृतानि येषां भावे त्रिशूलादीनि निष्फलानि सन्ति ।

एवं शस्त्रास्त्राणां शौर्ये विश्वकर्मणः पुत्राः स्वपितुः अग्रगामिन एव सन्ति । परं शरवद् घातकास्त्राणां निर्माणप्रेरणा तैस्तत एव गृहीतेत्यवगन्तव्या । आकारदृष्ट्या तेषां सर्वाणि प्रक्षेप्यास्त्राणि शराकृतयो भवन्ति । अतः वर्तमानायुध-विकासस्य पृष्ठभूमौ विश्वकर्मणः सा धनुर्विद्या महत्त्वमावहति ।

कर्मशिल्पावलोकनप्रसंगे

नगर निर्माणम् --

लङ्कालकेन्द्रप्रस्थद्वारावत्यः प्रमुखाः नगर्यः सन्ति विश्वकर्मकृतासु नगरीषु। एतासु द्वारावती लङ्का च सुरक्षाव्यवस्थायाः दृष्ट्या अतीव सुदृढे आस्ताम् । यद्यपि डेन्मार्कादिषु योरुपीयदेशेषु समुद्रगर्भाद् भूमिमुद्धृत्य कृषि कर्मणा सह आवासीयव्यवस्थापि क्रियते परं ते द्वारावतीसदृशं विस्तृतं सुरक्षितं नगरं निर्मातुं नाशक्नुवन् ।

लङ्कापुरी सैनिकी सुरक्षादृष्ट्या इतिहासप्रसिद्धा अस्ति । नात्र भवति किञ्चिद् वक्तव्यम् । अद्यापि क्रियते यद्यपि नगराणां रक्षणार्थं दुर्गीया व्यवस्था परं सा तादृशी न भवति-- दुर्गपरिखाप्राकारकोटादिका, अपितु विमानशतघ्नी मिसाइलाधीना भवति । नगरगामिनो राजमार्गाः अहर्निशम् अपावृता वर्तन्ते।

न तत्र दृश्यते पुरातनी परिकोटाकपाटप्रथा । वैहायसयुद्धकाले नागरिकैः आत्मरक्षार्थं यत्र तत्र गर्ताः निर्मीयन्ते येषु ते प्रहारकाले शेरते । तथा च क्रियते सैनिकैरपि सुड्गोत्रे । एतदर्थं नगरं परितः परिखा न निर्मीयते ।

इयं स्थितिः वर्तमानेयुगे विमानप्रयोगकृतास्ति। अतः प्राग् दुर्गीया व्यवस्था एव व्यवहारे आसीत् ।परं नृपाणां युगेऽपि नगररक्षणार्थं कृता दुर्गादीनां व्यवस्था यादृशी सुदृढ़ा , सुरक्षिता, व्यवस्थिता च नासीत् केषुचिदपि अंशेषु यादृशी लङ्कादीनामासीत् । तद्युगे सुरक्षाव्यवस्थायां ह्रास उपलक्षितो भवति । सुरक्षाभावे पुनः पुनराक्रान्तेषु नगरेषु व्यवस्थितः आवासक्रमोऽपि न परिलक्ष्यते । अतः नृपाणां युगे विश्वकर्मणा प्रदत्तायां नगररचनाविधायां पतनभावो दृश्यते।

इदानीं नवनगररचनासु विश्वकर्मणो नगररचना पद्धतिः प्रयुज्यते। सुविस्तीर्णराजमार्गाणां उभयतो व्यवस्थिताः आवासपङ्क्तयो भवन्ति। यत्र तत्र उद्यानानि शोभन्ते । सैनिकानाम् आवासाः कार्यालयाश्च नगराद्बहिः सुविस्तृते सुरक्षिते च क्षेत्रे भवन्ति। नगरस्य आन्तरिकी सुरक्षाव्यवस्था आरक्षी विभागेन निरीक्ष्यते यस्यनेके: केन्द्राः भवन्ति ।

आयुधविकासदृष्ट्या परिखादीनां परिहारः कृतः परमन्यत्र नगररचना अद्यापि विश्वकर्ममतानुसारमेव दृश्यते । तथा च भवति स्पष्टं ललितादेव्यै कृतस्य नगरस्य वर्णनेन -----

तत्राथ नगरीं रम्यां सान्द्रप्राकारतोरणाम् ।
गजाश्वरथशालाढ्यां राजवीथी विराजिताम् ।।
सामन्तानाममात्यानां सैनिकानां द्विजन्मनाम् ।
वैतालदासदासीनां गृहाणि रुचिराणि च ।।
मध्ये राजगृहं दिव्यं द्वारगोपुरशोभितम् ।
शालाभिर्द्रुमियुक्तं सभाभिरुपशोभितम् ।।
सिंहासनसभां चैव नवरत्नमयीं शुभाम्।
मध्ये सिंहासनं दिव्यं चिन्तामणि विनिर्मितम् ।।

( ललिता०३।६+--१२ ।

एवं विश्वकर्मणो नगररचनाविधि: अद्यापि तद्वंशजै: विश्वकर्मभि: परिपाल्यते येन तस्या: महत्त्वं स्वयमेव प्रतिपाद्यते ।

सागरादिषु नगररचनाकर्मणि इदानीं वैज्ञानिका: व्यापृता: सन्ति । परं को जानाति तादृशीं सफलतां तेऽनुभविष्यन्ति निकटभविष्ये । विश्वकर्मणा पाताललोके निर्मितं हिरण्यपुरं जलसंतरणसक्षम आसीत् । आधुनिकै: विश्वकर्मभि: निर्मितानि युद्धजल यानानि व्यापारजलयानानि वा नगररूपाण्येव सन्तिपरं तानि मात्र सन्तरणयोग्यानि भवन्ति। सन्ति यद्यपि जलगर्भचराणि यानानि अपि विशालदेहानि परं तानि नगररूपाणीति वक्तुं न शक्यते । अद्य तानि मात्र रणकर्मयोग्यानि सन्तियद्वा समुद्रगर्भीयान्वेषणाय ।समुद्रगर्भीयावासनिर्माणार्थं वैज्ञानिका: प्रयत्नपरा: सन्ति,परं अय: कालाधीन: ।

तारकादादीनां वैहायसपुराणां वर्णनं श्रुत्वा इदानीं विश्वकर्मतनया: तादृश्याननगररचनाकर्मणि व्यग्रभावै: व्यापृता: सन्ति । मानवगम्योऽद्य चन्द्र:। सन्ति नैकानि मङ्गलबुधबृहस्पतिप्रस्थानारतानि यानानि । परं नगराकारयानरचना कालव्ययसाध्यास्ति ।पितृकृता याननगररचनाहर्निशं प्रेरयति तेषां हृदयानि । स्वपित्रा प्राप्तं महत्त्वं तेऽपि इच्छन्ति स्वीकुर्वन्ति च पितृकर्मणामृणभारं नम्री भूत्वा शिरोभि: ।

अथ मूर्तिकलामहत्त्वम् ----

विश्वकर्मा प्रथमो देवमूर्तिकर्ता । पौराणिके युगे स एक एव मूर्तिविज्ञानविशारद: श्रूयते । कर्मप्रकरणे पठितासु तत्कृतासु नैकमूर्तिषु अद्य भारते जगन्नाथप्रतिमा मात्र प्राप्यते । जापानदेशे कियद्वर्षपूर्वं प्राप्ता बुद्धप्रतिमापि तत्कृतेति मन्यन्ते पुराविद:। वियच्छोभना: आसन् तत्कृता: कृष्णादीनां प्रतिमा इति न वक्तुं शक्यते केनापि विश्वासपूर्वकम् । तथापि अन्यासु कृतिषु सौन्दर्यसीमां दृष्ट्वा मूर्तिष्वपि सानुमेया भवति ।

आधुनिकमूर्तिविज्ञानस्य आधारो विश्वकर्ममूर्तिविज्ञान एवास्ति । अस्मिन् क्षेत्रे तस्य पुत्रा: उत्तरा: प्रतीयन्ते कलादृष्ट्या, परं निर्माणे काल: तदनुपाते

अत्यधिका भवति। विश्वकर्मप्रसङ्गेऽत्र स्वल्पप्रयोगकालहेतुः तस्य दैवीया शक्तिः। अद्य विश्वकर्मसु तदर्थम् उचिता आध्यात्मिकी शक्तिर्न विद्यते, अत एवं विद्या दीर्घकाल-साध्या भवति तेभ्यः। तथापि अस्यां कलायां तैः कृतो विकासः प्रगतिश्च सर्वथा प्रशंसनीयास्ति । तेषां हृदयेषु स्थितो जनको विश्वकर्मा मोदते पश्यन् पश्यन् (पुत्राणां) मूर्तिकलाप्रतिभाः ।

अत्र वस्त्रवयनमहत्त्वम् ---

यद्यपि अद्य वैज्ञानिकैः विश्वकर्मभिः नानापदार्थैः नानाजातीयानि वासांसि निर्मीयन्ते कलैः स्वल्पकाले प्रभूतमात्रायां, येषु कानिचिद् वस्त्राणि पञ्चषड्वर्षाणि यावज्जीवन्ति (प्रयुज्यन्त इत्यर्थः)। मासमप्ताहपर्यन्तम् अमलानि वर्तन्ते ।बहूनि कोमलानि अल्पभारमयानि च भवन्ति। परन्तु सदामलं वस्त्रं कर्तुमक्षमास्ते सन्ति । विश्वकर्मणा तु गुरुपत्न्यै सदामला वल्कलस्य चोली कृतेति श्रूयते पुराणेषु । वल्कलवस्त्रविद्या त्वद्य सर्वथा विलुप्ता युगप्रभावात् परं वस्त्र विद्यागर्वगर्वितास्ते सदामलं वस्त्रं कर्तुमशक्ताः सन्ति ।

विश्वकर्मणा श्रीकृष्णाय अन्तिमं वस्त्रं कृतमिति श्रुत्वा तैः निर्मितमेकं लौहवस्त्रम् (स्टेनलेसस्टीलस्य)। इदं वस्त्रं सदामलं, शताधिकवर्षपर्यन्तं व्यवहार-योग्यञ्च भविष्यतीति श्रुतिः। परन्तु कियद्वर्षपूर्वेषु अनुसन्धानितम् इदं वस्त्रं बृहदुत्पादनस्थितिं न प्राप्तमद्यापि । भविष्यत्काले उत्पादनं भविष्यति जनव्यवहार-योग्यमिति वयमाशास्महे ।

एवं सुस्पष्टं भवति उक्तवर्णनेन यद् विश्वकर्मणो वस्त्रविद्यां प्राप्तुं यतन्ते साम्प्रतिकाः विज्ञानविदः। निकटसमये सम्भवतस्ते पितुः विद्यासीमां प्राप्स्यन्ते । वर्तमानवस्त्रविद्याविकासमूले पुराणश्रुता विश्वकर्मणो वस्त्रविद्यैव विद्यत इति वक्तुं शक्यते विश्वासपूर्वकम् । अत आधारीयं महत्त्वमावहति तस्य वयनकर्म अस्मिन् युगेऽपि ।

अथाभरणरचनानैपुण्यम्:---

यादृशानि मनोज्ञानि आभरणानि विश्वकर्मणा कात्यायिनीदेव्यैः, रामाय, गोरक्षनाथाय वा कृतानि, तादृशानि कर्तुम् आधुनिकाः विश्वकर्माणः स्वर्णकाराः

समर्था: न सन्ति। तथापि स्वर्णरजताभरणेषु चित्रकलाकर्मसु प्रवीणा: सन्ति। आधुनिकानां स्वर्णकाराणाम् आभूषणेषु तादृशी दिव्यता विश्वकर्म एव दिव्यगुणाभावे अस्ति। अन्यथा तेषां चित्रसज्जाकर्म प्रशंसनीयमस्ति। पुराणेषु स एव एकमात्र दिव्याभरणकर्तेति श्रूयते ।अत: आभरणनिर्माणस्य विद्या विश्वकर्मणा प्रवर्तितेति उक्तं भवति । विद्याया आविष्कर्तृत्वस्य यन्महत्त्वं भवति तद्विद्या-प्रवर्तिते विकसिते वा अति तत्कैदानीं धार्यते स्वर्णकारगुरुणा विश्वकर्मणा ।

आसनकर्ममहत्त्वम् :---

इन्द्राय महाकक्ष्ये कृते आसने सत्ररत्नमणिरचिते सर्वशोभाढ्ये आस्ताम् । एतयो: दर्शनाभावे तयो: शोभावर्णनमप्यवास्ति। देवकार्याणि दिव्यगुणाढ्यानि सन्तीति न विरोध:। भोजहर्षविक्रमादित्यादीनां नृपाणां सिंहासनानि पुराण-श्रुतवर्णनानुसारमेव विश्वकर्मभि: कृतानि आसन् । नासीत् तेषु दिव्यताभावोऽपि। अन्येषामार्ययवनादि जातीयानां राज्ञां सिंहासनेष्वपि मणिरत्नचित्रचित्रता श्रूयते, परं तेषु दिव्यताया: पदं न श्रूयते । तथापि तेषां मनोज्ञता महार्घता च प्रशनातीतास्ति ।

विश्वस्य प्राय: सर्वेषु राष्ट्रेषु राजत्वाभावे सिंहासनेऽपि सिंहाभावो जात:। राज्ञां युगे विश्वकर्मभि: अपसिकोमलानि चित्रमयानि स्वच्छाणि आसनानि क्रियन्ते स्म, आसीच्च जनेषु प्रचाराभाव:। परमद्य बनद्युफासनानि रुचिवैचिध्यात् शताधिकप्रकारस्य प्रचलन्ति । तेषां निर्मितिकर्मसु वेत्रनारिकेलनालीनतन्तव:,लौहदण्डानि तन्त्राणि ( स्प्रिंग्स) च, चित्राणि प्लास्टिकादिनिर्मितानि वस्त्राणि च प्राय: उपयुज्यन्ते । लौहासनानि परित्यज्य अन्येषु काष्ठप्रयोगोऽवगन्तव्य: सामान्यतया। एतानि नानाविधानि आसनानि जनानां कृते अल्पमूल्यसुलभानि बहुमूल्यसुलभानि च सन्ति ।येषां यथा क्रयशक्ति: भवति तथासनानि तै: प्राप्यन्ते । नसुलभानाम् आसनानाम् उपलब्धि: नूतनानां विश्वकर्मणां प्रयास फलमस्ति ।

अवश्यमेव आसनविद्या ( आसननिर्माणकला) आदौ विश्वकर्मासन वर्णनेन ज्ञाता, पश्चादस्य सुपुत्रै: प्रज्ञाबलेन नानाप्रकारस्य सर्वसुलभानि कलापूर्णानि आसनानि कृतानि । तेषां प्रयत्नै: आसनकला अनुदिनं वर्धते स्म अभिनवाकर्षण प्रभावात् ।

अथ पाशकर्म गौरवम् :--

अस्ति यद्यपि पाशनिर्माणविद्या अति प्राचीना तथापि विश्वकर्मणा दर्शिता पाशविद्या अद्यापि अलभ्या अस्ति । सामान्यरूपेण पाशप्रयोगः अगमृग मत्स्यानां बन्धनाय भवति । एतेषां पाशानां निर्माणेऽपि कलाः दृष्टिगोचराः भवन्ति। तथापि ते पाठकानां कृते दुर्बोध्याः अनुल्लेख्याः वा न भवन्ति। दृढैः रज्जुभिस्ते निर्मीयन्ते ।परं विश्वकर्मणः पाशविद्या कापि विभिन्नैव आसीत् । जटासंयतो जाबालिः तेनैव पाशगुरुणा उन्मोचितः कोऽप्यन्यो विमोचनशक्तो न बभूव ।जसौ जाबालिस्तेन लतापाशे निरुध्य न्यग्रोधशिखरे आबद्धः। तल्लतापाशः चचल आसीत् ।सम्भवतः यथाद्य भ्रमणशीलानि आसनानि भवन्ति। तद्वत् । एवं विश्वविचित्रकर्मणि आधुनिकाः अक्षमाः सन्ति। इदानीं पाशविद्या मात्र मत्स्योपयोगाय भवति, तथापि गतेषु केषुचिद्वर्षेषु सम्भवतः पाशप्रयोगो न भविष्यति, तत् स्थाने नूतनाविष्कृता सम्मोहनविद्या प्रयुक्ता भविष्यति । अतः अस्याः विद्यायाः विकासस्य कापि सम्भावना न प्रतीयते ।

विश्वकर्मणः चलपाशविद्या परिवर्तितरूपेण द्रष्टुं वयं शक्नुमः । मास्कोनगरे तच्छोभादर्शनार्थम् उच्छ्रितस्थाने चचला( चतुर्दिग्भ्रमणशीला) आसनव्यवस्था निर्मिता विज्ञानविद्भिः विद्यते । नायं तथाविधः पाशः, परं परिवर्तितरूप इति वक्तुं शक्यते। तथापि मौलिकदृष्ट्या पाशविद्या प्राप्तासीमां पुनः प्राप्तुमक्षमा दृश्यते-- परिवर्तिते युगे महत्त्वाभावं वीक्ष्य। यदि भवेत् प्रयोगसिद्धा शिल्पिगुरोः पाशविद्या तदवश्यमेव सा भवेन्मनोरञ्जनाय उपयोगाय च व्ययेन विना ।

अथ प्रासादकर्ममहत्त्वम् :-

विश्वकर्मणो भवननिर्माणकलायाः अनुकृतिः अस्मिन्युगे प्रत्यक्षतया भवनेषु परिलक्षिता भवति । योजनानिर्मितिज्ञानेषु चित्रकर्मसु च तस्य पुनाः प्रायः पिता समाः सन्ति । पितुः भवनकला तेषां हृदयेषु प्रेयसीव चित्रविचित्ररूपैः सदा शोभते । भवननिर्माणाय अपेक्षितानां पदार्थानां संख्या अद्य तत्पुतः प्रवर्द्धिता

दृश्यते । निर्माण पदार्थाः न्यूनमूल्येषु सुलभाः सन्ति ।भवनस्वामिभिः स्वरुचि-शक्त्यनुकूलं तेषां चयनं क्रियते । अथापि भवननिर्माणाय दृढतराः संयोजकपदार्थाः तैः अनुसन्धीयन्ते । सीमिते क्षेत्रे सुखदशरणनिर्माणे तेषां चातुर्यं प्रशंसा योग्यं भवति।परन्तु इदं सुखं प्रायः विद्युदधीनो भवति ।

विश्वकर्मणा इन्द्रस्य सुधर्मास्यसभा कृष्णस्य आज्ञया द्वारावतीं प्रत्यानीतेति श्रुतिः। आसीद् सा सभा स्थानान्तरणयोग्येति ज्ञायतेऽनया श्रुत्या। तच्छ्रुतिः श्रुत्वैव भवनविशारदैः वहनयोग्यगृहाणि क्रियन्ते अद्य । तत्र तेषां सफलतां दृष्ट्वा योग्यपितुः सुयोग्यपुत्रा इतिवक्तुं मनः चिकीर्षति । तेषां पित्रा त्रिभौमिकानां प्रासादानां निर्माणमेव श्रूयते, परमद्य एतैः विश्वकर्मभिः अष्टचत्वारिंशद् भौमिकानां भव्यभवनानां निर्मितिःश्रूयते टोक्योवाशिंगटननगरयोः। अत्र ते सन्ति अप्रयासिनो गुरोः तथापि पुत्राणां पुष्पिता फलिता च विद्या पितुः विद्यावृक्षस्यैव फलपुष्परूपास्ति ।

अथ सृष्टिकर्ममहत्त्वम् ----

जलोत्क्षिप्तात्रपृथिवी शुष्की कृता विश्वकर्मणा पुरा । अद्य तस्य पुत्राः सागरोदराद् विस्तीर्णजलाशयेभ्यश्च भूमिमवाप्य कृष्यादीनि कर्माणि कुर्वन्ति । योजनविस्तृता विषमा भूमिस्तैः यन्त्राणां साहाय्येन समा कर्षयोग्या च कृता । खगमृगवनस्पतिरूपाणि नररूपाणि च विश्वकर्मणा कृतानि सन्ति। विज्ञैः विश्वकर्मभिः विज्ञानबलैः अद्य न केवलं खगमृगवनस्पतिरूपजातय एव परिवर्तिताः भवन्ति अपितु तासां प्रकृतयोऽपि भिन्नतां समाधिगच्छन्ति। अत्र ते पितुः अग्रगण्याः सन्ति। चिकित्साचार्याः मानवाङ्गानां प्रत्यारोपणे छिन्नाङ्गसन्धाने च निपुणाः सन्तीदानीमितिन सन्देह विषयः। रूपपरिवर्तनकर्मसु ते नितान्तमेव विदग्धाः सन्ति । मात्र कृत्रिमशरीरे जीवप्रवेशाक्षमाःसन्ति यत्र तेषां पिता समर्थः आसीद् । तथापि मैथुनीसृष्टेः योग्यप्रकारः तेष्वेव निहितोमन्तव्यः, यतो हि कर्माधीना भावशुद्धिः--- सुसंस्काराणां हेतुरूपा ----- वीर्यपुष्टिश्च याभ्यां विना न सम्भवा सुप्रजाप्राप्तिः ।

देवैर्होमिताद् पदार्थाद् अग्नौ प्रतापयित्वा विश्वकर्मा देवान् करोतीति पठितं मया पुराणं वीक्ष्य । एवं कथा नानाप्रकाराणां कर्मशक्तीनां विखण्डनादिभिः

क्रियाभि: पद्धतिभिर्वा विश्वकर्मणा कृतामुत्पत्तिं संसूचयति । द्योतनशीलताम् आवहति देवशब्द:। तच्च गुणं धार्यते सर्वाभि: शक्तिभि:। अत: शक्तयो देवा इति कथने आपत्ति: पदं नार्हति । शक्तिमया: देवा: शक्तिमय्यो वा देव्य इति विश्वप्रसिद्धमेव। यथा विश्वकर्मणा नाना शक्तिदेवा: कृता: पुरा तथैव अद्य अस्मिन् विश्वे कोटिश: विश्वकर्माण: तैलविद्युत्परमाण्वादीनां शक्तिनां देवानां निर्माणकर्मसु अहर्निशं व्यापृता: दृश्यन्ते वर्षदाभि:। यथा विश्वकर्मणो देवा: यज्ञै: प्रसन्ना : भूत्वा गोवृष्टिधनपुष्टिप्रजारक्षणादिकार्याणि कुर्वन्ति स्वजनहिताय तथैव कलिविश्वकर्मभि: जनिता: देवा: अपि लोकशिवाय भवन्ति ।तथा हि-----

विश्वकर्मण

इन्द्रो वृत्रं हत्वा वृष्टिं करोति साहित्येषु । अद्य मेघेषु रसायनविशेषं विमानै: मिश्रयित्वा वृष्टि: क्रियते अन्नलाभाय शुष्कप्रदेशेषु । अयं युगीयो वृष्टिदेव: प्रत्यक्षरूपेण सर्वै: दृश्यते । अस्य प्रसादनाय नाग्निकार्यं धूमाग्निकष्टसहनम् । अत्र तु मुद्रादेव्या प्रभावोऽस्ति। केषुचित् दाणेष्वेव वृत्रं हत्वा भूमिं वृष्टिद्वारा कृत्स्नं तर्पयति ।

विश्वकर्मणो वृष्टिदेवा: गवां वृद्धि: पुष्टिश्च मात्र ताभ्य: खाद्यतृणानि प्रभूतमात्रायाम् उत्पाद्य कुर्वन्ति स्म ।परमद्य तत्रत्यकृता: देवा: ताभ्यो न केवलं नानाविधं पुष्टिकरं भोजनं ददति अपितु अस्वस्थदशायां धन्वन्तरिरूपो भूत्वा ताभ्यो योग्यभेषजानि दत्त्वा सुखयन्ति। विविधौषधप्रयोगै: तासां जातय: संशुद्धा: क्रियन्ते येन ता: बहुक्षीरा: स्वस्थाश्च भवन्तु ।

श्रद्धया बहुकालपूजिता: त्रिलोकदेवा: यदा प्रसीदन्ति तदा धनानि प्रददति ।परन्तु विश्वकर्मणां कर्मनियोजिता: त एव देवा आशुधनलाभाय भवन्ति । ते तु सर्वेभ्य: सद्य प्राप्या: फलदाश्च सन्ति । तेषामेता: देवता: समुद्रगर्भेभ्यो मुक्तादीनि, भूगर्भात् स्वर्णायोरजतहीरकादीनि धातुधनानि, तैलतरलद्रव्याणि, चान्वेष्य उत्खाप्य । स्वयजमानान् समर्पयन्ति। नैतेषां देवा: कालसापेक्ष्यकारि:। स्वजनधनसुखलाभाय ते अहर्निशं कलयानविमानानां द्विचतु:शतचक्ररथानां च परिचालने निरता: दृश्यन्ते ।

एवं पुत्रैः ।

पुष्ट्यायुर्वृद्धिक्षेत्रे अवरो गुरुः शिष्येभ्यः कालविषये । प्रकृतिवादिनः पितुः देवाः। अतः पुष्टिजीवनकर्माणि समय साध्यानि भवन्ति तेभ्यः। आधुनिकैः विश्वकर्मदेवैः प्रकृतिनिष्कृततत्त्वैः कियद्दिनेष्वेव कृशकायो जनः पुष्टिमनुभवति । रोगापनयनेन नेत्रहृदयादीनाम् अङ्गानां प्रत्यारोपणक्रियाभिः नित्यमसंख्यजनैः आक्रम: क्रियते । अत्र विश्वकर्मभिः देवैः सह कर्मक्रियते । धनप्राप्तिविषये तु तेषामुपस्थितिः एव पर्याप्ता भवति बहुधा ।

प्रजाविषये अथ कोऽपि विश्वकर्मा यज्ञदेवमुखापेक्षी नास्ति। तत्र नियमन-प्रजननकर्मसु सः सर्वथा स्वतन्त्रः ।

रक्षाविषयं संलक्ष्य विश्वकर्मकृतानि कार्याणि तु अतिदैविकान्येव सन्ति । न तैः आहूयन्ते देवाः रक्षणाय। अथ तु तेषामस्त्राण्येव अतिदैविकतया शत्रून् हन्तुम् उद्यतानि तिष्ठन्ति सर्वदा । त्राणार्थं एव ते विश्वे प्रलयदृश्यं समुपस्थापयितुं सक्षमाः सन्ति । तेषां रक्षासेवायां सर्वशक्तिदेवाः सदैव समुत्सुकाः दृश्यन्ते ।

एवं पुत्रैः पितुः देवाः बन्दीकृताः स्वसुखाय इति वक्तुं भवति। नात्र काचिदत्युक्तिः । तेषां देवानामपि नामरूपाणि भिन्नानि सन्ति। अतः को देवोऽस्य केन नाम्ना पठ्यते यद्वा कस्मिन् रूपे स्थितो इति वक्तुं न शक्यते। विश्वकर्मणा-मधीनाः सर्वे देवाः योजनापूर्वकं सर्वाणि कार्याणि कुर्वन्ति। कार्येभ्यः तेषामाह्वानं विश्वकर्मादिष्टकलैः क्रियते, न यज्ञैः। उपर्युक्तवर्णनेन सिद्ध्यति यत् सृष्टिकर्मक्षेत्रे पुत्राः पितुः अपेक्षया अधिककुशलाः सन्ति ।

अथ यन्त्रकर्ममहत्त्वम् ---

विश्वकर्मणा कृते द्वे यन्त्रे श्रूयेते ----

१- परदूषकवायुविसर्जको यन्त्रः।

२- सूर्यशक्तिसंग्राहको यन्त्रः ।

द्वावपि यन्त्रौ प्रयोगदृष्ट्या सार्वकालिकं सार्वदेशिकञ्च महत्त्वमावहतः । तत्र प्रथमो यन्त्रस्तेन स्वदेशाद् यवनानां निष्कासनाय सीमाक्षेत्रेषु संस्थापितश्च येन निःसृतोवायुः तेषां परदेशप्रवेशशक्तिमुन्मूलयति स्म । तद् यन्त्रो भ्रमिनाम्ना

ज्ञायते स्म । एतादृशी यन्त्री वैज्ञानिकैः न कृतमद्यावधिः न च कापि सम्भावना क्रियते । सम्भवतः तस्मिन् भ्रमियन्त्रे भेदकारकदूषणसामर्थ्यं आसीत्। यथा यवना स्वापसार्यन्ते स्म नाट्ये । अद्यापि जनसम्मर्दविसर्जनाय यत्नातेषु विविधरोग-सम्मोहनादीनां सञ्चारकरणाय लोहत्यगस्त्राणां प्रयोगः क्रियते । परं तेषु अस्त्रेषु रक्तविश्लेषणप्रभावकामता न वर्तते। स्फोटास्त्रविस्फोटेन शतशः जनाः विषूचिकादिभिः रोगैः स्वचारमेव पीडिताः भवन्ति। उचितोपचाराभावे पञ्चत्वं विन्दन्ति । अस्त्राणां निर्माणेषु विश्वकर्मभिः रक्तभेदो न दृश्यते अन्यथात्रापि उद्देश्यलाभो न भवेद् दुष्करः। यथा एभिः विद्युद्यन्त्रैः वायुः समुत्कम्प्यते तथैव तेन भ्रमियन्त्रेण यवनविद्रावको वायुः निःसार्यते स्म ।

पुराणेषु बहुशः श्रुता सूर्यशातनकथा वैज्ञानिकानि तथ्यानि निर्दिशति । तथा हि----

यस्याः भ्रमेः उपरि संस्थाप्य सूर्यतेजः शातितं विश्वकर्मणा सा वज्रमयी आसीत् । तत्प्रतापसहनार्थं तादृशी भ्रमिरेवउपयुक्ततामर्हति। अन्तरिक्षयात्रायै प्रेषिताः उपग्रहाः अपि अद्य प्रतापसहनशक्तिसमर्थाः भवन्ति। भ्रमेः वज्रत्वेन तत्ताप-सहनयोग्यत्वमुच्यते प्रयुक्तधातूनाम् ।

शातितपदार्थेन न केवलं प्रतिपादितं हरिहरादिदेवास्त्रसमूहम् अपितु कुबेर-शिबिकापि तेनैव घटिता शिल्पगुरुणा। अत्र सौरोर्जायाः शस्त्रास्त्रनिर्माणे प्रयोगोऽवगम्यते, यस्मिन् सन्ति अशक्ताः आधुनिकाः । चिकित्सावनस्पतिशास्त्र-क्षेत्रयोःरविरश्मीणां प्रयोगः साफल्येन क्रियते । परं सौरोर्जायाः शस्त्रास्त्रनिर्मितिभाव सम्भवतः निकटकाले अस्तित्वं न प्राप्स्याति । परं सौरोर्जायाः शस्त्रास्त्रनिर्मिति-भावना सम्भवतः निकटकाले अस्तित्वं न प्राप्स्यति। परं सौरोर्जायाः पर्याप्तमात्रायां विद्युदुत्पादनं पञ्चदशवर्षेष्वेव सम्भवं प्रतिभाति। अत्र अमेरिकादेशस्य वैज्ञानिकाः आशासते यदागामिषु पञ्चवर्षेषु सौरोर्जाप्रयोगेण स्वदेशस्य आवासाः कार्यालयाश्च औष्ण्यमनुभविष्यन्ति, न्यूनदशके च शीततापप्रणाली अपि तयैव सञ्चालिता भविष्यतीति। आगामिनि दशके सौरोर्जाप्रयोगेण अमेरिकादेशस्य इन्धनाभावो दूरी भविष्यतीति सूचयति 'समाचार' इत्याख्यं समाचारपत्रं 'विश्वसन्देश' इत्याख्यञ्च इदानीम्

अन्तरिक्षप्रयोगशालाया:प्रयोगकार्येभ्य: तत्र नियुक्तानि शक्तिस्रोतांसि, यानि सिलिकननाम्ना ज्ञायन्ते , ११ प्रतिशत क्षमता पूर्वकं सौरोर्जां विद्युद्रूपे परिणमयन्ति। अत:सौरोर्जाया: विद्युदुत्पादनकार्यं निकटं वर्तते । परं तथा शस्त्रास्त्रप्रतिपादनकर्मण: कल्पना इदानीं मनसि पदं न करोति यतो हि विश्वस्य आयुधागारेषु निहितानि परमाण्वायुधान्येव नाना पृथ्वीलोकान् अग्निप्रलयदृश्यं प्रदर्शयितुं क्षमाणि सन्ति अत: शक्तिसम्पन्नराष्ट्राणां, सत्यपि तादृशे सौरविज्ञाने, सौरायुधेषु नापि रुचि: न भविष्यति।वर्तमानकाले तु विश्वहिताय परमाण्वायुधानां निष्क्रियत्वं चिकीर्षन्तो राष्ट्राणि तदर्थं वार्तारतानि सन्ति। तेषां महाविनाशिनी शक्ति: सर्वेभ्यो भयविस्मय-जननी अस्ति । एवं सौरास्त्राणां विकासस्य सम्भावना न्यूनैवास्ति । तथापि कौतुकी विश्वकर्मा तथा न घटयिष्यतीति वक्तुं न शक्यते विश्वासपूर्वकम् ।

यथातीते विश्वकर्मणा सौरशक्तिं संगृह्य देवास्त्राणि कृतानि तथैव शस्त्रास्त्रानुष्ठा: अस्य पुत्रा: भाविकाले आयुधकार्यं परित्यज्य उपयोगिनीं विद्युच्छक्तिं सम्पादयिष्यन्ति राष्ट्रहिताय शान्तिं काम्यमाना:। यथा तेषां गुरुणा कुबेरसुताय सौरशक्तिपरिचालिता शिबिका कृता तथैव तेऽपि तच्छक्तिचालितया-नानाम् आविष्कर्तारो भविष्यन्ति, करिष्यन्ति च विद्युदुत्पादनम् । एवमेते श्रुति अद्यापि वैज्ञानिकेभ्यो मार्गदर्शकस्य महत्त्वमावहन्त:।

अथ सचलनगररचनामहत्त्वम् ---

अन्तरिक्षे सञ्चरणशीलानि अयोरजतहिरण्यमयानि त्रीणि नगराणि, यानि सहस्रवर्षान्ते दर्शनाय एकस्याम् ध्रुरेखायाम् आगच्छन्ति स्म, कृतानि ब्रह्मादिष्टेन विश्वकर्मणा । विमानमाविष्कृत्य पाश्चात्त्या: वैज्ञानिका: अद्य पुराणोक्तवैमानिक-कथासु श्रद्धां विश्वासञ्च प्रकटयन्ति । ऋषिकर्दमस्य विमानस्य, कुबेरस्य पुष्पकविमानस्य च वर्णनानि श्रुत्वा तेषां हृदयेषु तादृशानां सर्वसुखसाधनसम्पन्नानां मनोऽनुकूलगामिनां विमानानां रचनां प्रति अतीव उत्कण्ठा, साहस: , तत्परता च दृश्यते। विमानेषु सुखसुविधासम्पादनाय तै:‘जम्बो जेट’इत्याख्यौ विशालकायौ विमानौ जनसेवायां नियोजितौ। परं तथापि अयं विमान:शास्त्रकृतविमानै: सह समतां नार्हन्ति -----

स्वल्पकामतामवलम्ब्य । त्रिपुररचनां कृत्वाथ ते महद्भ्रयसाध्योपग्रहान् कुर्वन्ति ये कियन्मासवर्षपर्यन्ताम् अन्तरिक्षे भ्रमन्ति । परं तेषु नगररचना इदानीं निकट-भविष्ये सम्भवा न च प्रतिभाति। तथापि तत्र ते प्रयत्नपराः सन्ति, भविष्यन्ति च सिद्धाः ।

अथ यानमहत्त्वम् ----

एकोनविंशतितमे ख्रीष्टाब्दे यावन्नाविष्कृताः वायुयानाः वैज्ञानिकैः तावदस्माकं विमानकथाः तेषां मते कथाः आसन्। कुतः सत्यतां जिज्ञासमानैस्तैः यदा सुमहत्प्रयत्नानन्तरं विमानः आविष्कृतः तदैव ता एव कथाः तेभ्यः श्रद्धास्पदाः प्रेरणादायिन्यश्च सन्ति। गतेषु वर्षसहस्रेषु विश्वकर्मणः कथाशेषाः विमानाः विमानविद्यया सततस्पन्दनशीलानि स्रोतांसीव प्रेरणापयोदाः सन्ति अद्यापि । तासां प्रसादादेव तैः निर्मिताः नाना जातीयाः विमानाः। आकाशे ते द्विगुणित-ध्वनिगतिभिश्चरन्ति मनुष्यान् आयुधानि वादाय। आयुधसज्जिताः विमानाः कियत्क्षणेष्वेव विश्वं दग्धुं प्रभवन्ति। विश्वराष्ट्राणाम् अत्यल्पकाले पुलदयाभा-प्रसङ्गे त एव स्पर्धन्ते विहङ्गमैः । परं विश्वकर्मणो भावे तेषां नामधेयमपि न समभविष्यत् कदाचित् ।

एवं सर्वेषु कलाविज्ञानक्षेत्रेषु विश्वकर्मा+ तत्तत्कलापरिपूर्णजनकस्य महत्त्वमावहति ।यन्त्रात्मकानां चतुःषष्टिकलानां सुप्रयोगाय कृतचतुर्थोपवेदो विश्वकर्मा बौद्धिकश्रमस्य यान्त्रिककलानाञ्च पर्यवेक्षकोऽस्तीत्येवं भणति श्री एड वर्ड मूरमहाशयः( हि० वर्म पृ० २५०)।

उपरिलिखिताभिः पंक्तिभिः विश्वकर्मणः केषाञ्चित् प्रमुखानाम् आधिभौतिकानां वैज्ञानिकानाञ्च कार्याणां महत्त्वं प्रतिपादितम्। एतदतिरिक्तं घटमालाकारादीनां कर्मणां तु उल्लेखो न कृतः। यानविमानादीनां कर्तुः शारीरकर्मणि विनियोगः तस्मिन् सर्वकर्मकर्तृत्वं विरोपयति। न चायं भवति तस्य महत्त्वापादनाय। अतः विश्वेऽस्मिन् दृश्यमानानां क्रियमाणानां वा सर्वेषां कर्मणां स एव कर्तेति अवगन्तव्यः । पृष्टेः आदौ भूलोके नासीत् किमपि वस्तु । नरदेवान् रचयित्वा

तेषां सुखाय तेन नानाविधानि वस्तूनि कृतानि । घटपटमूर्तियानविमानादीन् कृत्वा तेषां रचनादायित्वं पुत्रेषु निधाय स्वयं सुखेन स्वलोके वसतिं चकार । पुनः हरिहरदेवाराधितः सूतश्च स विशिष्टकर्मकर्तुमागतो भूलोके नान्यथा, शापप्रसङ्गं परित्यज्य । यथा शरीरेण क्रियमाणेषु कर्मसु पादौ आधारत्वेन उपयुज्येते तथैव प्रकारान्तरेण आत्मनैव क्रियमाणेषु विश्वकर्मसु इमाः प्रजाः तेन पादत्वेन उपयुज्यन्ते। सर्वेषु जीवेषु कर्मात्मना विद्यमानत्वात् अहर्निशं क्रियमाणानि विश्वकर्माणि तत्कृतान्येव भवन्ति ।

यथा शरीरस्थः पुरुषः तटस्थद्रष्टा भूत्वा मनसा इन्द्रियाणां माध्यमेन क्रियमाणानि कार्याणि पश्यति । न तु भवति तत्र तस्य कोऽपि योगः। तथा निष्क्रियो द्रष्टा नायं कर्मपुरुषः। विश्वकर्मशरीरेषु कर्मात्मना स्थितोऽयं देवो यथायोग्यरीत्या कर्मसंचालनक्रियां करोति। 'पादोऽस्य विश्वा भूतानि' इति श्रूयतेऽपि ऋग्वेदे ( १०।९०।३)। अत्र भूतेषु न केवलं मनुष्य एव पठ्यते अपितु सुखोत्पादनकर्मरताः पशवः खगाश्चापि गणनीयाः। आर्थिकक्रियाणांकर्तारो जन्तवोऽपि विश्वकर्मणः शिल्पकर्मप्रवर्तकाः इति मन्तव्यः। भारवाहिनः श्रमिकाः यथा विश्वकर्मप्रियाः तथैव क्षुधातृष्णाकुलाः कर्मरताः तरतृषभारसहाः। यद्यपि नरपशूनां भारवहनकला भिन्ना भवति तथापि कला कलैवास्ति अतः सम्मानयोग्या शरीरभेदं तिरस्कृत्य । नात्र सम्मानेन पशुपूजा यद्वा अकुशलश्रमिकानां डोमादीनां नामकुशलानां लिपिकादीनां वा पूजा मया उच्यते अपितु वर्तमाने समाजेस्य अकुशलेषु अर्धकुशलेषु वा श्रमिकेषु या उपेक्षा वृत्तिः अनादरभावना वा प्राप्यते दृश्यते वा सा राष्ट्रघातिनी, समाजसंगठननाशिनी च अस्ति । महोदराः धनिकाः नेतारश्च तेषां हीनदशां कदापि स्वप्नदशायामपि न चिन्तयन्ति । बहुविधाभ्यगृहीतास्ते तेषामसुलवेषु उदराग्नि पूरयित्वा शाब्दिकीं सहानुभूतिञ्च उच्चैः प्रलपयित्वा अन्ते कपोलकल्पनादं कृत्वा मञ्चादवतीर्य गच्छन्ति सुखस्वप्नाय गृहान् प्रति ।

यथा एते श्रमजीविनो भवन्ति उपेक्षिताः धनिकैः नेतृभिश्च तथैव अस्माकं पशवोऽपि भवन्ति अनादृताः अस्माभिः अमानवीयव्यवहारेण अपर्याप्तानादृतभोजनेन च। पशुशापशापितेषु अस्मासु न विद्यते सा सुमतिः यया सुसंगठिताः भूत्वा स्वशोषकानां प्रतिरोधे सक्षमाः भवेम । आदृतपशुषु अनादृतपशूनामपेक्षा कार्यक्षमता वर्धिता

भवति या भवति अस्माकमर्थलाभाय । अत आदरणीया: पशवोऽस्माभि: आत्महिताय। अपि च तेन अर्थसमर्था: वयं शोषकावरोधकर्मणि समर्था: भविष्याम:।

शरीरनिरपेक्षा कला :

ये कलाशिक्षिता: खगा: मृगाश्च अर्थाय भवन्ति तेषु कलाक्रिया: विश्वकर्मणैव परिचालिता: भवन्ति ।

कर्मकारिणामङ्गत्वम् --

यद्यपि सर्वे प्राणिन: विश्वकर्मणा शिक्षिता: कला: कार्यरूपेषु परिणमयन्त: तस्य पादरूपा: सन्ति तथापि कर्ममहत्त्वदृष्ट्या एते भिन्नकर्मकारा: भिन्नाङ्गतया भवन्ति । तथा हि----

धर्मोपदेष्टार: शिक्षकाश्च अस्यास्या उच्यन्ते । नानाकर्मनिरीक्षका:, यन्त्रविद:, चिकित्सकाश्च अस्य नेत्राणि भवन्ति । हस्तोद्योगकलाकर्मरता: देशसमाजरक्षकाश्चसैनिका: अस्य विश्वतो विभुता:बाहवो भवन्ति। अकुशला: अर्ध-कुशलाश्च श्रमिका: स्वकर्ममहत्त्वेन समाजशरीरं धारयन्तो, विश्वकर्मणो देहं धारयन्त: सञ्चालयन्तश्च, तस्मिन् पादत्वेन राजन्ते। यद्यप्येवं नानाङ्गभूता: एते शिल्पिन:पृथग्भूता इव प्रतिभान्ति । अपि च तेषां कर्मसु न्यूनाधिकमहत्त्वगन्धं जिघ्रन्ति अल्पबुद्धिन:। तथापि तेषु किमपि अङ्गन्यूनाधिकमहत्त्वसम्पन्नं नास्ति । तानि सर्वाणि परस्परं पूरकानि सन्ति मिलित्वा च शरीरस्थं क्रियायोग्यं कुर्वन्ति यस्मिन् आरूढ: कर्मपुरुषो यात्रान्तमधिगच्छति । परं यथा एकस्यैव अङ्गस्य अभावे निष्क्रिये वा सति शरीरक्रियासु विकृति: जायते कष्टकरी, तथैवाङ्गभूतस्य शिल्पिवर्गस्य मात्र निष्क्रिये शिथिलक्रिये वा सति विश्वकर्मरूपस्य समाजस्य शरीरे क्रियाविकृति: परिलक्षिता भवति अनुभवति च व्याकुलतां सम्पूर्णं शरीरम् । यथा चानुभूयते अस्माभि: प्रतिवत्सरं शिक्षाविद्युत्परिवहन कर्मचारिणां कार्यस्थगनकालेषु। अत: आपादास्यपर्यन्तं सर्वाणि अङ्गानि समानरूपेण महत्त्वपूर्णानि सन्ति । एतदेव अर्थं प्रतिपादयन् ऋषि: भौवनो विश्वकर्मा पश्यति यद् ' विश्वतो मुखो विश्वतो बाहु:' विश्वकर्मा ' सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्' ।

विस्वतो बाहु: भूत्वापि यावद् विश्वकर्मरूप: समाजो विराट्पुरुष इव सङ्गठितो भूत्वा कार्याणि करोति तावदेव पतत्रमिव तुच्छसाधनैरपि कलावस्तूनि निर्माय पृथ्वीलोकं द्युलोकाद् ( शून्यस्थानाद्) पृथक् कर्तुं शक्नोति, नान्यथा कथमपि । तच्च सत्यं व्यवहारसिद्धमेव। अस्माकं देशस्य इतिहासोऽपि तत्सत्यम् उद्घाटयति यतो हि यावदयं देश:संगठित आसीद् तावद् शिल्पसाहाय्येन समृद्धिसीमां लब्ध्वा विदेशेषु स्वर्णपक्षीति नाम्ना प्रसिद्धिं गतोऽभवत् । सदेव पश्चाद् असंगठितो भूत्वा, शिल्पिनामनादरस्य हेतो: परतन्त्रताशृंखलाम् अङ्गीकृत्य बहुदुर्भिक्षपीडितो बभूव ।

निम्नश्रमोपेक्षापफलम् : ---

सर्वेषु समाजेषु अकुशलानाम् अर्धकुशलानाञ्च च श्रमिकाणां संख्या महती एव भवति। परन्तु एत एव धनाभावे शारीरिकश्रमवशाच्च प्राय: मलिनवस्त्रावृतत्वाद् बहूपेक्षिता: भवन्ति समाजे । अतीते पि ते नैकवारम् अभवन् उपेक्षिता:। परमियमुपेक्षा उपेक्षितोपेक्षाकाणां कृतेऽ महदापदे: कारणं बभूव। अनुभूतानि तै: नाना असमानवीयानि कष्टानि । सामाजिकेषु कटुवर्गविद्वेषो जात:। उपेक्षितै: स्वीकृत: परधर्म:। जातास्ते स्वचरितपूर्वधर्मस्य वैरिण: प्रतिशोधाय । तेषामुपेक्षा समाजपुरुषस्य कर्मेन्द्रियाणि शिथिलयति । येनास्यज्ञानेन्द्रियाण्यपि स्वत एव निष्क्रियाणि भवन्ति। अतो नोपेक्षणीया: उक्तविधस्य श्रमिका: स्वदेशसमाजहिताय। तेषु मानवोचितव्यवहार एव तेभ्योऽस्माभि: दत्तं मानधनं भविष्यति तेन च प्रसादितास्ते अस्माकं समाजरथं सुखेन वहिष्यन्ति। नात्र अपेक्षितस्तेषां प्रसादनाय कृपणधनव्यय:। मात्र शब्दव्यय एव किञ्चिदपेक्षित: । यदि कोऽपि शब्दकृपण: तत्राप्यशक्त: तस्य मौनमेव वरम् । मानवोचितव्यवहारे नापेक्षितो धनव्यय:। अतो न शोभते तत्र कृपणता । आत्मसुखाय परहिताय च सर्वै: सामाजिकै: एते शिल्पिनोऽपि मानवयोग्यमानदृष्ट्या दर्शनीया: भवन्ति । इतिहासावृत्तिं जना: सन्देहदृग्भि: पश्यन्ति अतो न सात्र मया वक्तव्या । वयं सर्वे स्वचक्षुभि: प्रतिदिनं पश्याम एव यद् निम्नवर्गस्य शिल्पिनाम् उपेक्षाय न केवलं शासकान् अपितु समग्रं राष्ट्रं चिन्तासागरे प्रक्षिप्य, तटे स्वमहिम्ना महीयते नेतृधनिकानां बुद्धिमतीमुपेक्षामधिगृह्य।

उपेक्षितानां शिल्पिनां हृदयेषु उपेक्षया पदोन्नतिवृत्तिक्षुधया च प्रज्वालितोऽन्तर्दाहस्य [illegible] वह्निः यावन्न दहति समाजदेहं तावदेव योग्योपचारव्यवस्था कर्तव्या अन्यथा दीप्ते गृहे कूपखननेन कोऽपि लाभो न भविष्यति ।

श्रमिकाणाम् अन्तर्वह्निः वयं वृत्त्यर्थं क्रियमाणैः प्रदर्शनैः कार्यस्थगनान्दोलनैश्च जानीम एव। कुत्रापि तैः न्यायं न अधिगम्यते । यदा कदा यष्टिकानां गुलिकानाञ्च प्रहारफलैः सह रोटिकांशं दत्त्वा सन्तोषाय उपदिष्टाः भवन्ति ते नेतृभिः धनिकैश्च । इयं परम्परा यावती आयुष्मती भविष्यति तावती एव राष्ट्राय समाजाय च महाघातिनी भविष्यति । कलचक्रपिष्टाः श्रमिकाः कष्टकालशिष्टाः अपि भूत्वा स्वदेह निःसृतसृग्भिः शोषकान् वञ्चकान् च तर्पयित्वा अस्थिवह्निना नामशेषाः करिष्यन्ति । यदि श्रमिकाणां समस्याः अनिर्णीतदशायां वर्तिष्यन्ति तर्हि राष्ट्रसमाजनाशो निकटं वर्तते इति भावनीयः। अतो धनिकशासकैः पादवन्निम्नस्थानीयाः श्रमिकाः आधारिकेन महत्त्वेन आदृत्य अनिवार्यविश्वकर्मणां कष्टेभ्यो रक्षितव्याः स्वदेशसमाजहिताय ।

एवमेव विश्वकर्मणो वैज्ञानिकस्वरूपभूताः वैज्ञानिकाः अपि नोपेक्षणीयाः विश्वहिताय येषां विरुद्धे सति केषुचित् क्षणेष्वेव समग्रं जगद् वह्निज्वालावृतं भविष्यति । उपेक्षिताः वैज्ञानिकाः विज्ञानकर्ममन्दाः भविष्यन्ति येन विश्वहिताय क्रियमाणानि शोधकार्याणि अवरुद्धानि भविष्यन्ति । वैज्ञानिकानाम् असन्तुष्टे सति मानवसुखाय प्रचलिता कलव्यवस्था अव्यवस्थिता भविष्यति । इदानीम् अस्माकं जीवनानि, विशेषेण नगरेषु विज्ञानाधीनानि सन्ति। तत्र क्षणमपि विज्ञानवियोगः कष्टकरो भवति। तेषां महत्त्वं राष्ट्रशासकाः अवगच्छन्ति सुष्ठुरूपेण । अतः प्रायः सर्वेष्वेव राष्ट्रेषु ते सन्तुष्टा एव सन्ति ।

किं बहुना विश्वकर्मणः आधिभौतिकं वैज्ञानिकञ्च महत्त्वं वर्णनातीतमस्ति। यतो हि विश्वकर्मणः आधिभौतिकं रूपं वैज्ञानिकं रूपञ्च अस्माकं जीवनानां, समाजानां, राष्ट्राणाञ्च पादस्थानीयं शीर्षस्थानीयञ्च क्रमेणास्ति ।

———०———

<u>वैश्वकर्मणपर्वपद्धतिः</u>

तत्रादौ पर्वतिथिः ।

विश्वकर्मणः पर्वतिथिः निश्चिता भवेत् प्रमाणैरित्यस्मिन् विषये आधुनिकाः विश्वकर्माणोऽतीव उत्सुकाः सन्ति तदभावे सचिन्ताः अपि--- स्वपूर्वपुरुषस्य आदिज्ञानाभावे वंशज्ञानस्य क्षीणत्वात् । यच्चावश्यमेवावाप्तव्यमशेषैः जनैः । यद्यपि वेदविषयविस्तारकेषु पुराणेषु अस्य अस्माकं पूर्वपुरुषस्य जन्म-कर्मणां सविस्तरेण वर्णनानि समुपलभ्यन्ते तथापि तत्र सर्वेषु स्थलेषु कालनिर्देशाभावेऽस्य अनुमानातीतवर्षेषु विगतेषु कियद्वर्षपूर्वं जातोऽयमित्येवं वक्तुं न शक्यते । का कथा पुनः मासतिथिनिर्धारणस्य । अत्र विवादप्रवर्तकेन कापि गुणाशा मनागपि मनसि न कर्तव्या । अन्यथा सौ विवाद दोषेण दूषितो भविष्यति । वेदरचनाकालस्य गणनायां व्यापृता विद्वांसः स्वस्वमतानि प्रतिपाद्य स्वकर्मसन्तुष्टाः बभूवुः । परं किं सत्यं किन्नासत्यम्, को मान्यः कोऽमान्य इति विश्वासपूर्वकं वक्तुं कोऽपि न पारयति। अत्र वैयक्तिकी आस्थैव मतमान्यतां प्रेरयति । यदि ईसा-पूर्वद्वित्रिचतुः सहस्रवर्षाणामिमं कथमपि वेदरचनाकालं स्वीकुर्मः तर्हि वेदस्तुतानां त्वष्टे-न्द्राग्नीनां जन्मकर्मकालः ततः कियत्पूर्वतामुररीकरिष्यतीति बहुविवादविषयः। प्राचीनार्वाचीनसाहित्येषु प्रायः अस्य देवस्य( अन्येषामपि) कर्मख्यातिरेवोपलभ्यते न जीवनस्य --- व्यक्तेः कर्मणां प्राधान्यत्वात् । यद्वा को जानाति यद् यवनरूढविप्रविनाशितसाहित्येषु नष्टं कर्मकालज्ञानपूरकं साहित्यम् ।

लौकिकं व्यवहारमाधारीकृत्य यदि वयं विचारयामः तर्हि देशरुचिकर्म-भेदात्तत्र तिथिकालभेदान् समुपस्थापयिष्यन्ति अनुमानेषु । तथापि पुष्टसाहित्यिक-प्रमाणाभावे त एव पूज्याः । तथाहि ---

अतीते अस्माकं देशे कुटीरोद्योगेषु पात्रमूर्तिकर्माणि परित्यज्य सर्वे स्म प्रायः जनाः कृष्याश्रिता आसन् । तेषामुन्नतिः कृष्युन्नतिरिवासीत् । एतेषु उद्योगेषु तैलवस्त्रोद्योगाः प्रमुखाः आसन् । एतदतिरिक्तं चर्मलौहकाष्ठादीनाम् उद्योगानामपि उन्नतिः प्रकारान्तरेण तदुन्नतिपरकैवासीत् ।

अतः कृषिकर्म एव प्राधान्यदृष्ट्या सम्यस्यैमिः कैश्चिल्लोकैः भाद्रपदाश्विनमासयोः भाविकृषिसुत्पादनाय करिष्यमाणानां कर्मणां साफल्याय कृषकविश्वकर्मप्रसादनाय च तत्कार्यारम्भण मासयोः, विशेषां विश्वकर्मणां सन्तोषाय, विश्वकर्मपर्व-पद्धतिः प्रारब्धाः। कृषिकर्मणि दोनेश्यितिभेदः कालभेदं जनयति अतोऽत्र मासभेदः। एतयोः मासयोः पर्वतिथी कृषिकृषकमहत्त्वापादनायैव – आस्ताम्। परन्तु परवर्तीकाले कृषकाः विश्वकर्मसमाजाद् बहिष्कृताः तेषां कृतिषु मूर्तिषु प्रत्यक्ष-कलादर्शनाभावे। यद्वा तेषां कृतयो भगवत्प्रकृतिकृतेति मत्वा। उपेक्षितास्तैः (कर्मकारैः) कृषकाणाम् उत्पादनकलाप्रयासाः। यथापि ते विश्वकर्मसमाजबाह्याः सन्तीति अतीवखेदविषयः। यद्यपि वयं तेषां कृषिकलारूपाणि दृष्ट्वा मुग्धाः भवन्ति परं तान् वराकान् स्वसमाजेषु न सम्मेलयन्ति। अतीते कृषकमहत्त्वं विश्वकर्मसमाजेषु सुस्पष्टमासीद्। अतस्तेषां प्रसादनाय तैः कृषिदृष्ट्या महत्त्व-पूर्णमासयोः अयं पर्वः प्रचारितः। अनयोः मासयोः अयंपर्वः बङ्गालासामपञ्जाब-बिहारोत्कलप्रान्तेषु सम्पादितो भवति। तत्र पंजाबप्रान्ते केषुचिद्भागेषु कार्तिक-मासस्य शुक्ला प्रतिपदापि पर्वतिथिः भवति।

आश्विनमासे कन्यासंक्रान्तिदिवसोऽप्यस्य पर्वतिथिर्भवति या भाद्रपदेऽपि भवति यदा कदा। एवम् अनिश्चिता कन्यासंक्रान्तितिथिः पर्वतिथये सर्वथा अनुपयुक्ता भवति। कन्यासंक्रान्तिपद्धतिरपि पंजाबप्रान्त एव बहुधा प्रचलिता आसीत्। परन्तु इदानीमेते जनाः प्रायः आंग्लमासस्य सितम्बरस्य सप्तदशे दिनाङ्के आमनन्ति विश्वकर्मपर्वं। आधुनिकभारतीयमतङ्गज्ञा अपि एनमेव दिनाङ्कं स्वगुरोः विश्वकर्मणः पुण्यतिथित्वे स्वीकुर्वन्ति। " विश्वकर्मा महापुराणे " श्री जयकृष्णोऽस्य क तिथिः कार्तिकी पूर्णिमेति लिखति यामसौ वेदसम्मतेति उद्घोषयति। परं वेदपुराणेषु तुल्यभावेऽयं मात्र घोष एवास्ति, न तु सारः। सोऽत्र एवं पठति ---

कार्तिकस्य सिते पक्षे पौर्णमास्यां शुभे तिथौ।
लग्ने शुभे च करणे राशियोगसमाकुले।
चतुर्भुजो विश्वकर्मा चराचरपतिः सदा।
सोमनाथात्समुत्पन्नः प्रभासे स्थान उत्तमे॥

नैवं वेदपुराणसम्मत:। अतो जयकृष्णकृत: उद्घोष: सारहीन एवागन्तव्य: ।

त्वष्टाश्विनमासस्यादित्य उक्त: श्रीमद्भागवते ( १२।११।४३) अतोऽयमेव मासो विश्वकर्मण: पर्वार्थ उपयुक्तेति विचार्य कैश्चिज्जनै: अस्मिन्मासे अयं पर्व: प्रवर्तित इत्यपि विचारमिथ्योऽस्ति। यतो हि पुराणेषु आदित्यानां मासनामभेदा: सन्ति । यदि त्वष्टादित्यमासं संलक्ष्य अस्य पर्वस्य प्रचलनमभवदिति मतं तर्कसङ्गतमिति मन्यामहे तर्हि इतरपुराणोक्ता: त्वष्टादित्यमासा: अपि पर्वतिथियोग्या: भवन्ति यच्च व्यवहारे न दृश्यते । ~~अन्यन्केवलं~~ अपि च एवं न केवलं मतत्वभेदकलह एवोद्भविष्यति अपितु सामान्यजनमानसे ग्राह्याग्राह्यसन्देहोऽपि पदं करिष्यति। त्याज्यौ भेदसन्देहौ संगठनशक्तिनाशककलहोत्पादकत्वाद् आत्महिताय । अतोऽयं पर्वप्रवर्तको हेतु: मान्यतां नार्हति ।

ये पुन: माघमासस्य शुक्लत्रयोदश्यामस्य प्रादुर्भावं मन्यन्ते, नास्ति तत्रापि कश्चित्सारभूतप्रमाण:। शंकर शास्त्रीकृते पञ्चाङ्गे ( शके१८८५ ) इयं तिथि: ' वृद्धवशिष्ठे ' त्यस्य ग्रन्थस्य अनुसारिणीति अपि न प्रमाणविषय: ।यतो हि अयं सामयिकप्रमाण एवास्ति श्री हरिकेशदास:स्वकृते ' विश्वकर्मापर्वपद्धति ' इत्याख्ये ग्रन्थे, जयकृष्णकृत विश्वकर्मा महापुराणानुसारम् अस्य देवस्य पर्वतिथि:, एकोनचत्वारिंशत् पृष्ठे कार्तिकी पूर्णिमा लिखति । तत्रैव पुन: सप्तचत्वारिंशत् पृष्ठे जयकृष्णकृत विश्वकर्मा महापुराणानुसारमेव माघमासस्य शुक्लपक्षीया त्रयोदशीति उल्लिखति ।अत्रत्यौ श्लोकौ एवं स्त: -----

विश्वेश्वराज्ञया त्वाष्ट्रो लोकानां हितकाम्यया

माघमासे सितेपक्षे त्रयोदश्यां शुभे दिने ।।

प्राप्तवानिन्द्रकीलं वै नगरायं महाद्भुतम् ।

इन्द्रकीलेन्द्र राजासौ पर्वदैवसमन्वित:।।

(चतुर्थसंस्करणे पृ०८६) ।

सम्भवत: अत्र श्रीहरिकेशदासो भ्रमितोऽभवद् भावावेशवशात् । कार्तिकी पूर्णिमा तत्रास्य जन्मतिथि:उक्ता । इयं पुन: माघमासस्य शुक्ला त्रयोदशी देवानां

सम्मुखे प्रादुर्भावतिथि: अस्ति । प्रादुर्भावहेतु: कार्यवशाद देवकृता स्तुति: भवत्यत्र। अन्यत्रापि पुराणेषु अस्य कार्याय आविर्भाव: स्तुत्यनन्तरं श्रूयते। अत: उक्तश्लोकयो: आविर्भावतिथिरेव कर्तव्या यथा ' प्राप्तवान् ' इति शब्देन ज्ञायतेनाल्पबुद्धिरिति। एकस्मिन् एव ग्रन्थे एकस्य द्वे जन्मतिथी को भणिष्यति ?

त्वष्टा माघादित्य इति विचार्य ( मत्स्य० १।३।२०।८३) हेलिना अस्मिन् मासे सम्पादितो यज्ञोऽपि अस्य पर्वतिथये युक्तियुक्ताधारो न भवति । यतो हि ---

१- त्वष्टा माघादित्य इति न सर्वै: महापुराणै: मान्य:।

२- त्वष्टादित्यस्य मासतिथौ स्वीकृते अन्यपुराणपठितो मास भेदो रुचिभेदमुत्पाद्य व्यवस्थादैन्यं जनयिष्यति ।

३- यदि त्वष्टादित्यमास एव विश्वकर्मणो जन्म समभविष्यत् तर्हि तत्र अवश्यमेव मासनामैक्यमपि श्रूयते स्म यच्च नैवास्ति। अन्यच्च तथैव इन्द्रादीनामपि जन्मतिथय: सम्बन्धिते मासे समभविष्यन् यथा च नैव दृश्यते व्यवहारे । आदित्यमास: कस्यापि देवस्य जन्ममासप्रमाणपात्रतां नार्हति---- बहुधा मासनामभेददर्शनात्। एवमादित्यमासस्य पर्वमासत्वं न सिद्ध्यति विश्वासौचित्याभावे ।

माघमासे तिथिविनिश्चये लौकिकी भावना एव क्रियाशीलतामर्हति इति वक्तुं शक्यते । यतो हि बहुषु क्षेत्रेषु अस्मिन् मासे एव गृहनिर्माणकार्याणि आरभ्यन्ते --- विशेषत: कृषकै: ग्रामीणक्षेत्रेषु कार्यावकाशलाभाय । अद्यापि ग्रामीणेषु इयं धारणा क्रियाशीला दृश्यते । एतेषु क्षेत्रेषु गृहमूर्तिनिर्माणकार्याण्येव विशेषत: शिल्पकर्मसु गण्यन्ते ( एम वा) एषामयं देवो भवति । कथासु विश्वकर्मा बहुधा गृहमूर्तिकर्तैवास्ति । अतो लोके यदि गृहनिर्माणकार्येभ्य: सुलभकाले शिल्पिसम्माननार्थं विश्वकर्मपूजनारम्भो दृश्यते । तदत्र किं चित्रम् ? इयं तिथि: देशस्य बृहद्भागे प्रचलिता दृश्यते ।

वस्तुतस्तु ---

य इमा विश्वानि भुवनानि जुह्वदृषिर्होता न्यसीदत पिता न: ।
स आशिषा द्रविणमिच्छमान: प्रथमच्छदवरां आविवेश ।।
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वपाद ।
स बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एक:।।



( ऋ०१०।८१।१,३)।

एवं गुणविशिष्टो विश्वकर्मा कदा जात इति वक्तुं को नरो प्रभवति ? यो मूर्ख: प्रागासीत् । ज्ञानगर्वमूढा: ये तिथिज्ञानं प्रकाशयन्ति यच्च विश्वासपूर्वकं --- यथा ते तत्र तदानीमुपस्थिता स्यात् --- मातृमृगमरीचिकां मुखबलेन निदर्शयन्ति। यस्य मासतिथि वाङ्ग्रन्थेषु नोपलभ्यते, तासु अत्यर्वाचीन-ग्रन्थानुसारं स्वीकरणे महदापत्ति: समुपस्थिता भवति । कुतस्तेऽयमुपलब्धा ? किमर्थं तत्रोपलब्धिभेद: ? सर्वे स्वमतं वेदपुराण सम्मतमिति कथयन्ति, परं वेदेषु तु क्वापि तिथि: नाम्नायते । तत्र तत्र मतपुष्ट्यर्थं प्रमाणाभावे जनमानसे विश्वासहेतु: पदं न करोति ।

अस्माकं मते तु दैवीसृष्टि: मानवसृष्टे: प्रागभूत । पश्चाज्जात: पूर्वजातस्य तिथिकालनिश्चयं प्रभवितुं नार्हति कथमपि। यतो हि स्वयं जातोऽपि वक्तुं न शक्नोति स्वोत्पत्तिकालम् । कालविषयम् अधिकृत्य, अन्ते असारपरिणाम-जनकत्वात्, निरर्थके विवादव्यापारे कालयापनात् शोभनमिदमस्ति यद्यथा कोऽपि न पृच्छति यद्विष्णु: कस्मिन् दिवसे मासे वा जात:? विश्वनाथ: कदा जात: ? अज: कस्मिन्मुहूर्ते जात: ? परन्तु सर्वै: लोकै: एता: देवता: परमश्रद्धाविश्वासपूर्वकं उपासिता: भवन्ति प्रतिदिनम् । तथैव उक्तगुणविशिष्टो विश्वकर्मापि , अस्माकं विश्वकर्मणां पुराणो नित्य: पुरुष:, अस्माभि: प्रतिदिनमेव उपासितोऽ-र्चितो वा भवितव्य:। सत्यनारायणव्रतकथेव श्रद्धासाधनसमन्वितेे दिने कर्तव्योऽस्य शिल्पदेवस्य महोत्सव: । परं युगकालानुसारं विश्वकर्मसमाजानां सङ्गठनदृष्ट्या बहुप्रचलित: सप्तदशमो दिनाङ्क: सितम्बरमासस्य अस्य पर्वाह्नत्वे स्वीकर्तव्य:। अयमेव दिनाङ्क: बहुधा श्रमदै: इदानीं स्वगुरुपर्वदिवसत्वे आदृतो भवति । यथेतरेषां देवानां यागकालो मासतिथिविशेषेष्वेव निश्चितो नास्ति तथैव वैश्वकर्मणो यागोऽपि शुभमुहूर्ते श्रद्धासाधनसमन्वितेन यस्मिन् कस्मिन् अपि मासदिवसे कर्तव्यो न केवलम् उक्त दिनाङ्क एव ।

।। अथ पात्रलक्षणमुच्यते ।।

तत्र यज्ञपार्श्वसंग्रहकारिकायाम् ।

खादिर: स्फयाकृतिर्वज्रो रत्निमात्र: प्रशस्यते ।

आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम् ।।
हस्तमात्रं चतुःप्रादेशिक मूलदण्डसमन्वितम् ।
त्रिंशदङ्गुलसंख्याको मूलदण्डो विकङ्कतः ।।
प्रस्थमात्रोदकग्राही प्रणीता चमसो भवेत् ।
वैकङ्कतं पाणिमात्रं प्रोक्षणी पात्रमुच्यते ।।
हंसमुखप्रसेकञ्च त्वग्बिलं चतुरङ्गुलम् ।
आज्यस्थाली तु कर्तव्या तैजसद्रव्यसम्भवा ।।
महेन्द्राग्नि पार्थिवी वापि कर्तव्या नित्यं सर्वाग्निकर्मसु ।
आज्यस्थाल्याः प्रमाणं तथा कामन्तु कारयेत् ।।
मृन्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते ।
तिर्यगूर्ध्वं समिन्मात्रा दृढा नातिबृहन्मुखी ।।
कुलालचक्रघटितमासुरं मृन्मयं स्मृतम् ।
तदेव हस्तघटितं स्थाल्यादि शुभं दैविकम् ।।
यज्ञवास्तुनि मुष्टौ च स्तम्बे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च ।
अङ्गुष्ठपर्ववृत्तश्चारत्निमात्रः स्रुवो भवेत् ।
पुष्करार्धं भवेत्खातं पिण्डार्धं स्रुवस्तथा ।।
( पिण्डार्धं मुष्ट्यर्धमित्यर्थः)
यावतान्नेन भोक्तुस्तु तृप्तिः पूर्णैव जायते ।
तं वरार्थमतः कुर्यात् पूर्णपात्रमिति स्थितिः ।।
यवैर्वा व्रीहिभिः पूर्णं भवेत्पूर्णपात्रकम् ।
वरोऽभिलषितं द्रव्यं सारभूतं तदुच्यते ।।
अष्टमुष्टि भवेत्किञ्चित् किञ्चिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते ।।

(। इत्याधानपात्राणि ।।

अन्यान्यप्यत्रैव लिख्यन्ते ---
शूर्पन्त्वरत्निमात्रं स्याद्वैणिकं वैणवन्तु वा ।
उलूखलन्त्वरत्निमात्रं स्याद्दैक्षिकं वैणवन्तु वा ।।
उलूखलन्त्वरत्निमात्रं स्यादुपला च दृषत्तथा ।

विस्तारो वृष्णदः प्रोक्ता द्वादशाङ्गुल संख्यया ।।
पालाशं जानुमात्रं स्यात्पृथुबुघ्नमुलूखलम् ।
अर्धखातं तूलूखलं मध्ये   रास्नासमन्वितम् ।।
खादिरं मुसलं प्रोक्तमरत्नित्रय सम्मितम् ।
प्रादेशमात्रं विज्ञेयमेदाणन्तु विकङ्कतम् ।।
वृत्तमङ्गुष्ठपर्वाग्रमवदानक्रियाक्षमम् ।
दण्डस्यैव भवेद्दर्वी विशेषस्तामहं ब्रुवे ।।
वारण्यरत्निमात्रास्यात्तुर्यांशाधिकपुष्करा ।
हस्ताकारा च पृथ्वग्रा अग्रे सर्पफणाकृतिः।
आकर्षं फलकं हस्तमात्रं स्याद्धनुराकृतिः ।
अग्रे सर्पफणाकारं खादिरं वा विकङ्कतम् ।।
कङ्कतानि त्रिदन्तीनि वारणानि भवन्तीह ।
वारण्यरत्निमात्रा स्यादभ्रिः शतन्दशाङ्गुलम् ।।
द्वात्रिंशदङ्गुला शम्या वारणीत्यभिधीयते।
शेषाणन्यारत्नीन् कुर्याद्बाहुमात्रा नु पुष्करान् ।।
श्रीपर्ण्यां हस्तमात्रे च अपर्ण्यां शूलमेव च ।
तन्मूलं यस्य कस्यापि[1] यज्ञियस्य तरोर्भवेत् ।।
लौही वा मृन्मयी वा स्यात्पद्मला च यथार्थतः ।
लौही ताम्रमयी वापि कुर्याच्चैव यथार्थतः ।।
पात्राणि वारणान्यत्र यानि प्रोक्तान्यसम्भवे ।
वैकङ्कतानि कार्याणि सूत्रान्तरमतादपि ।।
अभावे मुख्यवृक्षस्य यज्ञियस्य तरोरिह ।
यत्किञ्चित्पात्रजातन्तादिति भास्कर सम्मतिः ।।
अश्वत्थस्यारणी ग्राह्या नान्यस्मादेव वृक्षतः।
एवं सर्वेषु शास्त्रेषु दृष्ट्वा सूत्रान्तरेष्वपि ।।
।। इति पारस्करगृह्यसूत्रे पात्रलक्षणानि कथितानि ।।

---

१ ब्रह्मपुराणे यज्ञियाः वृक्षा एते ब्रूयन्ते ----
पालाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
काश्मर्योदुम्बरौ बिल्वाश्चन्दनः सरलस्तथा ।।
शालश्च देवदारुश्च खादिरश्चेति याज्ञिकाः ।।

शुल्बसूत्रे शङ्कुपरिमाणमित्थमुच्यते ---

षडङ्गुलपरीणाहं द्वादशाङ्गुलमुच्छ्रितम् ।
अरठं वाव्रणं चैव शङ्कुं कुर्याद्विचक्षण: ।
द्वितितस्तिप्रमाणस्तु खादिरो मुद्गरस्तथा ।
शङ्कुलेन निखातव्यस्तस्मात्स्य परिग्रह: ।।
एकतदा: कुकुत्तदिण: खदिर: सम आयत:।
शङ्कु: कार्यस्तु शुल्वज्ञैस्तस्मादं गमयेन्महीम् ।। (शु०प० ७।७-६)।

अर्थं यज्ञपात्रकर्तु: लक्षणान्युच्यन्ते ।

न पात्रं प्रतिकृत्यर्थं न वाठं खदिरं तथा ।
मृतभार्यो द्वयभार्यश्च अपुत्रो मृतपुत्रक: ।।
शूद्र: संस्कारकश्चैव कृपणो गजवाहक:।
प्रायश्चित्तगृहीतो य: सनायककपैशुनौ ।।
शूद्रगेहे निवासी च शूद्रप्रेरक एव च ।
स्वल्पकण्ठो वामश्च वृषलीपतिरेव च ।।
बन्धुद्वेषी गुरुद्वेषी भार्याद्वेषी तथैव च ।
हीनाङ्गश्चैव वृद्धाङ्गो भग्नदन्तश्च दाम्भिक:।।
प्रतिग्राही च कुनख: पारदारिक एव च ।
श्वित्रीकुष्ठीकुलोद्भूतो निद्रालुर्व्यसनार्थक:।।
अदीक्षित: कदर्यश्च षण्डरोगी गलद्व्रण:।
महाव्रणी च उदरी च यज्ञपात्रं न कारयेत् ।।
( भवि० म०पर्व०२।१८।१०-१५)।

पात्रासादनम्

प्रथमं पत्नी, होतृ, ब्रह्म, यजमानप्रणीताग्नीध्राणां स्थानेषु दर्भैरासनं कल्पयित्वा क्रमेण गार्हपत्यं दर्भान्संस्तीर्य तेषु प्रक्षालितयज्ञपात्रा सादनं इत्यम् । तथा -----

एकादश कपालानि च । अग्निहोत्रहवणीं च शूर्पं च । कृष्णाजिनं च शम्यां च। उलूखलं च मुसलं च । दृषदं चोपलां च। स्रुवं चोपभृतं च । ध्रुवां च स्रुवां च । प्राशित्रहरणं चेडापात्रं च । वेदं च पिष्टोद्वपनीं च। प्रणीताप्रणयनं चाज्यस्थालीं च । वेदं च दारुपात्रीं च । योक्त्रं च वेदपरिवासनं च । धृष्टिं चेध्मप्रव्रश्चनं च । फलीकरणपात्रं चान्तर्धानकटं च । चित्रे उपवेशं च । वज्रं च मौञ्ज्यं च । यागोपयुक्तानि अन्यान्यपि पात्राण्येवमेवासादयेत् ।

## यागस्य प्रागाचरणीयं वाजमान्यम्

यागादिवसे पूर्वेद्युर्वा कर्ता आत्मानं नित्यनैमित्तिकं कर्म विधाय, अग्निहोत्रात्मकं प्रातरग्निकार्यञ्च कृत्वा वपनं करोति । वपनविषये तैत्तरीयवेदवाक्यं यथा ---- केशश्मश्रु वपते । नखानि निकृन्तते । ततो धावते । स्नाति । अहतवासः परिधत्ते इत्युदाह्रियते ।

ततः सपत्नीकः स्नात्वा नवनीतेन ( स्नेहमयेन) अभ्यंजनं विधाय कृताञ्जन एकविंशतिदर्भं पिञ्जूलैः पवनपावनं कुर्यात् । पत्न्यपि वपनाभ्यञ्जनवर्जं सर्वं कुर्यात् । ऋत्विजश्च पत्नीवत् कुर्युः। पवनपावनोपयुक्तानामेकविंशति दर्भपिञ्जूलानामासादनं चित्ररूपेण प्रस्तूयते ----




उदगग्राणि सप्तसप्तदर्भाणां त्रीणि पिञ्जुलानि ।

प्रथमं मूलस्थैः सप्तभिर्मुखमूर्ध्वाग्रं संमृजीत । मध्यस्थैः सप्तभिस्तथैव नाभिम् । अग्रस्थैः सप्तभिर्गुल्फौ । ततः पिञ्जूलानि प्रोक्ष्य पाणी च प्रक्षाल्य समंत्रकमाचमेत ।

मन्त्राः आपो हिष्ठा० त्रिः। ततो व्याहृतिभिः पृथक् पृथक् मुखं संमार्जयेत् ।
तद्यथा ---

भूः दक्षिणतः, भुवः उत्तरतः , स्वः मध्ये नासिकायोष्ठौ । अग्रे तदंगमालभनं । यथा-- शिरः, चक्षुषी, नासिके, श्रोत्रे, हृदयम्, उपउपस्पृश्य पुनर्मार्जनं विधीयते। अत्र अध्वर्युः पत्नीमपि मार्जयेत् । तत्र मन्त्र प्रतीकाः। दधिक्राव्णो० आपोहिष्ठा० ३ यच्चिद्धिते० यत्किंचेदं० कितवासो० हिरण्यवर्णाः०४। ततः पवमानः सुवर्जनः इत्यारभ्य जातवेदामोर्ज्यन्त्या पुनातु । इत्यन्ताः पवमानपादाः। अवान० एते यजुर्मन्त्राः । तरत्समंदी० ४ ऋचात्मकं बह्वचं सूक्तम् । ततो भूर्भुवः सुवः। शन्नो देवी०। इति मार्जनम्। अग्निहोत्रशालायां पश्चिमे भागे बर्हिषां उपयुक्तं सम्पाद्य अध्वर्युः वेदुत्कटयोर्मध्येन प्रपद गार्हपत्यस्योत्तरत उपविश्य इडादेवहूः ० इति यजुः जपेत्। यजमानोऽपि सपत्नीकः तथैव प्रविश्य गार्हपत्यस्य पश्चात् दर्भासने उपविश्य पवित्रपाणिः प्राणानायम्य पत्न्या सह विष्णुं स्मरेत् । य इमा विश्वा०, विश्वतश्चक्षुरुत० इति स्मरणार्थौ विश्वकर्मात्मकौ । ततो 'वाचस्पतिं विश्वकर्माणं०' इत्यनेन मन्त्रेण विश्वकर्मण आह्वानं कुर्यात् ।

## संकल्पः

विश्वकर्मणा हविषा यक्ष्ये । ॐ तत्सदद्य ब्रह्मणो द्वितीये परार्धे प्रथमे दिने द्वितीये प्रहरार्धे श्री वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे कलियुगे, कलिप्रथमचरणे (इयत्सु) वर्षेषु गतेषु जम्बूद्वीपे भरतखण्डे पुण्यभूमौ आर्यावर्ते अमुक) स्थाने ( अमुक) सम्वत् ( अमुक) शाके ( अमुक) अयने ( अमुक) ऋतौ (अमुक) मासे ( अमुक ) पक्षे ( अमुकायां ) शुभतिथौ ( अमुक ) वासरे ( अमुक) ग्रामवास्तव्यः( अमुक) गोत्रोत्पन्नो ( अमुक) नामाहं श्री विश्वकर्मदेवपर्वकृत्यं करिष्ये । यज्ञसंकल्पः त्रिरुपांशु त्रिरुच्चैरिति चाज्ञारमुच्चार्यो भवति। ततो याज्ञी तन्म ऋध्यतां० पठेत् ऋत्विजश्च तथैव ऋध्यतां० इति प्रतिवचनं ब्रूयुः ।

## ऋत्विग्वरणम्

संकल्पानन्तरं यजमानो यज्ञसम्पादनार्थमेकं पुरोहितं वृणुते स च एतैः गुणैः अलङ्कृतो भवितव्यः ---

विश्वकर्मकुलश्रेष्ठो वेदशास्त्रार्थकोविदः ।
अरोगी रूपसम्पन्नः सत्यवाक् धर्मतत्परः ।।
मन्त्र तन्त्र क्रियाभिज्ञः कुटुम्बी सत्कुलोद्भवः ।
वेदशास्त्रार्थपारीणः नित्यकर्म दृढव्रतः ।।

' ओ ३ म् साधवो सदने सीद ' इत्युक्त्वा यजमानेन ऋत्विक् प्रार्थयेत् यागविधिकरणाय । ॐ सीदामि । यजनादिभिः संस्कृतो यथाज्ञानेन कर्म-करिष्यामि । इति ऋत्विक्प्रतिवचनम् ।अद्यमम विश्वकर्मदेवपदोपलब्धये यज्ञकरणाय भवन्तं वृणे इत्युक्ते यजमाने अहो वृतोऽस्मीति ब्रूते ।उत्तराभिमुखासीनः ऋत्विगाचम्य पूर्ववद् इडादेवहू:०, देवागातुविदो० इति मन्त्रद्वयं पठेत् । माल्यचन्दनादिभिः पूजितः ऋत्विक् होतादयो वा एतैः मन्त्रैः आचमनं कुर्वन्ति----

१- ओ३म् अमृतोपस्तरणमसि स्वाहा ।
२- ओ३म् अमृतापिधानमसि स्वाहा ।
३- ओ३म् सत्यं यशः श्रीर्मयि श्री श्रयतां स्वाहा ।

## अङ्गस्पर्शनक्रियामन्त्राः

१- ओ३म् वाङ्० म आस्ये स्तु इत्यनेनास्यस्पर्शः ।
२- ओ३म् नसोर्मे प्राणा स्तु इत्यनेन नासारन्ध्रस्पर्शः ।
३- ओ ३ म् अक्ष्णोर्मे चक्षुरस्तु इत्यनेन नेत्रस्पर्शः ।
४- ओ ३ म कर्णयोर्मे श्रोत्रमस्तु इत्यनया ऋचा श्रुतिस्पर्शः ।
५- ओ३म बाह्वोर्मे बलमस्तु इत्यनेन सव्यदक्षिणबाहुस्पर्शः ।
६- ओ३म ऊर्वोर्मे ओजोऽस्तु इत्यनेन ऊरुद्वयस्पर्शः ।

ओ३म अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु इत्यनेन मन्त्रेण सव्येतरहस्तस्पृष्टवारिणा मार्जनविधिं सम्पादयेत् ।

- ततो मधुपर्केण समन्त्रकं० सर्वेषामर्चनं कुर्यात् ।

तत्रादौ ईशस्तुतिप्रार्थनोपासना:

( ओ३म्[१] ) विश्वानि देव सवितर्दुरितानि परा सुव ।
यद् भद्रन्तन्न आ सुव।( यजु०३०।३)।

हिरण्यगर्भ: समवर्त्तताग्रे भूतस्य जात: पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ।।
( तै०सं० ४।१।८।१३, यजु: १३।४)।

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवा:।
यस्य छायामृतं यस्य मृत्यु: कस्मै देवाय हविषा विधेम ।।
(तै०सं० ४।१।८।१५, यजु:२५।१३)।

य: प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशेऽस्य द्विपदश्चतुष्पद: कस्मै देवाय हविषा विधेम ।।
( तै०सं० ४।१।८।१४, यजु: २३।३)।

येन द्यौरुग्रा पृथिवी च दृढ़ा येन स्व स्तभितं येन नाक: ।
योऽन्तरिक्षे रजसो विमान: कस्मै देवाय हविषा विधेम ।।
( तै०सं० ४।१।८।१८, यजु: ३२।६)।

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ।।
( ऋ० १०।१२१।१०)।

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ।।
( यजु: ३२।१०)।

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ।।
( यजु:० ४०।१६)।

अथस्वस्तिवाचनम्

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ।।( १।१।१ ऋ० )

१ ओ३मिति सर्वेषु मन्त्रेषु विधिवद् योज्यम् ।

स नः पितेव सूनवेऽग्ने सूपायनो भव।
सचस्वा नः स्वस्तये ।। ( ऋ० १।१।९)
स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति ~~[illegible]~~ द्यावापृथिवी सुचेतना ।।
स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ।।
विश्वेदेवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निःस्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ।।
स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ।।
स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव ।
पुनर्ददताघ्नता जानता सं गमेमहि ।।
( ऋ० ५।५१। ११-१५)।
ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ।।
( ऋ० ७।३५।१५)।
येभ्यो माता मधुमत् पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान् वृषभरान्त्स्वप्नसस्तां आदित्यां अनु मदास्वस्तये ।
नृचक्षसो अनिमिषन्तो अर्हणा बृहद् देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ।।
सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
तां आ विवास नमसा सुवृक्तिभिर्महो आदित्यां अदितिं स्वस्तये ।।
को वःस्तोमं राधति यं जुजोषथ विश्वेदेवासो मनुषो यति ष्ठन ।
को वो ध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ।।
यो यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः ।
त आदित्या अभयं शर्म यच्छत सुगा न कर्त सुपथा स्वस्तये ।।
य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।
ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ।।

भरेष्विन्द्रं सुहवं हवामहें होमुचं सुकृतं दैव्यं जनम् ।
अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुत:स्वस्तये ।।
सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ।।
विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिह्रुत: ।
सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ।।
अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायत: ।
आरे देवा द्वेषो अस्मद् युयोतनोरु ण: शर्म यच्छता स्वस्तये ।।
अरिष्ट: स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।
यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ।।
यं देवासो अवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।
प्रातर्यावाणं रथमिन्द्र सानसिमरिष्यन्तमा रुहेमा स्वस्तये ।।
स्वस्ति न पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।
स्वस्ति न: पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ।
स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ।।

( ऋ० १०।६३।९-१४)।

अदान्यान्त्सोमपान् मन्यमानो यज्ञस्य विद्वान्त्समये न धीर:।
यदेनश्चकृवान् बद्ध एष तं विश्वकर्मन् प्र मुञ्चा स्वस्तये ।।

(अथर्व० २।३५।३)।

इषे त्वोर्जे त्वा वायव स्थ देवो व: सविता प्रार्पयतु श्रेष्ठतमाय
कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा
मा व स्तेन ईशत माघशंसो ध्रुवा अस्मिन् गोपतौ स्यात
बह्वीर्यजमानस्य पशून् पाहि ।। ( यजु: १।१)।
अश्वावतीर्गोमतीर्न उषासो वीरवती: सदमुच्छन्तु भद्रा: ।
घृतं दुहाना विश्वत: प्रपीता यूयं पात स्वस्तिभि:सदा न ,,( अथर्व० ३।१६।७)।

स्वस्ति न इन्द्रो वृद्धश्रवा: स्वस्ति न: पूषा विश्ववेदा: ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमि: स्वस्ति नो बृहस्पतिर्दधातु ।।
( मैत्रा०सं० ४।६।२७)।
आ नो भद्रा : क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिद: ।
देवा नो यथा सदमिद् वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ।।
देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निवर्तताम् ।
देवानां सख्यमुपसेदिमा वयं देवा न आयु: प्रतिरन्तु जीवसे ।।
तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्ध: स्वस्तये ।।
भद्रं कर्णेभि: श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा:।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायु: ।।
( यजु: २५।१४-१५,१८,२१)।
वैश्वानरो न ऊतय आ प्र यातु परावत:।
अग्निर्न: सुष्टुतीरुप:।।(अथर्व ६।३५।१)।।
आपो अस्मान् मातर: सूदयन्तु घृतेन नो घृतप्व: पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्य: शुचिरा पूत एमि ।।
( अथर्व०६।५१।२)।
ये त्रिषप्ता: परियन्ति विश्वा रूपाणि बिभ्रत: ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ।।
(अथर्व० १।१।१)।
उत पुत्र: पितरं क्षत्रमीडे ज्येष्ठमर्यादमह्वयन्त्स्वस्तये ।
दर्शन् नु ता वरुण यास्ते विष्ठा आवर्व्रतत: कृणवो वपूंषि ।।
( अथर्व०५।१।८) ।
स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
यत् सीमहि दिविजात प्रशस्तं तदस्मासु द्रविणं धेहि चित्रम् ।।
( तै०सं० ४।३।१३।६)।

विश्वेदेवा: शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ।।
( तैं०सं० २।४।१४।१७)।

स न: पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा न: स्वस्तये ।। तैं०सं० १।५।६।७ ।।

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्र: ।।
( तैं०सं० १।७।१ २।१६)।

महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।

अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुत:स्वस्तये ।।
( तैं० सं० २।१।११।५)।

वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या।
पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभि: सदा न:।।
तैं०सं० ३।४।१०।२ ।।

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभि: सदा न:।।
( तैं०सं० २।२।१ ।१७)।।

अथ धर्म:

अग्रवर्ग: प्रथमजो विकल्प: श्रोत्रियस्य । ततो होताध्वर्युश्च वेदोक्तं शान्त्यर्थं पठति -----

अथ शान्तिपाठ:

शं न इन्द्राग्नी भवतामवोभि: शं न इन्द्रावरुणारातहव्या ।
शमिन्द्रासोमा सुविताय शं यो: शं न इन्द्रापूषणा वाजसातौ ।।
शं नो भग: शमु न: शंसो अस्तु शं न: पुरन्धि: शमु सन्तु राय: ।
शं न: सत्यस्य सुयमस्य शंस: शं नो अर्यमा पुरुजातो अस्तु ।।

शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः ।
शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ।।
शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् ।
शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः।।
शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु ।
शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ।।
शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः।
शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ।।
शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः।
शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः।।
शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रःप्रदिशो भवन्तु ।
शं नः  पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः।।
शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः।।
शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः।।
शं नो देवा विश्वेदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः।।
शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः।
शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ।।
शं नो अज एकपाद देवो अस्तु शं नो अहिर्बुध्न्यः शं समुद्रः ।
शं नो अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ।।

( ऋ०७।३५।१-१३)।

अभयं मित्रावरुणाविहास्तु नो र्चिषात्त्रिणो नुदतं प्रतीचः ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त मिथो विघ्नाना उपयान्तु मृत्युम् ।।

( अथर्व०६।३२।३ )।।

यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ।
दूरङ्गमञ्ज्योतिषां ज्योतिरेकन्तन्मे मनः शिवसंकल्पमस्तु ।।
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसंकल्पमस्तु ।।
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ।।
येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ।।
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः।
यस्मिंश्चित्तं सर्वमोतम्प्रजानान्तन्मे मनः शिवसंकल्पमस्तु ।।
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते भीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठन्तन्मे मनः शिवसंकल्पमस्तु ।।
( यजु: ३४।१-६)।

स नः पवस्व शं गवे शं जनाय शमर्वते ।
शं राजन्नोषधीभ्यः ।। ( साम०उ० १।३)।
ब्रह्मा मुरारि त्रिपुरान्तकारिभानुः शशीभूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शान्तिकराः भवन्तु ।।

इन्द्रो विश्वस्य राजति ।
शन्नो अस्तु द्विपदे शं चतुष्पदे ।।
शन्नो वातः पवतांशन्नस्तपतु सूर्यः।
शन्नः कनिक्रदद्देवः पर्जन्यो अभि वर्षतु ।।
अहानि शम्भवन्तु नः शं रात्रीः प्रति धीयताम् ।
शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या ।
शन्न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ।।
शन्नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभिस्रवन्तु नः ।।
द्यौः शान्तिरन्तरिक्षं शान्तिःपृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः।

वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः
सा मा शान्तिरेधि ।। ( यजुः ३६।८,१०,११,-१२,१७)।
पश्येम शरदः शतं, जीवेम शरदः शतम् ।
शृणुयाम शरदः शतं प्रब्रवामशरदः शतम् ।
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।।
अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे ।
अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ।।
अभयं मित्रादभयममित्रादभयं ज्ञातादभयं परोक्षात् ।
अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ।।
(।अथर्व०१९।१५।५-६)।
हिरण्यवर्णाः शुचयः पावकाः यासु जातः कश्यपो यास्विन्द्रः।
अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु ।।
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन्जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ।।
(तै०ब्रा० ५।६।१।१-२)।
ये ते पंथान् सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
ये ते पन्था अधो दिवो येभिर्विश्वमैरयः ।
ये ते शंपन्ना बहवो देवयानाः पन्थानो राजन् ॰ दिव आचरन्ति ।
तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे ।।
( तै०ब्रा० २।३।१४।२०)।
वास्तोष्पते प्रति जानीह्यस्मानत्स्वावेशो अनमीवो भवा नः।
यत् त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदेशं चतुष्पदे ।।
( तब्रा० ३।४।१०।१ )
अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ।।
( तै०ब्रा० १ ।२।१४।१२)।
ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितं नो अस्तु ।
तेषामृतूनां शतशारदानां निवात एषामभये स्याम ।।
इद्वत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः।
तेषां वयं सुमतौ यज्ञियानां ज्योगजीता अहताःस्याम ।।

भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा ।
स नो मयोभूः पितो आ विशस्व शं तोकाय तनुवे स्योनः ।।

( तै०सं० ५।७।२।६-११)।

## भूमिपूजनम्

वैश्वकर्मणीयागं चिकीर्षुरादौ भूमिं पूजयेत्। तद्यथा --- कर्ता सपत्नीको गुरुविप्रदैवज्ञशिल्पिसमेतः पूजासामग्रीमादाय ज्योतिर्विदादिष्टे शुभे मुहूर्ते पूर्वाह्णे, पूतवायुदेशे, समपवित्रभूमौ गत्वा, गुर्वनुज्ञातः कुशहस्तः कुशेषूपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा अमुकगोत्रो मुकप्रवरान्वितो मुकशर्मा सपत्नीकोऽहं करिष्यमाण वैश्वकर्मणयागोपयोगिप्राच्यादिदिक्साधनपूर्वकशालायतनादिनिर्मातुं तदङ्गतया विहितानि स्वस्तिवाचनभूमिकूर्मानन्तवराहविश्वकर्मपुरोहितदैवज्ञपूजनानि करिष्ये ।

तत्रादौ निर्विघ्नसिद्ध्यर्थं शास्त्रोक्तविधिना गणपतिगौरीपूजनस्वस्तिवाचने विधाय अक्षतपुञ्जे भूमिकूर्मानन्तवराहान् पूजयेत् । यष्टि कुहस्तपरिमिते काष्ठे गज इत्याख्ये विश्वकर्माणं पूजयेत् ।

आदौ भूमेः ---

चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम् ।
प्रसन्नवदनां कञ्जूलशङ्खादिधारिणीम् ।। इति ध्यानम् ।
आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ।
लोकदचासि पृथिवि कश्यपेनाभिवन्दिते ।।

इत्यावाहनम् ।

स्योनेति पूजनम् ---

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः ।।

( शु०यजु०सं० ३६।१३)।

पूजान्ते --

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
दंष्ट्राग्रोल्लिखिता देवि ! वराहार्थं प्रणमाम्यहम् ।। इति प्रणमेत् ।
ततो दधिदूर्वाबिल्वफलपञ्चरत्नयुतं जलं ताम्रादिपात्रे निधाय

अर्घं दद्यात् -----

ब्रह्मणा निर्मिते देवि विष्णुना शंकरेण च ।
पार्वत्या चैव गायत्र्या स्कन्देन वरुणेन च ।।
यत्नेन पूजिते देवि सर्वस्य विनिर्मिणया ।
सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिते ।।
गृहाणार्घं मया दत्तं प्रसन्ना शुभदा भव ।
भूम्यै: नम: इदमर्घं समर्पयामि ।
ततो गन्धपुष्पाक्षतफलाद्यै: धूपै: सदीपैर्युक्तं महाबलिं दद्यात्---

ॐ भूरसि भूमिरस्यादितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीं यच्छ पृथिवीं दृंह० ह पृथिवीम्माहिंसी० ती ।।

( शु०यजु०अ० १३।१८)।

उपचारमिमं तुभ्यं ददामि परमेश्वरि ।
भक्त्या गृहाण देवेशि त्वामहं शरणं गत: ।।
तत: कूर्मानन्तवराह विश्वकर्मपूजनं नाममन्त्रेण कुर्यात् । ततो दैवज्ञ-
पुरोहितपूजनं ताभ्यां गोदानञ्च। शिल्पिनं सन्तोष्य भूयसीं संकल्प्य विप्रान्
भोजयेत् ।।

।। इति भूमिपूजनम् ।।

अथ विहारनिर्माणम्
-------------------

भूमिपूजनानन्तरं तत्र समे देशे विहारं रचयेत् सौमित्रया रीत्या या
एवमुच्यते -----

इत:परं तु सौमित्रया वेदमानि मयोच्यते ।
त्रिपद: प्रक्रमस्तत्र पदं तु त्रिविधं मतम् ।।

तिर्यक्पङ्क्तिकरज्ज्वाख्यं तद्धि यथायथम् ।
अरत्निना यदामानं सर्वत्र क्रमणे हि ।।
पृष्ठ्यां विधायापरेऽन्तो विमितं चतुरस्रकम् ।
दश द्वादश वा दैर्घ्ये विस्तारे स्युररत्नयः ।।
शाला वा दशविस्तारा दैर्घ्ये च द्विगुणा मता ।
तस्यानुदग्दिग्द्वाराणि त्रीणि स्युर्द्विकराणि हि ।।
तस्मात्प्रत्यग्बहिस्तात्पञ्चारत्निमितं मितम्।
तथैवोदक्तस्यास्तन्मध्ये गर्तश्च करसम्मितः ।।
तयोस्तु द्वारमेकैकं प्रागुदग्वा यथारुचि:।
विहार: प्राकृतस्तस्मिन्निवेशेणस्त्वधुनोच्यते ।।
पूर्वद्वारमध्यतःपश्चात्प्रक्रमद्वितये भवेत् ।
मध्य आहवनीयस्य पश्चात्सप्तान्तरे पुनः ।।
मध्यः स्याद् गार्हपत्यस्य, शेषं प्राकृतमीरितम् ।
तन्मध्ययोरुदक्शङ्कू स्यातां सार्धकरद्वये ।।
तौ मध्यौ तयोस्तौ च वेदाग्रौ करसम्मितौ ।
पात्याद्दक्षिणतः प्रान्तो वर उच्छिष्टसंज्ञकः ।।
दक्षिणाग्रवणोऽध्वग्रः सर्वेऽपि द्व्यङ्गुलोच्छ्रिताः ।
पूर्वद्वारमध्यतः शङ्कु पुरस्तात्प्रक्रमत्रये ।।
सोऽन्तः पात्यो महावेदेः पश्चिमप्रान्त इष्यते ।
तस्मादुभयतः श्रोणी त्रिप्रक्रमसम्मिते ।।
वा षट्सप्तदशेषु स्तो वेदेः प्रशस्त्यमिच्छतः ।
अन्तः पात्यात्पुरः शङ्कुः षट्त्रिंशत्प्रक्रमेषु तु ।।
तस्मादुभयतः स्यातां द्वादशप्रक्रमेंऽसकौ ।
अन्तः पात्यात्पुरः सार्धप्रक्रमे सदसोऽवधिः ।।
तस्मादुभयतः श्रोणी नवारत्नौ ततः पुरः ।
नवारत्नौ ततस्तद्वंसौ द्वारद्वयं भवेत् ।।
पात्यात् षट्सु प्रक्रमेषु पुरः शङ्कुस्ततः पुनः ।
एकविंशत्यङ्गुलेषु शङ्कुस्तद्दक्षिणोत्तरा ।।

पृष्ठ्या, तस्यां धिष्णिया: स्यु:, शङ्कोर्दक्षिणतो भवेत् ।
मध्य: शास्तुस्तु धिष्ण्यस्य अरत्नौ नवाङ्गुले ।।
अष्टत्रिंशदङ्गुले तस्मादेवं शंकुचतुष्टयम् ।।
एते मध्या धिष्णियानां, विस्तारोऽष्टादशाङ्गुल: ।
वेदाङ्गुलोच्चा वेदाग्रा: अष्ट धिष्ण्या:तदसि स्मृता: ।
शङ्कौ प्रक्रमषाटकस्थादक्षिणातु करत्रये ।
भवेदौदुम्बरीगर्त: प्रक्रमो हि महानयम् ।।
अष्टत्रिंशत्प्रक्रमे शङ्कौ मध्यौ यूपावटस्य तु ।
तस्मात्पश्चात्पदे शङ्कु: पञ्चारत्नौ पुनस्तथा ।।
शंकोरुभयतो वेदिश्रोण्यंसा: पदपञ्चके ।
तर्वत: सा दशपदा स्यादुच्चा चतुरङ्गुला ।।
चतुर्विंशत्यङ्गुला वा ऽथवा अष्टत्रिंशदङ्गुला ।
तत्पश्चात्त्रिप्रक्रमान्ते शङ्कुर्दक्षु चापर: ।।
तयो: शंक्वोरुभयत: श्रोण्यंसौ दशभि:पद: ।
पूर्वपश्चिमदिग्द्वारं हविर्धानं कटैर्वृतम् ।।
दशप्रक्रमदघनं तच्चतुरस्रं समन्तत: ।
तस्मिन्दक्षिणपूर्वार्धमध्यमच्यं करात्मकम् ।।
वेदाग्रमत्रिषु छिद्राण्यर्कव्यासानि चादन्या ।
तं भिवाद् वेद्युपरवा:, सम्यक् चेत्पूर्वयोर्न हि ।।
खरस्तदग्रे वेदाग्र: पात्रार्थोरत्निसम्मित: ।
हविर्धानोत्तरश्रोणेरुदक् प्रक्रमचतुष्टये ।।
शङ्कु, सोऽग्नीन्मण्डपस्य स्तम्भो नैर्ऋत्यधिष्ठित: ।
पञ्चारत्निर्मण्डप: स्यान्मध्ये कुण्डं तु धिष्ण्यवत् ।।
मार्जालीयं पश्चिमेवमेव दक्षिणश्रोणितो भवेत् ।
तन्मध्ये धिष्ण्यवद्वेदि: प्रान्ते उच्छिष्टवत्खर: ।।
ऐन्द्रीयाम्नोत्तरस्मिन् द्वादयं दक्षिण इत्युत ।
महावेदेरुत्तरांसादुदक् स्यात्त्रिंशदङ्गुले ।।

शंकुस्तस्मात्पुन: पश्चाच्छङ्कु: स्यात्त्रिष्वरत्निषु ।
मध्यश्चात्वालगर्तस्य च स्याद् द्वात्रिंशदंगुले ।।
तदुत्तरेण शामित्रं यथायोगं तु तन्मिति: ।
वेदे: सातत्र्यङ्गुल: स्यात्पृष्ठ्या भूमिसमा मता ।।
यूपावटास्त्रत्यगर्धप्रक्रमेषूत्तराननौ ।
प्रादेशव्यासो गर्त: स्यादुत्करो यज्ञिये क्रतौ ।।
इति प्रक्रममानेनेरिता वेदिस्तु सौमिकी ।
अथैतदुपयोगिन्या: प्राकृत्या मानमुच्यते ।।
पृष्ठ्यायामधिकव्यासवृत्तं नवस्य कल्पयेत् ।
तन्मध्यादुत्तरप्राकोन्यमप्रक्रमेष्वथ ।।
हस्तमात्राच्चमध्य: प्रक्रमो द्वादशाङ्गुल: ।
कुण्डमध्यान्तरालांशु सत्वषष्ठं भवेत्त्रिधा ।।
नियम्यान्तौ मध्यशंकोर्विस्तैकं दक्षिणा नयेत् ।
स मध्यस्तदुदङ्० नन्दाङ्गुले वृत्तं प्रकल्पयेत् ।।
सपादाष्टत्रिव्यासं तद्दक्षिणं धनुराकृति: ।
वेदाग्रमध्यात्पूर्वस्मात्परस्माद्वापि शंकुत: ।।
पश्चाद्वेदिस्त्र्यरत्निस्तच्छ्रोणी उभयतस्तत: ।
करद्वयमिते अंसौ सार्धहस्तौ तथा पुर: ।।
श्रोणित: पार्श्वयोर्मध्यौ सार्धात्रिंशदङ्गुले ।
पञ्चचत्वारिंशद्यासार्धयो: संग्रहयोर्मतौ ।
सभ्यावसथ्ययो: कुण्डे वृत्ते च नवसम्मिते ।
वृत्तवेदाग्रयोश्चोदग् यथा सम्भवमीरिते ।।
उदगंसात्पश्चिमेनोत्करो गर्त: षडंगुल: ।
अकोष्ठिताश्चतुष्पार्श्वा मेखला: कुण्डसन्निभा: ।।
वेद्या: सातस्त्र्यङ्गुलादिरखातौ सङ्ग्रहौ मतौ ।
वेद्यां सर्वौ बहि: सर्वौ बहिरन्तश्च भागत: ।।
त्रिविधो स्त्याहवनीयो वेदि: सर्वत्र तावती ।
वेदाग्र आहवनीयो, वृत्तार्धं दक्षिणस्य च ।
त्रीणि कुण्डानी[illegible] वृत्त[illegible]गुल[illegible] ।

प्राकृतस्य विहारस्य विशेषैर्भोकल्पना ।।
एवं विहारं सम्पाद्य यज्वा यष्टुं समारभेत् इति ।

अथ यूपच्छेदनम्

पूर्णाहुतिवत्स्रुचि स्रुव्याज्यं गार्हपत्ये विश्रित्य स्रुक्स्रुवं च सम्पज्योदास्यो-त्पूयावेक्ष्य चतुर्गृहीतं गृहीत्वा समित्पूर्वकमाहवनीये यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण चोरुविष्णाविति ।
ॐ उरुविष्णो विक्रमस्वोरुक्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्र प्र यज्ञपतिन्तिर स्वाहा ।।( यजुर्वे० ५।४१)।
इदं विष्णवे न मम
शेषमाज्यमादाय यूपमुपगच्छति सतरा ।
ॐ अत्यन्याँ अगान्नान्याँ उपागामर्वाक् त्वा परेभ्यो विदम्परो वरेभ्यः।
तन्त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्ताम् ।।
( यजुर्वे०५।४२)।।
उक्त्वा ऋक् पठित्वा छेदनप्रदेशे स्रुवेणोपस्पृशेत् ---
ॐ विष्णवे त्वा ( ५।४२) उपस्पृशामि ' इत्येनं मन्त्रं जपन्।
ओषध इति कुशतरुणं तिरस्कृत्य ' ॐ ओषधे त्रायस्व ' ( ५।४२)।
स्वधित इति परशुना प्रहरति ' ॐ स्वधिते मनᳫँ० हिᳫँ० सीः ( ५।४२)।
प्रथमशकलं निधाति। अनक्षास्तम्भं वृश्चति । एकाङ्ग । द्यां मालेखीरिति पतन्तमभिमन्त्रयते -----
' ॐ द्याम्मालेखीरन्तरिक्षं माहिᳫँ० सीः। पृथिव्या सम्भव । ' न दक्षिणा पतेत् ।
अयᳫँ० हि त्वेति शोधनमभिमंत्रणशेषो वा विशेषोपदेशात् --
ॐ अयᳫँ० हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ।। (५।४३)।
अतस्त्वमित्यावृश्चने जुहोति यूपे वा तत्संस्कारात् स्थाणौ शुक्लेश्च ।
' ॐ अतस्त्वं देव वनस्पते शतवल्शो विरोह स हस्रवल्शा वियᳫँ० रुहेम ( ५।४३) स्वाहा ' । इदं वनस्पतये न मम ।

परिवास्याच्छेदनं पुनः। द्व्यरत्निश्चतुररत्निर्वा । एकारत्निप्रभृतीनेके ।
अष्टाश्रिं करोत्युपरवर्जम् । मूलात्स्वरुनिष्पादनम् । अग्रात्चषालं पृथुमात्रमष्टाश्रिमध्यसंगृहीतमूर्ध्वमग्रे प्रतिमुञ्चति द्व्यङ्गुलं त्र्यङ्गुलं वा तद्‌भागतिक्रान्तं यूपस्य पञ्चारत्निः पञ्चदश पर्यन्तः सोमे दशाष्टचतुर्दशवर्जमपरिमितो वा सप्तदश वाजपेये ।
एकविंशतिरश्वमेधे यथाकार्यं स्थविमा ।।

।। इति यूपच्छेदनम् ।।

अथाग्निमन्थनम्

"ॐ अग्नेर्जनित्रमसि" ( ५।२) इति पठित्वा अरणी आदायतयोः अधरारणिं "ॐ उर्वश्यसीति" पठित्वाऽऊर्ध्वारणिम् "ॐ पुरूरवा असी"ति ( ५।२) उक्त्वा तत्प्रभावेन अग्नये मथ्यमानायानुवाचयति ----

"ॐ अग्नये मथ्यमानाय अनुब्रू ३ हि ।

प्रथमायां त्रिरनूक्तायां मन्थति गायत्रेणेति प्रतिमंत्रं त्रिः प्रदक्षिणम् ।"
( ५।२।२)।

"ॐ गायत्रेण त्वा छन्दसा मन्थामि,
ॐ त्रैष्टुभेन त्वा छन्दसा ~~मन्थामि~~ , मन्थामि ,
ॐ जागतेन त्वा छन्दसा मन्थामि" ( ५।२)।
जाते जातवेदेति।

सोमपरिचरणम् ।

न साक्षात्स्पर्शः। पुनरप उपस्पृश्य उद्गातारः प्रस्तरस्योपरि दक्षिणएन पाणिमुत्तानान्कृत्वा सव्यान्नीचैः कृत्वा निन्हुवीरन् ।
प्रवर्ग्योत्सादनानन्तरं प्रतिप्रस्थाता स्फ्येन लिखत्यावेदिश्रोणेः उत्तरवेदेर्वा।

अथोत्तरवेदिप्रोक्षणम् ।

उत्तरवेदिं प्राप्य अग्निमग्नीध्रे प्रदाय तद्दक्षिणतस्तिष्ठन्नुदङ्मुख उत्तरवेदिं प्रोक्षतीन्द्रघोषेण इति प्रतिमन्त्रं प्रतिदिशं यथालिंगम् ।
"ॐ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु ।
ॐ प्रचेतास्त्वा रुद्रैः पश्चात्पातु ।

ॐ मनोजवास्त्वा पितृभिर्दक्षिणतः पातु ।
ॐ विश्वकर्मा त्वादित्यैरुत्तरतः पातु । ( ५।११ )।।

## अथ हविर्धानप्रवर्तनम्

हविर्धाने शालाद्वारे प्रागाल्य उपवेषा: पुरस्तात् संस्थापिते तयोर्मध्यदध्वर्युः प्रतिप्रस्थाता धुरुशकटं गृहीत्वा, विहारं शालां च दक्षिणेनाध्वर्युं प्रतिप्रस्थाता चोत्तरेण विहारं शालां पश्चिमत आगत्य शकटयोर्मुखे सन्धाय आत्मानमभितो वृत्य तथैव प्रत्यावृत्य यथागतं शालापूर्वभागे वेदिमध्ये पृष्ठ्याम् उभयतो ह्यरत्न्यन्तरे स्थापयतः ।

ब्रह्मा शालाद्वारस्य दक्षिणतस्तूष्णीमास्ते ।
ॐ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ।।
इदं सवित्रे न मम । यजु०५।१४)।

इत्युक्त्वाध्वर्युर्गार्हपत्ये पूर्णाहुतिवदाज्यꣳ संस्कृत्य चतुर्गृहीतं गृहीत्वा शालाद्वार्ये समित्पूर्वकं जुहोति ।

पुनः तथैवपूर्वया द्वारा निष्क्रम्य अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोति ---( समिदर्जं तदेषाम् )
ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाꣳसुरे स्वाहा ।। इदं विष्णवे न मम । ( यजुः ५।१५)।

तदानीं ब्रह्मा दक्षिणशकटस्य दक्षिणत आस्ते ।

अध्वर्युणा दक्षिणद्वारेणानीता पत्नी पाणिभ्यां शम्यं प्रतिगृह्याक्ष-धुरावनक्ति दक्षिणेनहस्तेनोत्तानेनोभयत्रोदक्संस्थं पराग्देवश्रुताविति ।
ॐ देवश्रुतौ देवेष्वा घोषतम् ( ५।१७)।।

अनेनैव वचनेन दक्षिणां धुरमङ्क्त्वा सव्यहस्ते वस्थितमाज्यं दक्षिणहस्ते कृत्वोत्तरामनक्ति ।

ॐ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा।
इदं विष्णवे न मम ।। ( ५।१६)।।

इत्यनेन वचनेन प्रतिप्रस्थाता प्रकस्थाल्यौ प्रतिगृह्य अपि च पूर्वेद्युः चतुर्गृहीतं गृहीत्वा उत्तरस्य दक्षिणे वर्त्मनि हिरण्यं निधाय जुहुयात् ।

प्रतिप्रस्थाता नीयमाना दक्षिणद्वारेण शालां प्रविश्य पत्नी चापरेणाग्नीन्परीत्य पूर्वद्वारेण निष्क्रम्य उत्तरस्यानक्ति ।

अध्वर्युर्हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति।

ॐ हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि ।

" ॐ प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् "

(५।१७) इति ब्रूहीति वाचयति त्रिरुक्तं यजमानं स च तां पठति ।

स्वङ्गोष्ठमिति वदति ---

ॐ स्वङ्गोष्ठमा वदतन्देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजाम्मा निर्वादिष्टम् ।( ५।१७) । इति ब्रूहि ।

यजमानश्च पठति ।

## अथ हविर्धाननिर्माणम्

हविर्धानाख्यं दशहस्तं पूर्वपश्चिमद्वारं छदिस्त्र्यं च , हविर्धानमण्डपाग्नेयकोणे स्थूणामुपनिहन्ति ---

" ॐ विष्णवे त्वा उपनिहन्मि " ( ५।१८) । इति पठित्वा।

एतामेव वाचयन् अध्वर्यु: मण्डपस्य उत्तरतो हविर्धानयो: पश्चिमेन गत्वा ईशानकोणे स्थूणां निहन्ति । तत: पश्चात् कोणयो: क्रमेण तथैव तूष्णीम् ।

## कपालोपधानम्

गार्हपत्यस्य पश्चात् प्रक्षालिताष्टकपालानि दक्षिणत: एकादशोत्तरत: आसादयित्वा गार्हपत्यमग्निं मन्त्रैरादाय धृष्टिम् । दक्षिणतोऽङ्गारं निरस्य अन्यमङ्गारं कपालोपधानस्थाने निधाय तदुपरि मध्यमं कपालं स्थापयेत् । तदुपर्यङ्गारं निधाय तत्पुरस्तात् द्वितीयं, पश्चात् तृतीयं, दक्षिणतश्चतुर्थम्, तत्पुरस्तात् पञ्चमं षष्ठञ्च पश्चात् न्यसेत् । मध्यमस्योत्तरतो द्वे संस्पृष्टे पश्चात्सप्तमम् ।

तत्पुरस्तादष्टमं कपालं न्यसेत् । नवमकौ न्यास एतेषां कपालानाम्। ततो इन्गारैः कपालानि आच्छाद अभिमन्त्रयेत् ।

एकादशकपालेषु नवमादीनि त्रीणि वायव्यत आरभ्योत्तरतः प्राक् संस्थानि पृथगापादयेत् ।

## पुरोडाशकरणम्

अध्वर्युः गार्हपत्ये पात्रीं मदन्तीं चाधिश्रित्य पात्र्यां सव्यं तिरःपवित्रं धृत्वा वाचं यमः कृष्णाजिनात् पिष्टानि संवपेत् । अधिवपनमन्त्रोहः। शुद्धौ आहराप अनाय इति प्रेषेत् । आग्नीध्रः स्रुवेण जलं गृहीत्वा पात्रान्तरे निधाय वेदं पाणिं चाधः कृत्वा स्वं मदन्तीं यस्तस्मिन् प्रक्षिप्य आनीयमानोऽध्वर्युः अनुमन्त्रयेत् । ता आपस्तूष्णीं पिष्टेष्वानीय पात्रीमधः कृत्वा मदन्ती जलेन पिष्टानि आप्लाव्य मेक्षणेनमिश्रयेत् । देवतासंख्यानुसारं तत्तन्नाम्ना पृथग्भागान् कृत्वा मिमृशेत् ।

आकृतिः --

अश्वशफमात्रं पुरोडाशं कूर्माकारं कुर्यात् ।

पुरोडाशस्थापनम् ----

दक्षिणकपालेभ्योऽङ्गारान् प्रत्यूह्य तेषु प्रथमं पुरोडाशं स्थापयेत् सर्वाणि कपालानि च स्पृशेत् । इति श्रीकृष्णदेवो वैश्वदेवी संहितायाम् ।

## अग्न्याधानं समिदाधानञ्च

ओ३म् भूर्भुवःस्वः इति मन्त्रं पठित्वा पात्रे अनलं निधाय यद्वा घृतदीप-प्रज्वालितकर्पूरखण्डं लघुकाष्ठैः संयोज्य तत्पात्रं कश्चिद्यजमानो स्वस्वताहूभ्याम् उत्थाप्य ---- ॐ भूर्भुवः स्वः द्यौरिव भूम्ना पृथिवीव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ।।
इत्यनेन मन्त्रेण आदधत्

वेदिमध्ये स्वविधिना संस्थापिते अग्नौ काष्ठकर्पूरं निधाय---

उँ उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्ते संसृजेथामयं च ।

अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ।।

एतामृचां पठेत व्यजनेन चाग्निं प्रज्वालयेत् ।

समिधासु प्रविष्टे अग्नौ आम्रपलाशादीनाम् अष्टाङ्गुल प्रमाणस्य त्रीणि काष्ठानि घृतसिक्तानि एकैकेन मन्त्रेण तत्र जुहुयात् ---

१- उँ अयं त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्ध वर्धय चास्मान्
प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा ।
इदमग्नये जातवेदसे --- इदं न मम ।

२- उँ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
अस्मिन् हव्या जुहोतन स्वाहा ।
इदमग्नये --- इदं न मम ।

३- उँ सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन ।
अग्नये जातवेदसे स्वाहा ।
इदमग्नये जातवेदसे --- इदं न मम ।

उपर्युक्तप्रथममन्त्रेण एव पञ्चघृताहुतयो दद्यात्क्रमतेन ।

तदनन्तरं पूर्वादिषु दिक्षु अधोलिखितैः मन्त्रैः जलं प्रदद्यात् --

१- उँ अदितेऽनुमन्यस्व इति पठित्वा पूर्वदिशि ।

२- उँ अनुमतेऽनुमन्यस्व इति जपित्वा प्रतीच्यां दिशि ।

३- उँ सरस्वत्यनुमन्यस्व इत्युक्त्वा उत्तरदिशि ।

४- उँ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ।।

अनया ऋचा वेदिं परितः उदकं प्रदद्यात् ।

उँ अग्नये स्वाहा ।

इदमग्नये इदन्न मम ।

इति पठित्वा वेद्युत्तरभागीयाग्नौ घृताहुतिं दद्यात् ।

ॐ सोमाय स्वाहा ।

इदं सोमाय इदन्न मम ।।

अनेन दक्षिणदेशे ज्वलिताग्नौ आज्याहुतिं दद्यात् ।

१- ॐ प्रजापतये स्वाहा ।

इदं प्रजापतये - इदन्न मम ।।

२- ॐ इन्द्राय स्वाहा ।

इदमिन्द्राय - इदन्न मम ।

एताभ्यां द्वे आहुती वेदिमध्ये अर्पयेत् ।

सर्वत्र माङ्गलिकेषु कार्येषु अष्टाहुतय एतैः मन्त्रैः

दद्यात् ----

१- ॐ त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः ।

यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा ।।

इदमग्निवरुणाभ्यां --- इदन्न मम ।

२- ॐ स त्वन्नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।

अव यक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि स्वाहा ।।

इदमग्निवरुणाभ्याम् --- इदन्न मम ।

३- ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके स्वाहा ।

इदं वरुणाय--- इदन्न मम ।

४- ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।

अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषी स्वाहा ।

इदं वरुणाय- इदन्न मम ।

५- ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशाः वितता महान्तः।

तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काःस्वाहा ।

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः---

इदन्न मम ।।

६- ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयासि ।

अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा ।।

इदमग्नये अयसे --- इदन्न मम ।।

७- ॐ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ।।
इदं वरुणायादित्यायादितये च --- इदन्न मम ।
८- ॐ भव तन्नः समनसौ सचेतसावरेपसौ ।
मा यज्ञं हिंसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा ।।
इदं जातवेदोभ्यां ---- इदन्न मम ।

एतदनन्तरं विश्वकर्मणः सूक्तमन्त्रोच्चारपूर्वकम् आहुतयो दद्यात् ---

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवरां आ विवेश ।।
किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ।।
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ।।
किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद्भुवनानि धारयन् ।।
~~शिक्ष~~ या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ।।
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ।।
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ।।
।। ऋ०१०।८१।१-७ ।।
चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदन्ता अददृहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेताम् ।।
विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् पर एकमाहुः ।।

यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यन्त्यन्या ।।
त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ।।
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यन्त विश्वे ।।
तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ।।
न तं विदाथ य इमा जजाना न्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ।।

- ऋ० १०।८२।१-७।।

ये बध्यमानमनु दीध्याना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टानग्रे प्र मुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ।।

- अथर्व २।३४।३ ।।

यज्ञपतिमृषय एनसाहुर्निर्भक्तं प्रजा अनुतप्यमानम् ।
मथव्यान्त्स्तोकानप यान् रराध सं नष्टेभिः सृजतु विश्वकर्मा ।।
अदान्यान्त्सोमपान् मन्यमानो यज्ञस्य विद्वान्त्समये न धीरः ।
यदेनश्चकृवान् बद्ध एष त विश्वकर्मन् प्र मुञ्चा स्वस्तये ।।
घोरा ऋषयो नमो अस्त्वेभ्यश्चक्षुर्यदेषां मनसश्च सत्यम् ।
बृहस्पतये महिष द्युमन्नमो विश्वकर्मन् नमस्ते पाह्यस्मान् ।।

-अथर्व०२।३५।२-४ ।।

यस्य नेशे यज्ञपतिर्न यज्ञो नास्य दातेशे न प्रतिगृहीता ।
यो विश्वजिद् विश्वभृद् विश्वकर्मा घर्मं नो ब्रूत यतमश्चतुष्पाद् ।।

- अथर्व ४।११।५ ।।

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ।। - अथर्व०५।१२।६ ।।

त्वष्टा युनक्तु बहुधा नु रूपा अस्मिन् यज्ञे सुयुजः स्वाहा ।-अथर्व०५।२६।८ ।।
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा नो अत्र वरीयः कृणोत्वनु नो मार्ष्टु तन्वो यद् विरिष्टम् ।।अथर्व ६।५३।३।।
एतं भागं परि ददामि विद्वान् विश्वकर्मन् प्रथमजा ऋतस्य ।
अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं तरेम ।। अथर्व० ६।१२२।१।।
रोहितो यज्ञं व्यदधाद् विश्वकर्मणे तस्मात् तेजांस्युप मेमान्यागुः ।
वोचेयं ते नाभिं भुवनस्याधि मज्मनि ।। - अथर्व० १३।१।१४ ।।
विश्वकर्मा मा सप्तऋषिभिरुदीच्या दिशः पातु तस्मिन् क्रमे तस्मिन्छ्रये तां
पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा ।।
- अथर्व०१६।१७।७ ।।

स बोधि सूरिर्मघवा वसुपते वसुदावन् ।
युयोध्यस्मद् द्वेषांसि विश्वकर्मणे स्वाहा ।। - यजु० १२।४३ ।।

एतदनन्तरमेतैः मन्त्रैः आहुतीः दद्यात् ----
ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वन्तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ।
य इमा विश्वा विश्वकर्मा यो नः पिता अन्नपतेऽन्नस्य नो देहि ।। -यजुः३४।५८।।
अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ।।- यजुः ११।८३।।
एषा ते राजन् कन्या वधूर्निधूयतां यम ।
सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितुः ।। - अथर्व०१।१४।२)।
इन्द्रमहं वणिजं चोदयामि स न एतु पुर एता नो अस्तु ।
नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ।।- अथर्व०३।१४।१)।
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तन्वा ३ स्वा हि ते ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ।।
( साम० उ०प्र० ७ अ०प्र०३)।

अत्र चतु: संख्याका: व्याहृत्याहुती: दातव्या: एताभि: ऋग्भि: --

१- ॐ भूरग्नये स्वाहा ।

इदमग्नये --- इदन्न मम ।।

२- ॐ भुववायवे स्वाहा ।

इदं वायवे --- इदन्न मम ।

३- ॐ स्वरादित्याय स्वाहा ।

इदमादित्याय --- इदन्न मम ।।

४- ॐ भूर्भुव: स्वरग्निवाय्वादित्येभ्य: स्वाहा ।

इदमग्निवाय्वादित्येभ्य: --- इदन्न मम ।।

अथ मौनी भूय प्रजापतये आहुतिमेकां दद्यात् ----

ॐ प्रजापतये स्वाहा ।

इदं प्रजापतये -- इदं न मम ।

अधोलिखितं मन्त्रं पठित्वा स्विष्टकृतामेकामाहुतिं दद्यादनन्तरञ्च तिस्र आहुती: गायत्रीमन्त्रेण कुर्यात् ---

ॐ यदस्य कर्मणोऽत्यरीरिचं यद् वा न्यूनमिहाकरम् ।

अग्निष्टत्स्विष्टकृद्विद्यात्सर्वं स्विष्टं सुहुतं करोतु मे ।।

अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्न: कामान्त्समर्द्धय स्वाहा ।

इदमग्नये स्विष्टकृते इदं न मम ।

गायत्रीमन्त्र: ---

ॐ भूर्भुव: स्व: तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो न: प्रचोदयात् ।।

ॐ सर्वं वै पूर्णं स्वाहेत्युक्त्वा पूर्णाहुतिं सम्पादयेदिति ।

-------००-------

## विश्वकर्मण: श्रमदेवतात्त्वम्

### वास्तुशास्त्रेषु वास्तुकर्मवाचक: शिल्पशब्द: -

बुद्धिर्विज्ञानसंयुक्ता, बाहू च कर्मशोभितौ ।

यानसञ्चालकौ पादौ, सा सर्वश्रमदेवता ।।

वैदिककालादेव आरभ्य विश्वकर्मा श्रमदेवतास्ति । परं वास्तुशास्त्राणां रचनाकारै: सा देवता शिल्पिगुरुरूपेण स्मृता । ते च रचनाकारा: शिल्पशब्देन इष्टिकाप्रस्तरादिभि: निर्मितानि भवनमण्डपादीनि वाच्यानीति मन्यन्ते । तथा च ज्ञायते विश्वकर्मवास्तुशास्त्रेण --------

---- ------ ------

ग्रामाणाञ्च पुरीणां च लक्षणं बहुधा स्मृतम ।। १।३३।।

खेटकर्वतकादीनां दुर्गाणामपि लक्षणम् ।

प्रासादेषु च हर्म्येषु देवानां भूभुजामपि ।। ३४ ।।

विविधेष्वपि निर्माणेष्वपि सन्दृष्यकं बहु ।

भवने न्यायशालायां सभायां कोश सद्मनि ।। ३५।।

अन्त: पुरे शस्त्रगेहे शालासु विविधासु च ।

क्रीडागेहेषु रम्येषु तोरणादिषु मञ्चिके ।। ३६।।

अधिष्ठानोपपीठेषु गोपुरेषु तथा बहु ।

संकीर्णभवनाद्येषु पताकापारिभद्रके ।। ३७।।

चातुर्वर्ण्यगृहाणां च लक्षणं बहुधा स्मृतम् ।

वेदिका पोतिका सन्धिबन्धनावरणेषु च ।। ३८।।

स्तम्भादिके च निर्माणे विशिष्टभवनेषु च ।

मण्डपेषु विमानेषु प्राकारादिषु सम्मतम् ।। ३९।।
१

लक्षणं बहुधा प्रोक्तं नानादेशविभागश:।। ३९-- ।।
२

### शिल्पशब्देन सर्वाणि कला कर्माण्युच्यन्ते : ---

परमियं धारणा स्वविषयमधिकृत्य कृता प्रतीयते । तच्च नाशोभना । अन्यथा ' विश्वतश्चक्षुरुत, ' ' यो न: पिता जनिता विधाता' इत्येवं

वेदविदुं विश्वकर्माणं कोऽल्पमतिः मात्र अस्मोष्ठिकाकर्मनिपुण इति कथयित्वात्मानं दूषयिष्यति। तस्य रूपपिंशनकर्म अन्नतपाण कर्म च बहुधा उच्यते एव ऋग्भिः। पुराणेषु विस्तारेण श्रुतानि अस्य कर्माणि एनं देवं सर्वशिल्पकुशलं सिद्धयन्ति। शिल्पशब्देन सर्वाणि कलात्मकानि कर्माणि क्रियाणि च पठ्यन्तेन पुनः मात्र पदार्थघटितानि कर्माणि। तथा च श्रूयते कौषीतिकीये ब्राह्मणे ---

त्रिविधं शिल्पं नृत्यं गीतं वादित्रमिति (२९।५)।

## चित्रकलापि वाच्यते

चित्रकलापि शिल्पपदेन उक्ता भवतीति नग्नजित्प्रसङ्गेन अवगम्यते। ब्रह्मणादिष्टेन नग्नजिद्राज्ञा विश्वकर्मणः सुशिक्षिता चित्रकला। इयं कथा शतपथ-ब्राह्मणे, महाभारते, जैनसूत्रेषु च श्रूयते। शिल्पग्रन्थानां बहुषु अध्यायेषु चित्रकला अनिवार्यविषय एव वर्णिता मिलति। एतादृशेषु ग्रन्थेषु विश्वकर्मप्रकाशः, मयमतम्, मानसारः, चित्रसूत्रम्, चित्रलक्षणम्, समराङ्गणसूत्रधारः, कलाविलासः, मानसोल्लासः, शिल्पकलाप्रदीपिका च प्रमुखाः सन्ति। समराङ्गणसूत्रधारे चित्रकर्म प्रकरणं षडध्यायेषु विभक्तमस्ति। तथा हि---

चित्रोद्देश्यभूमिबन्धनौ,

लेप्यकर्म, अण्डकप्रमाणम्, मनोत्पत्तिः, रसदृष्टिलक्षणञ्च। मानसोल्लासेऽपि चित्रकर्मवर्णनं क्रमबद्धरीत्याप्राप्यते। यस्य रूपरेखा तत्र एवमस्ति ---

चित्रकारस्वरूपः, चित्रभित्तिः, लेखनीलेखनम्, शुद्धवर्णः, मिश्रवर्णः, चित्रवर्णः, पत्रासूत्रलक्षणम्, तालक्षणम्, तिर्यङ्मानलक्षणम्, सामान्य चित्रक्रिया च।

एवं वास्तुग्रन्थेषु चित्रकलावर्णनेन तस्याः शिल्प शब्देन वाच्यत्वं सिद्ध्यति। विश्वकर्मणो नानाकर्मनैपुण्यं वीक्ष्य इदं वक्तुं शक्यते यद् शिल्पशब्देन न केवलं सर्वाः कलाः एव वाच्याः भवन्ति अपितु सर्वे उद्योगाः अपि। तत्र कलानासंख्या साहित्येषु प्रायः चतुः षष्टिः उच्यते। परं जैनग्रन्थेषु इयं संख्या द्वादशोत्तर-षष्टिपर्यन्तं मता। महायानीये ललितविस्तरे कुमारः सिद्धार्थः एकोननवति कलासु प्रवीणतां प्रदर्शयति विवाहप्रसङ्गे। तासां नामानि एवं सन्ति---------

१- लङ्घिते

२- ग्राम्यालिपिमुद्रागणनासंख्यालम्भ - धनुर्वेदे ।

३- जविते

४- प्लविते

५- तरणे

६- इष्वस्त्रे

७- हस्तिग्रीवायाम्

८- रथे

९- धनुष्कलापे

१०- स्थैर्यस्थाम्नि

११- सुशौर्ये

१२- बाहुव्यायामे

१३- अङ्कुशग्रहे

१४- पाशग्रहे

१५- उद्याने

१६- निर्याणे

१७- अवयाने

१८- मुष्टिबन्धे

१९- पदबन्धे

२०- शिखाबन्धे

२१- छेद्ये

२२- भेद्ये

२३- दालने

२४- स्फालने

२५- चित्रे

२६- अक्षुण्णवेधित्वे

२७- मर्मवेधित्वे

२८- शब्दवेधित्वे

२९- रूपे

३०- प्रहारित्वे

३१- अक्षक्रीडायाम्

३२- व्याकरणे

३३- ग्रन्थे

३४- रूपकर्मणि

३५- धीते

३६- अग्निकर्मणि

३७- वाद्ये

३८- वीणायाम्

३९- नृत्ये

४०- गीते

४१- पठिते

४२- आख्याने

४३- हास्ये

४४- लास्ये

४५- नाट्ये

४६- विडम्बिते

४७- माल्यग्रथने

४८- संवाहिते

४९- मणिरागे

५०- वस्त्ररागे

५१- मायाकृते

५२- स्वप्नाध्यायी

५३- पुराणे

५४- शकुनिरुते

५५- स्त्री लक्षणे    ५६- पुरुषलक्षणे
५७- अश्वलक्षणे    ५८- हस्तिलक्षणे
५९- गो लक्षणे    ६०- अजलक्षणे
६१- निगमे    ६२- मित्रलक्षणे
६३- काँटमेश्वर लक्षणे    ६४- निर्घण्टे
६५- वेदे    ६६- इतिहासे
६७- निरुक्ते    ६८- शिक्षायाम्
६९- योगे    ७०- छन्दश्चित्यायाम्
७१- यज्ञकल्पे    ७२- ज्योतिषे
७३- सांख्ये    ७४- क्रियाकल्पे
७५- वैशेषिके    ७६- वैश्के
७७- आयुर्वे    ७८- अर्थविद्यायाम्
७९- बार्हस्पत्ये    ८०- आम्भिर्ये
८१- जलयन्त्रे    ८२- मृगपक्षिरुते
८३- हेतुविद्यायाम्    ८४- धूर्तकर्मणि
८५- पत्रछेदे    ८६- मधूच्छिष्टकृते
८७- विदलिकर्मणि    ८८- गन्धयुक्तौ    ८९- अश्वपृष्ठे
- ( १२।९-२१)।

<u>अनन्ता: विद्या: कलाश्च :</u> ----

प्रबन्धकोशे श्री राजशेखरोऽपि तासां संख्या द्वादशाधिकषष्टि एव स्वीकरोति। वस्तुत: कलानां विद्यानाञ्च संख्या अपरिमिताऽस्ति । कामन्दकनीतिसारेऽपि अनयो: अनन्तता स्वीकृता । एतयो: संख्याया: अनन्तता सहेतुकी अस्ति। रुचिक्रियाभेदा: कलाभेदान् जनयन्ति पदार्थविषयभेदाश्च विद्याभेदान् । तत्र संख्याया: दृष्ट्या कलाभेदा: विद्याभेदान् अतिक्रम्य वर्तन्ते । कस्यापि कर्मण: तत्साधिका पुरुषनिपुणा क्रियैव कला उच्यते । आद्योपान्तकृतकर्मक्रियाणां लिपिबद्धं श्रुतं वा ज्ञानं विद्येत्युच्यते । अत्र शिल्पेन ता एव विद्या:

उक्ता: भवन्ति यासां सम्बन्ध: अर्थकरीभि: क्रियाभि: सह भवति। तत्र अध्यात्म-विद्या: परित्यज्य प्राय: सर्वासां सम्बन्ध: अर्थै: साकमस्ति । इत्थं पौराणयुगे एव पूर्वमनीषिभि: तासाम् अनन्ता संख्येति भणितम् । अथ वैज्ञानिके युगे तु कलासंख्या परिधिं स्वीकर्तुं न उद्यता दृश्यते । विद्यानां संख्यापि निश्चित रूपेण वक्तुं न शक्यते ----

विद्यानामुपविद्यानां विषये मतैक्याभावे । अथ बहव: कला: विद्याश्च उद्योगरूपेषु तिष्ठन्ति । प्राचीनग्रन्थेषु पठिता: उद्योगा: लुप्तप्राय: सन्ति तथापि तेषां सत्ता यत्र तत्र अशिक्षितवर्गेषु दृश्या एव ।

<u>प्राचीनश्रमकर्तार: ---</u>

प्राचीनोद्योगकरा: एतै: नामभि: ख्याता आसन् ----- कथावाचका: ब्राह्मणा:, नटनर्तका:, गीतनृत्यलास्यज्ञा: वराङ्गना, प्रास्थानिका:, पानविक्रयिण:, रूपाजीवा:, नानापण्योपजीविनो वणिज:, विषवैद्या:, शल्यवैद्या:, काय-चिकित्सका:,कर्मान्तिका:, स्थपतय:, मार्गिण:, वृक्षारोपका:, कूपकारा:, सुधाकारा:, वंशकर्मकृत:, वाणिकारा:, कूर्चकारा:, परिकर्मकृत , वस्त्रोपजीविन:, मायूरिका:, तैत्तिरिका:, वेलका:, भेदका:, रञ्जका:, दन्तकारा: शरण्डवेत्रकारा:, कटकारा:, आरकूटा:, ताम्रकूटा:, शूर्पकूटा: खड्गकारा:, गुडादीक्षुप्रपाचका:, औरभ्रका:, माहिषिका:, तुन्नवाया:, अभिष्टावका:,सूता:, मागधा:, वन्दिन:, चैलनिर्णेजका:, चर्मकारा:, अङ्गारकारा:, लुब्धा:, धीवरा:, कबन्धधारिण:, काष्ठप्रपाटका:, वस्त्रविनाशका:,मृत्कारा:, कुम्भकारा:, श्मश्रुवर्धकिन:, लेखका:, गणका:, तन्दुलकारका:, इक्षुकारा:, शाकपण्योपजीविन:, तैलिका:, गान्धिका:, तीर्थशुद्धिकारका:, चित्रकर्मविद:, लाङ्गूलिका:, पौरोगवा:, सौविदल्ला:, गोपा:, वनचरा:, नदीतीरविचारिण: ( गोमहिषीपालका:), अन्नभक्षकरा:, रत्नादीनां भेदका:, कालभेदिन:, कन्दुकारा:, पाषाणकर्मका:, पटकारा:, हेतिकारा:, पर्णकारा:, लाक्षाकारा:, मालाकारा:, पत्रकाराश्चेति ।

भिन्नानां विज्ञानप्रभावादय उद्योग संख्यानां गणना दुष्करी अस्ति । सर्वे उद्योगा: प्राय: यन्त्रप्रधाना एव सन्ति । तेषु सम्पाद्यमानेषु कर्मसु बुद्धिबलं प्रधानं भवति शारीरकं

बलं तु न्यून मात्रायाम् उपयुज्यते । युगानुसारं नूतनोद्योगाः प्रसृताः एते सन्ति----

नूतनोद्योगाः --

धूम्रपाननिर्माणविक्रयोद्योगाः, कृत्रिमप्राकृतिकघृतदुग्धोद्योगाः, मिष्टान्नोद्योगः, लवणखाद्योद्योगः, रोटिकादिखाद्योद्योगः, पत्रोद्योगः, समाचारपत्रोद्योगः, पुस्तकव्यवसायः, मुद्रणोद्योगः, पत्रिकोद्योगः, द्वित्रिचक्रवाहिनीनाम् उद्योगः, तासां पदचालनव्यवसायः, द्वित्रिचतुश्चक्रतैलरथोद्योगाः, तैलविद्युद्वाष्परथसंचालनव्यवसायः, चित्रपटोद्योगः, यन्त्रचित्रोद्योगः, यन्त्ररजकाः यन्त्रनिर्णेजनोद्योगः, सूच्युद्योगः , सूत्रोद्योगः, चर्मोणारेयानकपासनायलोनटेरालिनादिनिर्मितवस्त्राणाम् उद्योगाः, इक्ष्वाकाररसोद्योगः( रबरोद्योगः), यंत्रकूपकरोद्योगः, यन्त्रवस्त्रसीवनोद्योगः, कलवलांशोद्योगाः, धातुखननोद्योगाः, अश्ममन्थनोद्योगः, विद्युद्व्यवसायः, क्रीडासाधनोद्योगाः, काष्ठोद्योगः, विद्युत्प्रयोगसाधनोद्योगाः , जायनिर्माणोद्योगाः, सुरोद्योगः, मांसोद्योगः, इष्टिकायोजकचूर्णोद्योगः, यन्त्रोद्योगाः( शोधचिकित्सासर्वेक्षणदूरवीक्षणादिकर्मप्रयोगयोग्याः यन्त्राः), हिमफलपुष्पोद्योगाः, यानरथमार्गनिर्माणोद्योगः, कुल्याबन्धजलाशयनिर्माणोद्योगः, सेतुनिर्माणोद्योगः, तन्त्वोद्योगाः, धातुपात्रमूर्त्युद्योगाः, अलङ्कारोद्योगः, प्राकृतिकगैसतैलोद्योगाः, कृष्णाश्मोद्योगाः ( कोयला०) , दाँमाविकवस्त्रोद्योगः, लेखन्यादिशिक्षोपकरणोद्योगाः, कालदर्शिनीनामुद्योगाः, दूरदर्शनश्रवणोद्योगाः, यन्त्रकृतचर्मवस्तूद्योगः, इष्टिकायोजकचूर्णकृताः उद्योगाः, चीनीमृदुद्योगः, चायोद्योगः, शुष्कनारिकेलवटावस्तूद्योगः, मालोद्योगः, पशुपालनोद्योगः, मत्स्यपालनोद्योगः, कुक्कुटपालनोद्योगः, पक्षिपालनोद्योगः, वन्यजीवपालनोद्योगः( कपिसर्पभल्लूकादीनाम् ), वनस्पतिवृद्धिसंरक्षणोद्योगः, कृषिवृद्धिसंरक्षणोद्योगः( अस्मिन् उद्योगे कृषकाः कृषिश्रमिकाश्च समानरूपेण सम्मिलिताः सन्ति), रथ्यानादीनां पुनर्निर्माणोद्योगः, निर्णेजकपदार्थनिर्माणोद्योगाः, वस्त्रयोजिनीनाम् उद्योगाः , प्रसाधनोद्योगाः, ध्वनिसंरक्षकयन्त्रोद्योगः, ध्वनिवर्धकयंत्रोद्योगः , चित्ररक्षणोद्योगः, टङ्कणोद्योगः, मत्स्योद्योगः, सन्धानकोद्योगः , विविधकेशवस्तूद्योगाः, उर्वरकोद्योगाः, कृषिपश्वौषधोद्योगाः, कृषियन्त्रोद्योगाः, पत्रपात्रोद्योगः, स्वच्छताव्यवसायः( आयन्त्र शुद्धेः मार्गशुद्धिपर्यन्तम् ), तृडलोद्योगः, कृत्रिमाङ्गोद्योगः, पटकुटीरोद्योगः, कृत्रिमगृहोद्योगः, सरवागृहोद्योगः

विस्फोटनोद्योगः, टिनोद्योगाः, असंख्यवस्तूपादानभूतो लौहोद्योगः, काचोद्योगाः, धायव्यवसायः, शस्त्रास्त्रोद्योगाः, तेषाञ्च विस्फोटकोद्योगाः, नौकोद्योगः, जलयानोद्योगः, युद्धयानाविमानोद्योगाः, क्रीडाव्यायामव्यवसायः, आसनोद्योगः, वाद्ययन्त्रोद्योगाः, वेशभाजरक्षणव्यवसायः( भटाः आरक्षिगणश्च) शिक्षण-व्यवसायः, भारवहनव्यवसायः। शिरोभिः हस्तशकटैश्च ) , अग्निपेटिकोद्योगः, वेत्रवंशमुञ्जवस्तूद्योगाः, प्रचारव्यवसायाः, भिषग्वृत्तिः, लवणोद्योगः, मदिरोद्योगः, लाक्षारसोद्योगः , यन्त्ररोटिकोद्योगः, ताम्राभ्रकमैंगनीजादिधातुखनिजानाञ्च उद्योगाः तैलोत्पादवस्तूद्योगाः, कृत्रिमवृष्ट्युद्योगः, कीटनाशनोद्योगः, उपनेत्रोद्योगश्च ।

उक्तोद्योगानां नैकाः उपोद्योगाः आश्रितोद्योगाः सन्ति येषां गणना न केवलं विस्तारकरी भविष्यति अपितु असम्भवापि । अत्र उक्तोद्योगानां योगेन न केवलं तेषु वस्तूत्पादकाः श्रमिका एव पठिताः अपितु तन्निर्मितोत्पादितवस्तूनां विक्रेतारः श्रमिकाश्चापीति । सर्वे उद्योगाः नानाविद्याकलाधीनाः सन्ति । शिल्प उद्योगस्य द्वितीयं नाम अस्ति । अतः सर्वाः विद्याः कलाश्च शिल्पशब्देन उच्यन्त इति सिद्ध्यति । नरस्य अकुतूहलान्वेषिणीबुद्धिः नित्यं नवोन्नतोद्योगान् जनयित्वा नवीनाः विद्याः कलाश्च प्रकटयति । एवमेव विद्याः कलाश्चापि असम्भवाचित-रूपेण बुद्धिं प्रेरयित्वा यदा कदा नवमुद्योगमाविष्कुर्वन्ति। अनया रीत्यैव अनादिकालतोऽन्योऽन्यं वर्धयन्तः कलाविद्योद्योगाः अद्य असंख्यतां गताः। एतेषां वर्धमाना संख्या विश्वकर्मणां विश्वकर्मत्वं व्यनक्ति यच्चास्ति अनन्तवद् अनन्तम् । विश्वे स्मिन् दृश्यश्रव्यानां कलात्मककर्मक्रियाभावानामेकमेव कर्ता शिल्पदेवो विश्व-कर्मास्ति। नात्रास्ति कश्चित् सन्देहविषयो यथाऽयं प्रकृतिर्गुणैः विवशीभूय क्षणमप्यकर्मकृन्न तिष्ठति सो नित्यं वस्तुभिः विभूषयन् विश्वकर्मा एवास्ति यतो हि आत्मनो वै जायते पुत्रः । " यो नः पिता जनिता यो विधाता " इत्यादिभिः वाक्यैः सर्वेषां जीवनानां विश्वकर्मतनयत्वमेव संसूच्यते ।

कर्मवर्गरूपाणि पुत्रनामानि ---

यानि पुनः नामानि विश्वकर्मणः पुत्राणां पुराणेषु श्रूयन्ते तानि कर्मवर्गरूपाणि सन्ति । पुरातने युगे यथा गुणाः तथा नामानि भवन्ति स्म । अतस्तेषां गुणकर्मानुरूपं पित्रा नामानि कृतानीति भावनीयम् । पुत्रनामभेदाः

भिन्नकालेषु कर्मवर्गमहत्त्वभेदाद् प्रकटयन्ति, न पुनः मतवैविध्यजन्यां भिन्ननाम-संख्याम् । परं नाहम् तन्नामकाः अ एव पुत्रा इति वक्तुं नोत्सहेऽहम्। तथापि तेषां नामानि कर्मवर्गव्यञ्जकानीति पुनिरिक्तं मे मतम्। तथा हि---

मनुर्मयस्तथा त्वष्टा शिल्पी विश्वज्ञ एव च ।
विश्वकर्मसुताः ह्येते रथकारास्तु पंच च ।।

( स्क० ना० ५।१३)।

अत्र मनुः कविरुच्यते।कविना सर्वे साहित्यकाराः, विचारकाः, बुद्धि-जीविनः, अन्वेषकाः( वैज्ञानिकाः) च उक्ताः भवन्ति। मननान्तरं कर्मणे नदुति आत्मानं परं वा यः सो मनुरित्यभिधीयते। भूतधानाय यानकरोति मयः । यद्यपि ललितानगरप्रसङ्गे विश्वकर्मणासह नगररचनां करोति तथापि मुख्यतः विमाननिपुणः श्रूयते। हैमायसराजतानि पुराणि तारकादादिभ्यो मयकृतान्यपि श्रूयन्ते । ब्रह्मणाहतेन मयेन कृतानि तानि पुराणि चित्राण्यासन् यतोहि सहस्रा-ब्देष्वेकवारं दाणाय तानि पंक्तिस्थितिं गच्छन्ति स्म। स्थापत्यकलाकुशलोऽपि भूत्वा वैमानिकत्वान्मयनाम्नासौ प्रथितो बभूव। अन्यथा विश्वकर्माख्यः प्रसिद्धः समभविष्यत् ।

आर्षं पदार्थं ( धातुकाष्ठाश्म) तक्षणादिक्रियाभिः योग्यतनुतां प्रापयित्वा यो निर्मेयं वस्तु त्वेषति सः त्वष्टेत्युच्यते । पात्रयन्त्रमूर्तिगृहोप-करणादीनि अनेनैव क्रियन्ते स्म । मृदिष्टकाश्मादिभिः पात्रमार्गपुरप्रासादभवन-रचनाकुशलः शिल्पी उच्यते स्म ।

विश्वज्ञ इत्यनेन नाम्ना न केवलं दैवज्ञ एवोच्यते अपितु खगोलविज्ञाननिपुणोऽ-प्युक्तो भवति ।

परमेते पञ्चपुत्राः मिलित्वा रथकारा उच्यन्ते इत्यत्र विचारविषयः। प्रतिक्षणं मनुष्याः ज्योतिषां प्रभावैः प्रभाविताः वर्तन्ते । तेषां सर्वाः क्रियाः अप्रत्यक्षरूपेण तैः सञ्चालिताः भवन्ति । तेषां मनभावस्थितिरपि तैरेव प्रेरिता भवति। तेषां प्रतिकूले सति कार्यसिद्धिर्न भवति सम्भवा। अतोऽयं हिन्दुः शुभ व्यवसाद्यकर्मणः प्राक् मुहूर्तं पृच्छति विप्रम् । पुरापि रथरचना व्यवसाध्यासीत् ।

अत: कार्यारम्भमुहूर्तज्ञानाय विश्वकर्मयोगोऽपेक्षितो भवति स्म। एतेनैव योगेनाऽसौ रथकार उच्यते स्म तदानीम् ।

शिल्पी रथावासनिर्माणेन पथनिर्माणेन च आत्मनो योगं ददाति स्म । चिलीदेशे अनन्यप्राप्तमार्गो विमानधावनपथोऽस्ति, येन विमानसाफल्यता ज्ञापिता भवति । यद्वा यथाऽद्य वैमानिककलाङ्गानि कर्तृभिः निर्मीयन्ते। तेषां योजना च पश्चाद् विशेषज्ञैः क्रियते । तथैव तद्युगेऽपि भिन्नस्थाननिर्मितानि तेषामङ्गानि एकस्थाने विज्ञानविशारदैः संयोजितानि भवन्ति स्मेति भावनीयम्। शिल्पशब्दस्य कौशलार्थे प्रयोगः प्राचीनोऽस्ति। अतः रथयोजना निपुणः सम्भवतः शिल्पवाच्य आसीदिति ।यद्वा शिल्पीनाम् उपजातिषु रथयोजकानामपि एकाऽऽसीज्जातिरिति । अत्र मुख्यगणनाप्रसङ्गे ते शिल्पशब्देन पठिताः। आभ्यामेव दृष्टीभ्यां शिल्पिनो रथकाराः भवन्ति ।

रथेषु विमानेषु च धातुकाष्ठप्रयोगो परिहार्य एवास्ति । भिन्नपदार्थैः त्वष्टा तेषामङ्गानि घटयति। नात्र विस्तरेण किमपि प्रयोजनं दृश्यते ।वय रथानां शरीराणि त्वष्टृभिः निर्मीयन्ते कलाङ्गानि च प्रायः विविधैः कर्तृः। अत्र रथदेहघटकत्वात् त्वष्टा रथकार उक्तः ।

मयो विमानविशेषज्ञः। तस्य संरक्षणे रथविमानरचना पूर्णतामुपैति स्म। अतः तस्य रथकर्तृत्वं न सन्दिग्धम् । मुख्याङ्गघटनायोजना तदधीनासीत् ।

मनुः प्रतिपादितं सिद्धान्तं विकासयति । प्रतिपादितेषु सिद्धान्तेषु समयानुसारं नवीनप्रयोगद्वारा आवश्यकं परिवर्तनं करोति। यदा कदा नूतनं सिद्धान्तमपि आविष्करोति । अवश्यं कर्मक्रियाः सिद्धान्तानां जनन्यः सन्ति तथापि आदौ विचाराः मनसि जायन्ते अनन्तरं कर्मक्रियाः पदं लभन्ते । अयं विचारक एव मनुनाम्ना ज्ञायते स्म। पौराणिककथासु कृताः नानारथा विमानाश्च कलादृष्ट्या परस्परं भिन्नाः सन्ति । तत्र कलाभेदे मनुविचारा एव हेतवो भवन्ति । मनुकर्माभावे न केवलं कर्मप्रगतिरेव असम्भवाऽस्ति अपि तु कर्माभाव एवसम्भवति ।

अतः रथरचनायाः हेतुः मनुरिति उक्तं भवति। यदि मयोऽपि स्वयं रथं करोति तर्हि मनुकर्म अवश्यमेव तस्य मनसि पदं करिष्यति ।अतः एतत्रापि रथकर्मणि मनुयोगः सिद्धो भवति।

एतत् सम्भवति यत् यथा उच्चवैज्ञानिकाः प्रयोगैः अन्वेषणकर्म कृत्वा सिद्धान्तं प्रतिपादयन्ति। परवर्तिनो वैज्ञानिकाः उद्योगिनो वा तं सिद्धान्तम् अनुसृत्य तेषां संरक्षणे कर्म कुर्वन्ति। एवञ्च सिद्धान्तप्रतिपादनेन संरक्षणेन वा मनुस्थाने एव कर्मप्रतिपादने सहायाः भवन्ति। एवमेव अतीते रथसिद्धान्त-प्रतिपादकोऽपि मनुर्नाम्ना ज्ञायते स्म । परम् अनेन नाम्ना न केवलं उक्तसिद्धान्त - प्रतिपादका एव अपितु सर्वेषां कर्मणां वैचारिकयोजनानां प्रतिपादकाः अपि उक्ताः भवन्ति स्म ।

अतः श्लोकोक्ताः मन्वादयो रथकाराः भवन्ति स्म कर्मयोगैः ।

रुद्रयामलवास्तुतन्त्रे शिल्पप्रवर्तकेषु विश्वकर्मसुतेषु विश्वज्ञस्य स्थाने तक्षा पठितो वर्तते ।अस्मिन् काले समाजे मुहूर्तविचारभावना क्षीणतां गतेति अनुमीयते । मात्र कर्मभावना बलवती जाता यथाद दृश्यते । त्वष्टुः काष्ठाश्मकर्म तक्षकेण अङ्गीकृतम्। स च त्वष्टा मात्र धातुकर्मनैपुण्यमवाप। शस्त्रास्त्रयन्त्राभरणा-दीनि अस्त्रं मुख्य कर्माणि अभवत् ।

नामभेदात्कर्मभेदाः --

विष्णुपुराणे विश्वकर्मणः चत्वार एव पुत्राः श्रूयन्ते । तेषां नामानि इमानि सन्ति ---

अजैकपाद्, अहिर्बुध्न्यः, त्वष्टा, रुद्रश्च । (१।१५।१२२)।

अतःपूर्वं प्रतिपादितं पुत्रास्यमाध्यमेन सामाजिकश्रमस्य वर्गीकरणं कर्माश्रितमस्ति। अत्र विष्णुपुराणोक्ताः श्रमविभागाः शक्तिपरकाः सन्ति। तथा हि-------

अजैकपाद विद्युच्छक्तिसम्पाद्यमानकर्मणां प्रतिनिधिरस्ति । तत्कर्मसु रताः जनाः अजैकपादो नाम्ना ज्ञायन्ते । अहिर्बुध्न्यः तैलपरमाण्वादिभिः प्राप्तशक्तिभिःक्रियमाणेषु कर्मसु नियोजितानां पुरुषाणां प्रतिनिधित्वं करोति ।

अहि: सूर्य: तद्वच्छक्तिसम्पन्नो भासमानो वा । बुध्न्य: पात्रेषु भव इति । तैलादिभ्य: इन्धनपदार्थेभ्य: जायमाना: शक्तय: प्रकाशरूपा भवन्ति। यथा आकाशचारी सूर्यो जीवनहेतु: तथैव तैलादिभ्य: प्राप्ता: सूर्यभासाभासमाना: कर्मशक्तयोऽपि विश्वकर्मणामस्माकञ्च जीवन हेतव: सन्ति अत इयं पार्थिवरविरूपास्ति। यथाप वयं प्रत्यक्षरूपेण पश्याम: । रात्रौ तमौ विद्युत्स्थानेषु नामशेषतां भवते कारणार्थं एव। पार्थिवशक्तिनां भासत्वं वीक्ष्य ता: रविनाम्ना ( अत्र अहिनाम्ना) उक्ता:। पात्रेषु इन्धनानि विधाय ता: समुपलभ्यन्ते । अतो निर्विवादं तासां बुध्न्यत्वम् । एवमहिर्बुध्न्य: पार्थिवेन्धनशक्तनां व्यञ्जकोऽस्ति । ताभि: शक्तिभि: यै: यै: जनै: कार्याणि क्रियन्ते तेऽत्र स्वकर्मशक्तिनाम्ना उक्ता: भवन्ति । अत्रा-हिर्बुध्न्येन विद्युच्छक्तिर्न पठिता यतो हि मेघगृहीता विद्युच्छक्ति: तदानीं कर्मशक्ति-राशीतु सा मार्जकपान्नाम्ना पठिता । भौमिकाञ्जां विद्युतं तत्रैव पठितेति मन्तव्य:--- पुदम वर्गाभावे ।

त्वष्टा शारीरिककर्मस्य व्यञ्जकोऽस्ति । परं न देहकर्ममात्रस्य । स सौम्यानां बुद्धिप्रधानानां कायकर्मसाध्यानां कर्माणां कर्तास्ति। तदनुसारमेवात्र तक्षणकर्मप्रधानानां धात्वश्म-काष्ठैष्टिकानां कार्याणां समावेशो भवति । तेषां कर्तारश्च त्वष्टेति वास्येन उक्ता: भवन्ति ।

रुद्रो रौद्रकर्मकर्ता । अत्र अग्निसाध्यकर्माणां कर्तार:, स्वाभाविकी हिंसायुक्तस्य कृषिकर्मण: कर्तार: कृषका:, हिंसोपजीविनो वन्यवृत्त्युपजीविनश्च पठिता: भवन्ति। एतेषां कर्मसु अग्नि: प्रमुख: सहायको भवति। यथा च दृश्यते फलकुठारादीनां निर्माणविषये । अत: रुद्रोऽग्निकर्मप्रतीक: । यस्मिन् हिंसापि स्थानं लभते। यद्वा हिंसाग्निशक्तिकर्मप्रतीको रुद्र:। अथवा रौद्रशक्तिप्रतीको रुद्र:, य: स्वनाम्ना तच्छक्तिप्रयोक्तृन् व्यनक्ति ।

## त्रिविधं कर्मकाराणां वर्गीकरणम्

एवं त्रिविधं श्रूयते कर्मकाराणां वर्गीकरणम् ---

१- कर्मपरकम् ।

२- कर्मशक्तिपरकञ्च ।

तेऽप्येते वर्गीकरणे सार्वभौमिकं सार्वकालिकञ्च महत्त्वमावहन्ति । यद्यपि तयोः प्रयोगाः नापरिचितकाः । तथाप्यत्र पुत्रपौत्रप्रपौत्रादीनां संख्या गणनादृष्ट्या सर्वथा असम्भवास्ति। अतः कर्मदृष्ट्या तान् न पश्यन्ति विद्वांसः । सन्ति यद्यपि बहूनां कर्मकाराणां संघाः तथापि कोटिशः श्रमिकाः संघबाह्याः वर्तन्ते । क्वचिदेके संघे नानाकर्मकारिणो दृश्यन्ते । अत्र स्थितिः इयमस्ति यन्नाना उद्योगाः नाना संघाः। परमेते वृक्षस्कन्ध इव बहूनां शाखोपशाखानाम् आश्रयभूताः सन्ति । अनुदिनञ्च प्रस्फुटिताः भवन्ति नूतनाः शाखाः प्रशाखाश्च । अतः कस्यापि नूतनप्रकारस्य कर्मवर्गीकरणं न सम्भवति। कर्मपदार्थान् आधारीकृत्य कृतं वर्गीकरणं प्रायः चर्चितचर्वणोक्तिं घटयिष्यति भविष्यन्ति च बहूनि शिल्पानि गणनाबाह्यानि । यतो हि विज्ञानविकासेन शिल्पाय बहवोऽभिनवाः पदार्थाः प्रदत्ताः ये न तु धातुगणना योग्याः सन्ति न च मृदश्मकाष्ठवर्गयोग्याः ।

त्रिविधः श्रमः ---

एतां जटिलतामवेक्ष्य अत्र श्रमः त्रिविधः उच्यते । तेष्वेव प्रकारेषु सर्वे विश्वकर्माणः समाहिताः भवन्ति। श्रमभेदा एते सन्ति ----

१- कुशलश्रमः

२- अर्धकुशलश्रमः

३- अकुशलश्रमः

सरलाः श्रमभेदाः जटिलाश्च श्रमिकाणाम् ।अत्र योग्यताप्रमाणपत्राणां सुलभत्वात् श्रमस्य उक्तप्रकारस्य विभाजनं सुकरमस्ति। अपि च अनेन विभाजनेन कस्यापि बहिष्कारस्य प्रश्नो न उद्भवति। सर्वेषां श्रमिकाणां विश्वकर्मत्वं सहजतयैव ज्ञायते । परं सहस्राधिकवर्षं यावद् भीषणयुद्धानि कृत्वा, मूढम्लेच्छज्वालाज्वलितसाहित्यभस्म भूमौ निधाय, परतन्त्रतामारं कथं कथमपि नीयमानाः भारतीयाः स्वातन्त्र्यस्य पञ्चविंशतिवर्षेषु गतेष्वपि श्रमस्य श्रमिकाणां च महत्त्वं न जानन्त इव तेषु उपेक्षावृत्त्या वर्तन्ते । अत्र सामाजिकेषु व्यवहारे दृश्यमाना श्रमोपेक्षा न केवलं ज्ञानार्थस्वास्थ्यपतनेभ्यः कालमस्ति अपि तु राष्ट्रसमाजपतनायापि । कटुसत्यन्तु इदमस्ति यत् श्रमोपेक्षा आत्मनः राष्ट्रस्य च विनाशात्मकपतनेन सह सायताये भवति।

ईदृश्यैते वर्गीकरणे सार्वभौमिकं सार्वकालिकञ्च महत्त्वमावहन्ति । यद्यपि तयोः प्रयोगौः नापचितकौः । तथाप्यत्र पुत्रपौत्रप्रपौत्रादीनां संख्या गणनादृष्ट्या सर्वथा असम्भवास्ति। अतः कर्मदृष्ट्या तान् न पश्यन्ति विद्वांसः । सन्ति यद्यपि बहूनां कर्मकाराणां संघाः तथापि कोटिशः श्रमिकाः संघबाह्याः वर्तन्ते । क्वचिदेके संघे नानाकर्मकारिणो दृश्यन्ते । अत्र स्थितिः इयमस्ति यन्नाना उद्योगाः नाना संघाः। परमेते वृक्षस्कन्ध इव बहूनां शाखोपशाखानाम् आश्रयभूताः सन्ति । अनुदिनञ्च प्रस्फुटिताः भवन्ति नूतनाः शाखाः प्रशाखाश्च । अतः कस्यापि नूतनप्रकारस्य कर्मवर्गीकरणं न सम्भवति। कर्मपदार्थान् आधारीकृत्य कृतं वर्गीकरणं प्रायः सर्वितर्वर्णोकिं घटयिष्यति भविष्यन्ति च बहूनि शिल्पानि गणनाबाह्यानि । यतो हि विज्ञानविकासेन शिल्पाय बहवोऽभिनवाः पदार्थाः प्रदत्ताः ये न तु धातुगणना योग्याः सन्ति न च मृदश्मकाष्ठवर्गयोग्याः ।

त्रिविधः श्रमः ---

एतां जटिलतामवेक्ष्य अत्र श्रमः त्रिविधः उच्यते । तेष्वेव प्रकारेषु सर्वे विश्वकर्माणः समाहिताः भवन्ति। श्रमभेदा एते सन्ति ----

१- कुशलश्रमः

२- अर्धकुशलश्रमः

३- अकुशलश्रमः

सरलाः श्रमभेदाः जटिलाश्च श्रमिकाणाम् ।अत्र योग्यताप्रमाणपत्राणां दुर्लभत्वात् श्रमस्य उक्तप्रकारस्य विभाजनं दुष्करमस्ति। किं अपि च अनेन विभाजनेन कस्यापि बहिष्कारस्य प्रश्नो न उद्भवति। सर्वेषां श्रमिकाणां विश्वकर्मत्वं सहजतयैव ज्ञायते । परं शताब्धिकवर्षं यावद् भीषणयुद्धानि कृत्वा, मूढम्लेच्छज्वालाज्वलितसाहित्यभस्मं भूमौ निधाय, परतन्त्रताभारं कथं कथमपि नीयमानाः भारतीयाः स्वातन्त्र्यस्य पञ्चविंशतिवर्षेषु गतेष्वपि श्रमस्य श्रमिकाणां च महत्त्वं न जानन्ति इव तेषु उपेक्षावृत्त्या वर्तन्ते । अत्र सामाजिकेषु व्यवहारे दृश्यमाना श्रमोपेक्षा न केवलं ज्ञानार्थस्वास्थ्यपतनेभ्यः स्थालमस्ति अपि तु राष्ट्रसमाजपतनायापि । कटुसत्यन्तु इदमस्ति यत् श्रमोपेक्षा आत्मनः राष्ट्रस्य च विनाशात्मकपतनेन सह दासतायै भवति।

परं आपेक्षाया: एवं दूरदर्शिनी सूक्ष्मग्राहिणी वृत्तिदाय: पत्रांशिभ्यो मालप्रशिक्षकैश्च न ज्ञायते ।

समाजस्य आपेक्षावृत्ति: --

यस्मिन् समाजे आपेक्षा वर्तते तत्र श्रमिकाणामुपेक्षापि भवत्येव । अस्माकं देशेऽपि उच्च पदासीना: उच्चशिक्षाप्राप्ता: उच्चकोटे: वैज्ञानिका: एव सम्मानिता: भवन्ति । मध्यमवर्गीया: विश्वकर्माण: स्वपदानुसारं उपयोगितानुसारं च सम्मानं लभन्ते तेषां कर्माणि तथा नाद्रियन्ते यथा ते स्वार्हतया । तथापि तेऽपि लभन्ते एव मानम् अत्र नास्ति इमं विचारणीयम् । परं मध्योच्चवर्गीयाणां विश्वकर्मणां संख्या गणनीयास्ति । ते नार्हन्ति विश्वकर्ममानस्य प्रतिनिधित्वम् ।

विश्वे अकुशलार्धकुशलविश्वकर्मणां सम्पदौ दृश्यते येषामर्धनग्नानि शरीराणि, अर्धपूरितोदराणि आकाशगृहे वसतिं कृत्वा वसन्ति अट्टालिकानां पादेषु । एतेषां विश्वकर्मणामुपेक्षा सुसम्पन्नविश्वकर्मणामपि सुखाय न भविष्यति । अतस्तै: तथा प्रयास: कर्तव्य: यथा तेषामनुजा: जीवनानि भाररूपाणीति नानुभवेयु:। अन्यथा सहनसीमातिक्रान्ते सति तेषां कङ्कालराशय: उपेक्षकान् शोषकवृत्तान् हन्तुमुद्यता: भविष्यन्ति । समरे सति अग्रजा: अपि सर्वथा अदाता-मवस्थां न अनुभविष्यन्ति । अत: अग्रजै: तेषामुपेक्षकैश्च आत्महिताय, परहिताय, अनुजहिताय च तेषां सम्मान: कर्तव्य:। प्रतिष्ठाप्रभावप्रश्नं पश्चाद् व्याख्यास्याम: तावदत्र उदरभरणप्रश्न:। तस्य वर्तमानपरिस्थितिमवेक्ष्य व्याख्यास्याम:।

श्रमिणां स्थिति: ---(विद्यालयेषु आपणादिषु च)--

~~विद्यालयेषु आपणादिषु पर्याप्तं श्रममूल्यं न प्राप्नुवन्ति धनिकेभ्य:~~

अथ अर्धकुशलश्रमिका: अकुशलश्रमिकाश्च पर्याप्तं श्रममूल्यं न प्राप्नुवन्ति धनिकै: । एवञ्च शोषित श्रमाणां तेषां न केवलं कार्यक्षमतैव हीयते पौष्टिक-खाद्याभावे अपितु परिवारपोषणार्थं दुर्वहगुणभारम् उद्वहन्तानां बुद्धि:,प्रतिष्ठा, मनोबलञ्चापि अपचीयते । धनिका: तेषामार्थिकविपन्नताया: यथासम्भवो लाभमर्जितुं यतन्ते यञ्च ते लभन्तेऽपि। आदौ औद्योगिकक्षेत्रेष्वियं स्थिति: आत्मन:

पैशाचिके रूपे आसीत् । परमत्र तत्रस्थानां श्रमिकाणां सङ्गठनैः शासितं तस्या इदं रूपं किञ्चित् सौम्यत्वं गतम् । परं लघुसंस्थासु(विद्यालयादि व्यक्तिगतासु), भोजनालयेषु, वणिग्व्यापारकेन्द्रेषु, पञ्चदशश्रमिकचालितेषु लघूद्योगप्रतिष्ठानेषु, मुद्रणालयेषु अद्यापि बहुधा अफ्रीकीदासदशा रोदिति आत्मनोऽवस्थां दृष्ट्वा । शासनयोगेन परिचालितेषु विद्यालयेषु चतुर्थवर्गस्य आर्थिकीस्थितिः अपि शोचनीया-ऽस्ति। महार्घतायाः वर्तमानायुगे ते येन केन प्रकारेण ऋणमयानि जीवनानि जीवन्ति। ये विद्यालयाः व्यक्तिविशेषाणां सम्पत्तिरूपाः सन्ति येषु च प्रबन्ध-समितयो नाम्नैव ज्ञायन्ते तेषु एतेषां कर्मचारिणां स्थितिः अहोरात्रिदासानामिव भवति। ते विद्यालयेशस्य गृहकर्माणि, कृषिकर्माणि, तैलाभ्यङ्गनादीनि कर्माण्यपि कुर्वन्ति। विद्यालयकर्माणि च सीदन्ति तेषामभावे । भोजनालयादिषु कर्मरतानां स्थितिस्तु मानवशब्दं नार्हति । तेषां कृते विधिना स्वतन्त्रता नैव कृता न करिष्यत्यपि सुदूरभविष्येऽपि । ते तु न केवलं विजितदासजीवनानि एव तत्र यापयन्ति अपितु काठिन्येन अर्धजीवनवृत्तिं लभन्ते । न तत्र तेभ्यः प्रभवति शासनो न च मानवता । शासनेन निर्धारितेऽपि न्यूनतमपारिश्रमिके ते स्वामीच्छानुसारमेव तं लभन्ते। अस्ति तत्र कारणं न्यूनवेतनस्वीकरणे। अद्य यन्त्राणां प्रभूतप्रयोगैः असंख्याताः जनाः निरुद्योगाः कृताः। अतः एकपदे रिक्ते सति शतशः जनाः तत्रागन्तुम् उत्सुकाः सम्मिलन्ति। अतः तेषु यो न्यूनतमं पारिश्रमिकं स्वीकरोति सः कार्यं करोति ।

नेयं स्थितिः मात्र चतुर्थवर्गे एव अपितु तृतीयेऽपि संदृश्यते । उत्तरप्रदेशादिषु प्रान्तेषु यत्र व्यक्तिगतशिक्षणसंस्थाः सन्ति तत्र न्यूनवेतनपद्धतिस्तु शिक्षक संघानां प्रयासैः समाप्तप्रायाजाता तथापि 'समान कार्याय समानवेतनः समानावसर' इत्यस्य सिद्धान्तस्य अभावे न केवलं शिक्षकादीनाम् आर्थिकं शोषणमेव भवति अपितु देशशिक्षाशत्रूणां विद्यालयोपजीविनां विद्यालयेशानां पैशाचीवृत्तिभीतास्ते आत्महीनानि दासजीवनानि जीवन्ति लिखन्ति च त्यागपत्राणि नियुक्तिपत्र - प्राप्तिपूर्वम् । मानवाय वृत्तिरिव मानसिकी स्वतन्त्रतापि अनिवार्यास्ति या च भ्रष्टशिक्षाव्यवसायिनां जीविते सति न सम्भवति। अन्यच्च एते भ्रष्टनेतारः अभिभावकानां शोषणं कृत्वा स्वोदराणि प्रपूरयन्ति । श्रमिकपुत्राः तदर्थाभावे शिक्षारहिताः तिष्ठन्ति। छात्राणां छात्रवृत्तिं, मिथ्यादेयकपत्राणि योजयित्वा

क्रीडापुस्तकालयादीनां शुल्कञ्च मदापयन्ति राष्ट्रघातिन:। एतेषां सहायक: शासनोऽपि राष्ट्रीयतां नार्हति ।

ग्रामीणश्रमदशा : ---

अथापतन्ति ग्रामीणा: श्रमिका:। न केवलमस्माकं देश एव अपितु विश्वस्य सर्वेषु राष्ट्रेषु ग्राम्यश्रमिकाणां संख्या सर्वाधिका अस्ति । एतेषामार्थिकी स्थिति: अतीव शोचनीया अस्ति। न च क्रियते कोऽपि उपचार विशेष: तत्र सुधाराय।नास्त्येकोपचार एत्यापि नास्ति । परं तस्य प्रयोगे शासना: प्राय: मन्दादरा: औद्योगिक प्रभावान्धनेत्रा: वा सन्ति। अत्र तावदेषां कष्टकारणानि वदये तत्प्रथमो हेतु: कार्याभाव:। ग्रामेषु कृषिकर्म क्रियते तच्च न भवति नित्यम् । श्रमिकाणां प्रयोग: प्राय: शस्यानां वपनप्रतिरोपणकर्तनकार्येषु सिंचनकर्मणि च, तृणोन्मूलनकर्मसु च क्रियते । एतानि कार्याणि वर्षस्य केषुचिन्मासेष्वेव भवन्ति । अन्यानि ग्रामोपलब्धानि कर्माण्यपि प्राय: समयानुसारमेव क्रियन्ते तेषु गृहनिर्माणं सुधारकर्म च प्रमुखमस्ति। एतानि कर्माणि तेषां श्रमै: पञ्च षण्मासेषु सम्पाद्यन्ते। वर्षस्य अवशिष्टमासेषु तेषां श्रमो मुधैव नाशमुपगच्छति । कर्माभावे अर्थकार्श्यमनुभवद्भि: स्वस्थ शरीरै: क्रियन्ते दुष्कर्माणि । न सन्ति सुलभा: कुटीरोद्योगा: शिष्टसमयस्य सदुपयोगाय येषां बलेन तेषां पूर्वजा: मोदन्ते स्मातीते । अथ ये केऽपि सन्ति कुटीरोद्योगरतास्ते अपेक्षितार्थाय शासनास्यापेक्षिण: सन्ति यतो हि अद्य सर्वाणि वस्तूनि यन्त्रै: निर्मीयन्ते तानि च भवन्ति अल्पमूल्यसुलभानि । एतद्विरुद्धं तेषामुत्पादि तानि वस्तूनि द्वित्रिगुणितमूल्ययुतानि भवन्ति । एतस्यां स्थित्यां शासनेन क्रियते आर्थिकयोग: --- अनुदानरूपे ऋणरूपे च धनानि दत्त्वा। अपि च क्रियते निर्मितवस्तूनां विक्रयव्यवस्था । परं शासनस्य एवं विधो योग: सीमितक्षेत्रस्य एव भारमधिगृहीतुं शक्नोति। यदि देशस्य सर्वे निरुद्योगा: जना: कुटीरोद्योगरता: भवेयु: तर्हि कोऽपि शासनो यन्त्रोत्पादन विरुद्धं योगं कर्तुं न शक्नोति । वस्तुत:यन्त्राणां प्रचलिते सति कुटीरोद्योगानां सत्ता न सम्भवति । लघूद्योगानां स्थापना श्रमिकाणां योग्यतार्थशक्ते: सीमाया:परे अस्ति। उद्योगानां संस्थापनार्थाय शासनेन सुलभी कृता ऋणव्यवस्थापि योग्यप्रबन्धक्षमता भावे विक्रयक्षेत्रे सुदृढस्थित्यभावे च मुधा भवति ।

कार्याभावोपचाराः हस्तोद्योगाः --

यद्यपि विश्वस्य सर्वेषां जनानां कार्याभावभावम् अपनेतुं सन्ति समर्थाः गृहोद्योगाः नान्यस्य कस्यापि प्रकारस्य उद्योगाः। तथापि सर्वेषु राष्ट्रेषु व्याप्तो यन्त्रप्रयोगव्यामोहः तान् प्रेरयति गृहोद्योगोपेक्षणकर्मणे । प्रचलिता यन्त्रोद्योगविधाऽस्ति आशु विनाशशीला मानवनाशकरी च । युद्धकालेषु रणे ध्वंसनशीलानाम् एतेषामुद्योगानां कृते आवश्यकी भवति यातायातव्यवस्था या कृषिभूमिमप्येवं न्यूनीकरोति । स्वयमनन्ता यन्त्रविद्या लोकान्ताय भविष्यतीति वयं पश्याम एव । केषुचित् वर्षेष्वेव भूगर्भीयाः धातवो निःशेषा भविष्यन्ति । असम्भवा तेषां रचना प्रयोगशालासु । का स्थितिः भविष्यति लौह तैलादीनामभावे विश्वस्य ? किमसौ प्रकृतिजयगर्वितो विज्ञानमानवः पुनः प्रकृतिमायामुपश्रित्य वर्तिष्यते ? अवश्यमेव अन्ते प्रकृतिः तेषां कृते विश्रामदायिनी भविष्यति नान्योऽन्यावा ।

प्राचीना सुखदा स्थितिः ---

अतः संख्यातीतार्धपूरितोदराणाम् अर्धनग्नदेहानां च हिताय, यन्त्रप्रयोगान् परितः सीमासु आबध्य, गृहोद्योगाः संस्थापनीयाः। न हेयो यन्त्रप्रयोगः । तदपि कर्तव्यःपरं कार्यसौकर्याय कलायै च । न परवृत्ति हरणाय--- एको भूत्वा पञ्चदशव्यक्तिकर्मकरणेन । यदि वयं स्वकीयां भारतीयग्रामरचनां पश्यामः तर्हि प्रायः सर्वे ग्रामाः स्वावलम्बिनो दृश्यंते।महत्सु राष्ट्रसंकटेष्वपि तेषां कर्माणि अवसादं न विन्दन्ति। एके ग्रामे तैलकारः, रथकारः, लौहकारः, नापितो, मालाकारः, तन्तुवायः, कुविन्दः , चर्मकारः, रजकः, ब्राह्मणाः, क्षत्रियाः, वैश्याः, कुम्भकारः, पत्रपात्रकारः,मेत्ता, शाक्याः, स्वर्णकारः, मेषपालः इत्यादयो वसन्ति स्म । येन ग्रामवासिनां सर्वाः आवश्यकताः ग्रामे एव सुलभाः सन्ति । यः कोऽपि कर्मकारः स्वग्रामे न वसति स्म सो निकटस्थग्रामेषु सुलभः आसीत् । भवति स्म च सौजन्येन वस्तुविनिमयः। राष्ट्रीययुद्धैः राष्ट्रस्य अर्थतन्त्रो न भवति स्म प्रभावितः। पारस्परिकविनिमयाबद्धास्ते स्वाभिमानपूर्णं सुखजीवनं

जीवन्ति स्म । नासीत्तदा कर्माभावो दुःखहेतुः । सुदृढसंगठितशासनाभावे
सिञ्चनव्यवस्था नासीत् स्थायिनी, यस्माद्धेतोः कृषिः वर्षाधीनासीत् ।अतस्तैः
दृष्टाः बहवो दुर्भिक्षाः। वर्षाभावे अद्यापि प्रायः सैव स्थितिः भवति परन्तु
यातायातसुविधा तां परिस्थितिमपैति । अन्नायातद्वारा । अतीते समापतत्स्वपि
दीर्घकालिकेषु दुर्भिक्षेषु देशस्य आर्थिकी स्थितिः दीनतां न गता तथा
यथाद्य विज्ञानतारुण्ये सत्यपि दृश्यते । कार्याभावस्येयं विषमा स्थितिःन
केवलम् अस्माकं देशे अस्ति अपितु विश्वस्य विकसितराष्ट्रेष्वपि अनुदिनं स्वमहिम्ना
महीयतेमहदुद्योगानां प्रभावात् ।

<u>दुर्दशा हेतवः</u>

१- <u>कार्याभावः</u> - कार्याभावस्य समस्या कस्मिंश्चिदपि देशे लघुमहदुद्योगैः अन्तं न गमिष्यति कथमपि। सा तु गृहोद्योगानुबद्धास्ति। नाहमत्र वदामि तेषां महदुद्योगानां सर्वथा नाशाय परं यदि तैः उत्पादितानि वस्तूनि गृहनिर्माणयोग्यानि सन्ति तर्हि अवश्यमेव तेषामुत्पादनानि गृहेष्वेव भवितव्यानि। न कस्यापि यन्त्रस्य गृहोत्पत्तिः असम्भवा सिद्धं यथा इटलीस्विटजरलैण्डराष्ट्रयोःघटिकोद्योगेन । अतीते अस्माकं देशे यानादीनां निर्माणकार्यं गृहेष्वेव सम्पाद्यते स्म । अद्यापि तथासम्भवति परं यन्मोहाच्छन्ना बुद्धिः महदुद्योगनिहितं नाशं पश्यन्ती अपि न पश्यतीतीव समाचरति । भौतिकं सुखमिच्छद्भिः शक्तिस्वातन्त्र्याऽऽनन्दं कामयमानैः राष्ट्रैः ग्रामेषु स्वावलम्बिनी अर्थ परम्परा संस्थापनीया ।ग्रामीणानां सर्वाः आवश्यकताः ग्रामे एव पूरणीयाः भवितव्याः। तथा च कर्तुं ते शक्नुवन्ति परं न हस्तवस्तु-प्रयोगज्ञताभावे। गृहोद्योगेषु श्रमस्य एकरूपता श्रममूल्येषु स्वाभाविकीं एकरूपतां जनयति । यस्माद्धेतोः अत्र उचितपारिश्रमिकस्य समस्या जन्म न लभते । भवन्ति तत्र प्रायः सर्वेषां समानाः आवश्यकताः, समानाश्च कार्यगतयः। अतस्ते सर्वे स्वोचितं पारितोषिकं समधिगच्छन्ति स्वतः। भवति तत्र विनिमय विक्रयक्षेत्रः सीमितः अतः उचितपारिश्रमिकस्य प्राप्तौ मानवता मानवव्यवहारश्चापि सहायको भवति यस्य औद्योगिकक्षेत्रे दर्शनं नोपलभ्यते । विश्वकर्मणामियं कार्याभावसमस्या सर्वथा गृहोद्योगपारगा अस्तीति निष्कर्षः संप्राप्यतेऽत्र । विश्वकर्महिताय वर्गाय

च वर्तमानो योगव्यवस्था शनैः शनैः गृहोद्योगव्यवस्थायां परिवर्तनीया। गृहद्योगैः निर्मितानि वस्तूनि तावद् विश्वविक्रीकेन्द्रेषु प्रेषणीयानि । प्रकृतिपुत्रो हि मानवः। अतः प्रकृतिरक्षणे निहितोऽस्य रक्षणः। रक्षिता प्रकृतिः रक्षति नाशिता च नाशयति यथा च वयमनुभवामः प्रतिदिनम् । विश्वकर्महिताय विश्व-हिताय च नान्यो मार्गो भूतो न भविष्यति। अन्यथा दुःखहेतुः कार्याभावो वृद्धिं प्राप्स्यति ।

२- ऋणभारः --

तत्र द्वितीयो दुःखहेतुः ऋणभारः। द्वे ऋणभारहेतू । व्यक्तिकृतापव्ययः कार्याभावश्च। अद्य यन्त्रप्रयोगैः निरुद्योगी कृताः लौहकाराः, कुविन्दाः, चर्मकारादयश्च आजीवनम् ऋणभारमुद्वहन्तः सीदन्ति। धनाभावे तेषां पुत्रादयो जीवनोपयोगिनीं शिक्षां न प्राप्नुवन्ति। केचिद् औद्योगिकप्रशिक्षण केन्द्राः शासनेन धनिकैश्च संस्थापिताः दृश्यन्ते। परं तत्रापि प्रवेशहेतुः धनं, जातिवादः, पक्षपातो वा भवति। सत्यपि प्रशिक्षिते स्वोद्योगाय धनाभावमनुभवन्ति। शासनदत्तम् ऋणम् उद्योगारम्भदशायाम् अभीष्टफलाय न कल्पते --- व्यापारक्षेत्रे स्थायित्वस्य प्रागेव ऋणदानावधिः प्रारभते ।

हीना शिक्षाव्यवस्था

वर्तमानशिक्षाविधिस्तु मात्र धनशक्तिसम्पन्नाशाय कल्पते, न नरदेशसमाज-हिताय । अनाचार्याः दासवृत्तयः ,कर्मार्थकर्तव्यचौराः, विद्याव्यसनशून्याः, जातिवर्ग विद्वेषजनकाः( छात्रेषु स्वजनेषु च ) आचार्याः प्रधानाचार्याश्च सुखीसमाज-रचनाक्षमाः सन्ति । वर्धमाना अनुशासनहीनता तेष्वमुक्तदुर्गुणानां प्रमाणपत्र-रूपास्ति यया समाजः शासनाश्च अतीव चिन्तितो दृश्यते । स्वानुभूतिम् आधारीकृत्य विश्वासपूर्वकमहं वक्तुं शक्नोमि यच्छात्रेषु अनुशासनहीनतायै शतप्रतिशतरूपेण पारस्परिक-वैमनस्यान्धाः आत्यहंस्वार्थादिभिः भावैः प्रेरिताः केचिदाचार्यप्राचार्याः सर्वत्र उत्तरदायिनो भवन्तीति । व्यवहारे, सम्वत्सरे अशीति दिनानि यावद् अध्यापकाः, आचारादर्शहीनाः, दासवृत्तिकासाः अतः स्वाभिमानशून्याः( लोकशिक्षाकेन्द्रेषु) कांश्चिदपि संस्कारान् छात्रेषु न वपन्ति । वस्तुतो विद्याढ्याः चरित्रहीने

अपूर्णविषयज्ञान एव स्वकर्तव्यस्य इति मन्यन्ते । सर्वथा अनुकृतिपरकाणि परीक्षाफलानि तेषां कार्यमापकानि सन्ति । तत्रापि शिक्षानन्तरं जीविकार्थं सेवाकार्याणि अनुसन्धातुं विवशा भवितव्यानि धनजातिसंस्तुतिगम्यानि सन्ति अपि न ज्ञानगम्यानि।

परिवर्तनीया शिक्षापद्धतिः ---

एवं यन्त्रहतौ विश्वकर्मा कथमपि शान्तिं नोपैति तथा शिक्षितं निरुद्योगिनं पुत्रं वीक्ष्य । तेषु शान्तिः हर्षश्च तदैव पदं करिष्यति यदा एतेषु विद्यालयेषु वर्णधर्मं शिक्षणेनसह प्रकृतिगामिनी, फलार्थं कर्मयन्त्रचतुरा गृहोद्योगशिक्षा प्रचलिता भविष्यति। तदैव ते कार्यभावैःमोदमाना: ऋणभारात् अपनेष्यन्ति । अन्यथा भूमिदानेन, धनिकवित्तवितरणेन अनुदानेन, ऋणदानेन, सेवादानेन वा तेषु वास्तविकमोदो न भविष्यति । मृगमरीचिका प्रदर्शनेन सदा बाधिः कांश्चित् वृद्धिमनुभविष्यति, न समस्यान्तं गमिष्यति कोऽपि शासनः। उद्योगशिक्षणदृष्ट्या अस्माकं प्राचीना वर्णव्यवस्था पद्धतिः सर्वथा उपयुक्तासीत् । जीविकार्जनप्रशिक्षणाय नासीत् कापि आवश्यकता विद्यालयानाम् । मन्दिरो विद्यामन्दिर आसीत् पिता च गुरुः । विद्यालयं विना पि अद्भुत कलानैपुण्यम् आगरानगरस्य प्रासादराजः , इन्द्रप्रस्थस्य लौहधुरी, मिश्रदेशस्य पिरामिडाः, अजन्तैलोरागुहाः ढाकानगरस्य वयनविद्या विज्ञापयति । उद्योगशिक्षा गुरुकुलविषयेषु नासीत् पुरातनयुगे । तस्यै आवास एव उपयुक्तः शिक्षामन्दिरः आसीत् । परमद्य विद्यालयाः नाम्नैव अवशिष्टाः सन्ति । तेषामन्तः करणानि हेयानि म्लानिमलिनानि च सन्ति । तेषु मानवनिर्माणक्षमता न वर्तते । जातास्ते उपद्रवकेन्द्राः राजनीतिकेन्द्राश्च । अतो न तेषामौद्योगीकरणमपेक्ष्यते यो सामान्यधर्मेतिहासभूगोलादीनां शिक्षणेन सह । मेधावीछात्रान् अन्येभ्यः पृथक् कृत्वा विशिष्टयोग्याचार्याणां संरक्षणे अध्यापयेत् । अनेनैव मार्गेण वर्गविद्वेषो निर्धनता च दूरी भविष्यति । अन्यथा द्वावपि वर्धमानौ विनाशान्तं प्रापयिष्यतः ।

कृष्युद्योगश्रमिणाम् अर्थतुलना ----

अस्ति यद्यपि आर्थिकदृष्ट्या औद्योगिक श्रमिकाणां स्थितिः ग्रामीण श्रमिकाणामपेक्षा सुदृढास्ति सततकार्यसुलभत्वात् ।अत्र केषांश्चिद्राज्यानां

कृष्यौद्योगिकश्रमिकाणां प्रतिव्यक्तिः औसतपारिश्रमिकः वस्यमणितक्रमेण रूप्यकेषु दीयते कृषिसमीक्षिणी समित्यनुसारम् (१९५०-५१) ---

| राज्यनाम | आयःकृषिश्रमिकस्य | औद्योगिकश्रमिकस्य | कृ०श्र० आयः औ०प्रतिशत |
|---|---|---|---|
| पश्चिमीबङ्गे | १६० | २६८ | ५६ |
| बिहारप्रान्ते | ११६ | ३३२ | ३६ |
| मध्यप्रदेशे | ८७ | २६२ | ३३ |
| उत्कले | ७९ | १४५ | ५४ |
| पञ्चनदे | १२१ | २१६ | ५६ |
| मुम्बईप्रान्ते | ८८ | ३६८ | २४ |

( एल०एम० राय: : भा०अर्थ०पृ०४२७)।

राष्ट्रीययोजनायोगस्य विवरणे प्राध्यापकःश्री रङ्गा कृषिश्रमिकाणां संख्या दशकोटिः यावत् कथयति। जनवृद्ध्या सह इयं संख्यापि प्रतिदिनं वर्धते । इदानीमियं संख्या त्रयोदशकोटिः चतुर्दशकोटिः वा भविष्यति । एतेषु अर्धाधिकाः सर्वथा भूमिहीनाः सन्ति । एतेषां संख्यापि पारिवारिक विभाजनेन ऋणदानेन च वर्धते एवानुदिनम् ।

त्रिविधाः कृषिश्रमिकाः ---

(१) लौहकारादयः कृषियन्त्रकाराःरजकादयश्च कर्मकाराः ।

(२) मासिकवेतनभोगिनः

(३) दैनिकवेतनभोगिनश्च

तत्र प्रथमाणां पारिश्रमिकोऽन्नरूपे दीयते यश्च पूर्वं निश्चितो भवति। अन्येषां पारिश्रमिकः तेषामिच्छानुसारं दीयते ,परं प्रायः रूप्यकेषु एव। प्रथमप्रकारस्य श्रमिकैः कार्यसापेक्षकालएव दीयते । परन्तु अन्येषु यदा कदा द्वादशहोराः यावत्कालो दीयते । तथापि अथ तेषु कृषकाणां मृदुतरो व्यवहारो दृश्यते । नास्ति कोऽपि कृषिश्रमिकाणां संघः। अतस्तैःनजीवनयापिनीवृत्तिः प्राप्यते श्रमाय ।

वृद्धे: सति पुत्रा: भवन्ति अन्नदायिन:। अपुत्राणां वृद्धावस्था भवति अतिकष्टकरी अन्नाय श्रमशक्त्यभावे। संगठनाभावे वर्धितेष्वपि वस्तुमूल्येषु महत्प्रयासै: वर्ध्यते श्रमू श्रममूल्य: । अन्यथा प्रतिमासवर्धितमूल्यवत्सराणि यापयन्ति विना श्रममूल्यवृद्धिं कंकालशरीरं वहन्त:।

<u>अपूर्णश्रममूल्यानां प्राप्ति: ---</u>

औद्योगिकश्रमिकाणां सन्ति अनेका: संघा:। सर्वेषां महदुद्योगानां पृथक् पृथक् संघा: सन्ति । एकस्मिन् उद्योगे यावती संख्या उद्योगशालानां भवति तावन्त: एकाकिसंघा: भवन्ति । चीनीलौहवस्त्रकाचादीनां महदुद्योगानां राष्ट्रीयस्तरे संघा: सन्ति। खननवहननिर्माणकर्मरतानां सर्वविधानां श्रमिकाणाम् एको महान् राष्ट्रीय: संघोऽस्ति । सर्वे संघा: श्रमिकाणां हितचिन्तनाय भवन्ति। निष्कासित-श्रमिकाणां पुनर्नियोजन प्रयासा: क्रियन्ते तै: वैधानिकरीत्या अहिंसकान्दोलनैश्च । कार्याभावे निष्कासितानां कृते अन्यत्रनियोजनप्रयासा: क्रियन्ते । उपयुक्तलाभांशाय यतन्ते । भविष्यनिध्यावासादीनां सुविधानां प्राप्तये प्रयतन्ते एते संघा:। मूल्यानां वर्धिते सति वेतनवृद्धियाचना क्रियते ।आन्दोलनात्मकरीत्या प्रयासा: क्रियन्ते निष्फले जाते याचनायाम् ।यद्वा कार्यस्थगनघोषणा क्रियते । तथापि तै: उचितं श्रममूल्यं न प्राप्यते ।

गतवर्षेषु मूल्यवृद्ध्या सह नैकवारं नानासंघै: पृथक् पृथगवसरेषु, एकीभूय अथवा समस्याभेदात् पृथक् पृथग्रूपेण, वेतनवृद्धिहेतवे सफला: ऐतिहासिका: प्रयासा: कृता:। तथापि अद्यावधि: तेषां श्रममूल्या: न्यूना: सन्ति सुखजीवनाय । धनिकै: न्यूनतमं श्रममूल्यं दीयते । कार्याभावे एकं कार्यं कर्तुं नैका: जना: उत्सुका: प्राप्यन्ते । अतस्तेषु यो जनो न्यूनतमं श्रममूल्यं स्वीकरोति तस्मै कार्यं दीयते। एवं ते श्रममूल्यं न प्राप्नुवन्ति। अर्थशास्त्रविद्भि: विभिन्नसमयेषु उचित-श्रममूल्यसिद्धान्तस्य प्रतिष्ठायै विविधा: प्रयासा: कृता: परं तत्र कापि सन्तोषप्रदा सफलता हस्तगता नाभवत् ।

अत्र केचिच्छ्रममूल्य सिद्धान्ताः

१- श्रममूल्यस्य लौहसिद्धान्तः ---

अयं सिद्धान्तः युगश्रवणादित्यतमे ख्रीष्टाब्दे कृषकाणां दुरवस्थां वीक्ष्य प्रकृतिवादिभिः फ्रान्सदेशस्य अर्थशास्त्रिभिः प्रतिपादितः । तदनुसारं धनिकैः श्रमिकाय तावदेव श्रममूल्यं दीयते यावदनेन तस्य परिवारपोषणं सम्भवति एतो न्यूनमूल्ये श्रमिकोऽपि कार्याय उद्यतो न भवति । अत एव जर्मनार्थशास्त्रिणा लासले महोदयेन , अतः पूर्वं जीवनरक्षणसिद्धान्तनाम्ना प्रथितेनं सिद्धान्तं,लौह-सिद्धान्त इति नाम्ना प्रचारितः। परमयं सिद्धान्तो नास्ति व्यावहारिकम् । यतो हि एनं सिद्धान्तमनुसरन्तो धनिनो न्यूनपरिवारस्य श्रमिकं कार्याय आकारयिष्यन्ति यद्वा बहुश्रमिकयुक्तस्य परिवारस्य श्रमिकान् । न च कदापि व्यवहार एवं दृश्यते । तथापि सामन्तवादिनि युगे एतादृशी भावनापि श्रममूल्यनिर्धारणे क्रियाशीलासीदिति सम्भवति । परमद्य कृषिश्रमिकः त्रिसदस्यीयं परिवारमेव पालयितुं शक्नोति स्वश्रममूल्येन। पञ्चसदस्यीयश्च आयोगिकश्रमिकः।

२- श्रममूल्यस्य जीवनस्तरीयः सिद्धान्तः ---

श्रमिकः स्वजीवनस्तरानुसारं न्यूनतमं श्रममूल्यं स्वीकरोतीति प्रतिपाद्यते अनेन सिद्धान्तेन। परन्तु मूल्यनिर्धारणे उभौ पक्षौ न्यूनाधिकमात्रायां प्रायः समान-रूपेणैव उत्तरदायिनौ भवतः। प्रायः श्रमस्य प्रचलितं मूल्यं दीयते तत्र जीवनस्तरः प्रभावहीनो भवति । प्रचलिते श्रममूल्ये न्यूनाधिक्यं कार्यक्षमता योग्यता च मिलित्वा जनयतः। यदि समभविष्यद् एष सिद्धान्तः सत्यः तर्हि वर्णविभाग्य परम्परा सनातनी अभवत् ।

३- सीमान्तोत्पादकतायाः सिद्धान्तः ----

यथा वस्तुमूल्यं तस्य सीमान्तोपयोगितायाः समं भवति तथैव श्रमिकस्य सीमान्तोत्पादकतायाः समः तस्य पारिश्रमिको भवति यं दातुमुद्यतो भवति उद्योगपतिः। अयं तत्र सिद्धान्तः। परं न तु सीमान्तोपयोगिता वस्तुमूल्यस्य एकैव निर्धारिका भवति न च सीमान्तोत्पादकता पारिश्रमिकस्य । सर्वेषु व्यक्तिषु

रुच्यर्पणाभेदात् सीमान्तोपयोगिता स्वभेददृष्ट्या व्यक्तिसंख्यागामिनी भविष्यति, वस्तुमूल्यस्याशेषात् अवाच्यम्। तच्च न दृश्यते व्यवहारे।वस्तुमूल्यम भियाचनापूर्तिभ्याम् , उत्पादनव्ययेन वस्तुस्थायित्वेन दशया च , निर्धारितो भवति। सीमांतोपयोगिता हट्टभावात् कासुचित् अवस्थास्वेव प्रभावयति न्यूनामात्रायाम् --- विक्रेतु: लाभांशं न्यूनी कृत्वा ।

एवमेव सीमान्तोपयोगितापि श्रममूल्यनिर्धारणाय न भवति ।यद्येवं मन्यामहे, तर्हि: अत: प्राग्वर्तिभ्य: उपयोगिता: वृद्धश्रममूल्येभ्यो भविष्यन्ति तत्र चादिश्रमिको महोच्चश्रममूल्यहेतु: भविष्यति । तथा च न दृश्यते व्यवहारे । उत्पति: यन्त्रसंख्यानुसारं नियोजयति श्रमिकान्। तेषां नियोजनेन प्राप्यमाणितानुमानितम् उत्पादनम् अभिलक्ष्य धनिको हट्टेषु वस्तुमूल्यं ( प्रचलितं), कार्यप्रकारं, योग्यतांचापि सम्पश्यन् श्रममूल्यं निर्धारयति उद्योगसञ्चालनात् प्राक् ।

४- समयप्रभावितं श्रममूल्यम् ----

श्रमयेन कृषिश्रमिकाणां श्रममूल्यं भवति प्रभावितम्।उद्योगक्षेत्रेषु समयवर्धितानि वस्तुमूल्यानि प्राय: हट्टकालानन्तरं श्रममूल्यानि वर्धयन्ति। कृषिश्रमक्षेत्रेषु श्रममूल्यप्रभावकारिषु तत्त्वेषु समयोऽपि एको भवति। न पुन: मूल्येश:।

५- कार्यप्रभावितं श्रममूल्यम् --

श्रममूल्यस्य निर्धारणे कार्यप्रकार: महत्त्वपूर्णां भूमिकाम् आपादयति। कार्ये प्रयुक्त: श्रम: कार्यगौरवं व्यनक्ति। स च कार्यगौरव: श्रममूल्यंप्रेरयति। कार्यमपि श्रममूल्यनिर्धारकेषु तत्त्वेषु एकोऽस्ति।

समयानुसारं प्राप्यं श्रममूल्यम् --

उपर्युक्ता: श्रममूल्यसिद्धान्ता: यथार्थरूपेण कुत्रापि श्रममूल्यनिर्धारणे अक्षमा:सिद्धा: भवन्ति।सन्ति वर्धनशीलानि वस्तुमूल्यानि । अस्मिन् युगे तु वस्तूनां हट्टा: विश्वविस्तृता: सन्ति । अत:यदा कदा वस्तुमूल्यानि अप्रत्याशितरूपेण वर्धन्ते। पारस्परिकलाभाय शासकानाम् उद्योगेशानां च मैत्री अपि , कृत्रिमं वस्त्वभावं

दर्शयित्वा, वस्तुमूल्यानि वर्धयति । एतस्याम् अवस्थायां मिश्रकर्मणां शिवाय वस्तुमूल्य सापेक्ष श्रममूल्यसिद्धान्तस्य महती आवश्यकता वर्तते । एतादृशस्य सिद्धान्तस्य अभावे तेषां शरीरयात्रा: दुःख यात्रा: भविष्यन्ति । यदि वयं सामान्यपरिवारस्य सदस्य संख्या वयं पञ्च इति स्वीकुर्म: तर्हि मासिकव्ययहेतवे त्रिशतरूप्यकाणाम् आवश्यकता भविष्यति साधारणजीवनयापनाय ।अस्य परिवारस्य सामान्यानुमानितो मासिको व्यय एवमस्ति ----

| वस्तूनि | परिमाणा: । | प्रचलितमूल्यानि | देयरूप्यकाणि |
|---|---|---|---|
| गोधूमा: | १२० सहस्रग्रामा: | १००रु० | १२०रु० |
| सूप: | २० ,, | २-५० रु० | ५०रु० |
| तण्डुला: | १० ,, | १-५० रु० | १५ रु० |
| शाका: | १० ,, | ०-८० रु० | ८रु० |
| पय: | १५ ,, | १-५० रु० | २२-५० रु० |
| वस्त्रम् | ६ शतमापका: | २-५० | १५-०० |
| तैलादिकिम् | -- | -- | १५-०० |
| बांधव्य: | -- | -- | १०-०० |
| गृहशिक्षादिकार्येषु | -- | -- | ४०-०० |
| | | | २९५-५० |

एवं सामान्यमानवजीवनयापनाय अकुशलकृषिश्रमिकायापि दैनिकश्रमाय दशरूप्यकाणि अपेक्षितानि सन्ति । परमस्माकं देशे स्नातक: स्नातकोत्तरो वापि बहुधा उक्तं श्रममूल्यं न प्राप्नुवन्ति, का कथा पुन: अकुशलकृषिश्रमिकाणां मृत्वा भारवाहकानाम् । प्रगतिप्रिये देशे कार्यव्यवस्था नागरिकाणां रुचिसामर्थ्य-योग्यतानुसारं भवितव्या:। श्रममूल्यं प्रचलितवस्तु मूल्यसापेक्षं भवितव्यम् । अन्यथा वर्धमानोऽसन्तोष: क्रान्तिहेतु: भविष्यति --- रक्तमयीक्रान्तिहेतु:। कस्यापि देशे सेवाकर्मनियोजने क्रियमाणा रुचिसामर्थ्ययोग्यतापेक्षा--- जात्यर्थसंस्तुतिमाश्रित्य-- अन्ततो गत्वा राष्ट्रनाशाय भवति ।

